हतां वनतनायनिमामिति नस्य लोपः बड़मूर्द्धावड़मस्तकाम् एवं द्विमूर्द्धान् त्रिमूर्द्धान् द्वित्रेर्मूर्द्ध इति षः न्वोर्लोपोताविति नस्य लोपः वक्रशब्दोविपुलार्थस्तुङ्गादिसंख्यार्थकोवा अतएव भीमान् भयङ्करान्॥ ४१॥

तैर्वृक्णरुग्णसंभुग्नचुण्णभिन्नविपन्नकैः। निमग्नोद्विग्नसंह्रीणैः पप्रे दीनैश्च मेदिनी॥ ४२॥

ज॰म॰ तर्ह्रे। तैः राक्षसैर्मेदिनी पप्रे पूरिता प्रापूरण इत्यस्मात्कर्मणि लिट् वृक्णैः छिन्नैः रुग्णैः भग्नहस्तपादैः संभुग्नैः वक्रीकृतदेहैः चुण्णैः सम्पिष्टशरीरैः भिन्नैः विदारितैः विपन्नकैः नष्टैः अनुकम्पायां कन् निमग्नैः परिभूतैः उद्विग्नैर्भीतैः संह्रीणैर्लज्जितैः वयमपीदृशीन्दशां प्राप्ता इति दीनैः हा मातः हा भ्रातरित्येवमाषमाणैः तत्र वृश्चिरुजिभुजिमस्जिविजिभ्योनिष्ठायामोदित्त्वेति नत्वम् चोःकुरिति कुः चुदिभिदिपदिभ्योरदाभ्यामिति दस्य नः संह्रीण इति नुदविदेत्यादिना ह्रीङ्च्ये इत्यस्य स्वादय ओदित इत्योदितस्येति नत्वम्॥ ४२॥

भ॰ तैरित्यादि। तैराक्षसैर्मेदिनी पप्रे परिता पॄलिपूर्त्तौ कर्मणि ठी कीदृशैः वृक्णैः छिन्नैः वृस्चेः कुङ्घेति कस्य नत्वं कुङ्च चस्य कत्वे तत्रि मित्तस्य शस्य सत्वे स्वादेःशोलोपः षहस्तपादोरिति जिः रुग्णैर्भग्नहस्तपादैः रुजोग्रोभङ्गे ओदित्वात् स्वाद्योरिति कस्य नः जस्य गत्वविधानं मग्नस्य दोर्भिर्भुवनस्य भारमित्यत्र व्याख्यातं संभुग्नैर्वक्रीकृतैः भुजोग्रोवक्रणे पूर्ववत् चुण्णैः संपिष्टदेहैः चुदिरसंपेषणे

दाक्तत्वात् सत्वाद्योरिति क्तस्य दस्य च नः पूर्वोऽदान्तेत्यादिना पूर्व्वस्य णत्वे क्षुभिरिति परस्य नस्य णत्वं भिन्नैर्विदारितैः विपन्नकै र्मृतैः विपूर्व्वपदिर्मरणे वर्त्तते स्वार्थे कुत्सायां वा कः निमग्नैर्भी त्या गुप्तैः रुधिरप्रवाहे मग्नैर्व्वा उद्विग्नैर्भीतैः ओविजीभयचलन योः संक्षीणैः योद्धुमसामर्थ्यात् लज्जितैः ह्रीशिलज्जायां ह्रीघ्राघो न्देति क्तस्य नः दीनैः सुतादिदुःखान्वितैः ओदीङ्क्षये ॥ ४२ ॥

केचिद्वेपथुमासेदुरन्ये दवथुमुत्तमं। सरक्तं वमथुं केचिद्भ्राजथुं न च केचन ॥ ४३ ॥

केचित्। तेषामध्ये केचित् वेपथुं कम्पम् टुवेपृकम्पने आसेदुः ज०म० प्राप्ताः अन्ये दवथुमुपतापमुत्तममत्यन्तं टुदुउपतापे केचिद्वम थुञ्छर्दनं सरक्तं सशोणितं टुवमुउद्गिरणे भ्राजथुं शोभां नैव के चन न केचिदपि टुभ्राजृदीप्तौ सर्व्वत्र ड्वितोऽथुच् ॥ ४३ ॥
केचिदित्यादि। तेषां मध्ये केचिद्राक्षसा वेपथुं कम्पं आसेदुः भ० प्रापुः वपट्टङ्चलने अन्ये दवथुं उपतापं उत्तमं महान्तं आसे दुः टुदुउपतापे केचित् वमथुं रक्तेन सह छर्दिमासेदुः टुवमउ द्गिरणे केचन भ्राजथुं दीप्तिं नासेदुः टुभ्राजृङ्दीप्तौ सर्व्वत्र ड्विते ऽथुभावे इति अथुः ॥ ४३ ॥

मृगयुमिव मृगोऽथ दक्षिणेर्म्मा दिशमिव दाववतीं मरावुदन्यन्। रघुतनयमुपाययौ त्रिमूर्द्धा विषभृदिवोग्रमुखं पतत्रिराजं ॥ ४४ ॥

ज०म० मृग। अथैतस्मिन् राक्षसविध्वंसनप्रस्तावे त्रिमूर्द्धः त्रिशिरानाम राक्षसः रघुतनयमुपाययौ उपागतः मृगयुमिव लुब्धकमिव मृगान् यातीति मृगयुः मृगय्वादयश्चेत्यौणादिककुप्रत्ययान्तः दक्षिणेर्मा दक्षिणे ईर्म्मं व्रणं यस्येति दक्षिणेर्म्मा लुब्धयोगइत्यनिच् यथा मृगोलुब्धकव्रणितदक्षिणाङ्गः तमेव मरणायोपयाति दिशमिव दाहवतीं यथा दिशन्दावाग्नियुतामरौ निर्जले देशे मृग उदन्यन् उदकपानाभिलाष उपयाति उदकमिच्छति सुपआत्मन इति क्यच् उदकस्योदन्भावः अशनायेत्यादिना निपातितम् तदन्ताल्लट् शतृप्रत्ययः विषभृदिव यथा विषधरः सर्प उग्रमुखभीषणमुखम्पतत्त्रिराजं गरुडमुपयाति तद्वत्त्वमिति राजाहःसखिभ्यष्टच् ॥ ४४ ॥

भ० मृगयुमित्यादि। अथ रक्षोवधानन्तरं त्रिमूर्द्धस्त्रिशिरानाम राक्षसो रघुतनयं रामं उपाययौ उपागतः यथा दक्षिणेर्मा व्याधेन व्रणितदक्षिणाङ्गोमृगस्तमेव मृगयुं व्याधं याति तद्वत् मृगं यातीति मृगयुर्निपातनात् दक्षिणेऽङ्गे ईर्मं व्याधघातव्रणं यस्य स दक्षिणेर्मा दक्षिणादीर्मादन् व्याधव्रणितदक्षिणाङ्गे मृगेइति परसूत्रं स्वमते ईर्मन् शब्दोऽप्यस्ति किम्वा दक्षिणे ईर्म्मं व्रणं यस्येति धर्मादनित्यस्य योगविभागादन् लुब्धकयोगस्त्वभिधानात् व्रणोऽस्त्रियामीर्म्ममरुरित्यमरः यथा वा उदकपानाभिलाषी मृगो मरौ निर्जलदेशे दाहवतीं दिशं उपयाति उदकं पातुमिच्छतीति धनोदकाशनेति क्ये उनङ् शतृः यथा वा विषभृत् सर्प उग्रमुखं भीषणवदनं पतत्त्रिराजं गरुडं उपयाति ॥ ४४ ॥

शितविशिखनिकृत्तकृत्स्नवक्त्रः क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः। भयमुपनिदधे स राक्षसानामखिलकुलक्षयपूर्व्वलिङ्गतुल्यः॥ ४५ ॥

इति भट्टिकाव्ये चतुर्थः सर्गः॥

शित। त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनिहितवान् कीदृशः शितविशिखैस्तीक्ष्णविशिखैः निकृत्तानि छिन्नानि कृत्स्नानि सर्व्वाणि वक्त्राणि मुखानि यस्य सः क्षितिभृदिव भूधर इव कीदृशः क्षितिकम्पकीर्णशृङ्गः क्षितेर्भूमेः कम्पेन कीर्णानि क्षिप्तानि शृङ्गाणि यस्य क्षितिभृतः अखिलस्य सर्व्वस्य कुलस्य क्षये विनाशे यत् पूर्व्वं लिङ्गन्तेन तुल्यः अथावश्यखिलराक्षसक्षयस्य पूर्व्वलिङ्गतुल्यः ॥ ४५ ॥ जं०म०

इति भट्टिकाव्यटीकायां जयमङ्गलाख्यायां प्रकीर्णकाण्डे रामप्रवासश्चतुर्थः सर्गः॥ ४ ॥

शितेत्यादि। शितविशिखैस्तीक्ष्णवाणैर्निकृत्तानि छिन्नानि कृत्स्नानि सर्व्वाणि वक्त्राणि मुखानि यस्य स त्रिमूर्द्धा राक्षसानां भयमुपनिदधे उपनिहितवान् क्षितिभृदिव पर्व्वत इव क्षितिकम्पात् कीर्णानि विक्षिप्तानि शृङ्गाणि यस्य स तथा त्रिमूर्द्धः किम्भूतः अखिलकुलक्षयपूर्व्वलिङ्गतुल्यः अखिलस्य कुलस्य क्षयः तस्य यत्पूर्व्वलिङ्गं पूर्व्वचिह्नं भाविक्षयसूचक उत्पातस्तत्तुल्यः केचित्तु अखिलकुलस्य क्षये पूर्व्वलिङ्गं आदिचिह्नं त्रिमूर्द्धस्तादृशः पर्व्वत इत्याहुः ॥ ४५ ॥ भ०

इति मदनगौराङ्गमल्लिकात्मजश्रीभरतसेनकृतायां भट्टिटीकायां मुग्धबोधिन्यां प्रकीर्णकाण्डे त्रिमूर्द्धवधोनाम चतुर्थः सर्गः॥ ४ ॥

निराकरिष्णू वर्त्तिष्णू वर्द्धिष्णू परितो रणं। उत्पतिष्णू सहिष्णू च चेरतुः खरदूषणौ ॥१॥

ज०म० निरा। खरदूषणौ रणम्परितः समन्तात् अभित इत्यादिना द्वितीया चेरतुः भ्रान्तौ निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू अभिमुखं वर्त्तनशीलौ न पलायनशीलौ वर्द्धिष्णू मायया महाप्राणोद्भावनशीलौ उत्पतिष्णू नभउत्पतनशीलौ सहिष्णू शस्त्रप्रहारसहनशीलौ सर्व्वचालङ्कृञित्यादिना इष्णुच् ॥१।

भ० निराकरिष्णू इत्यादि। खरदूषणौ रणं परितः सर्व्वतश्चेरतुः चरगत्यां ठी धिक्समयेति परितोयोगे द्वितीया निराकरिष्णू शत्रुनिराकरणशीलौ वर्त्तिष्णू वर्त्तनशीलौ अर्थात् प्रतियोद्धृसंमुखे रणं परित इति वा अनुषञ्जनीयं वर्द्धिष्णू मायया वर्द्धनशीलौ उत्पतिष्णू आकाशादुत्पतनशीलौ सहिष्णू प्रतियोद्धृशस्त्रघातादिसहनशीलौ सर्व्वत्र जिभ्राजभूसहेत्यादिना कर्त्तरीष्णुः शीलार्थता तु ढघेशत्यव्येति सूत्रे शीलार्थे तृन्नित्युक्तं किन्तु तृणविधायकसूत्रे शीलार्थता नोक्ता अतएव तृणादयः कतिचित् प्रत्ययाः शीलार्थेऽपि भवन्तीति सूचनात् किम्वा अभिधानाच्छीलार्थतानुक्तावपि न क्षतिः निराकुरुतः शत्रूनित्यादिवाक्यं विधेयं ॥१॥

तौ खड्गमुषलप्रासचक्रवाणगदाकरौ। अकार्ष्टामायुधच्छायं रजःसन्तमसे रणे ॥२॥

ज०म० तौच। रणे रणभूमौ रजःसन्तमसे सङ्गतन्तमः सन्तमसं अव

समवान्धेभ्यस्तमस इत्यच् रजसा सन्तमसं अस्मिन् इति रजः सन्तमसन्तस्मिन् रजसा कृतान्धकारे तौ खरदूषणौ आयुधच्छायमायुधबाहुल्यमकार्ष्टाम् कृतवन्तौ आयुधानाञ्छायेति छाया बाहुल्य इति नपुंसकत्वे ह्रस्वत्वं खड्गादीनाम्बाणानान्द्वन्द्वैकवद्भावङ्कृत्वा पश्चात्तेन सहिता गदेति शाकपार्थिवादित्वात्सः अन्यथा समुदायस्य जातिरप्राणिनामित्येकवद्भावेन नपुंसकलिङ्गता स्यात् बाणगदमिति खड्गमुषलप्रासचक्रबाणगदाः करे येषामिति समासे प्रहरणार्थेभ्य इत्यादिना करशब्दस्य परनिपातः॥ २॥

तावित्यादि। खरदूषणौ रणे युद्धे आयुधानां बहूनां छायामकार्ष्टां कृतवन्तौ रणपदं रणभूमिवाचकमित्यन्ये सम्यक्तमः सन्तमसं समवान्धात्तमस इति अः रजसा सन्तमसं यत्र रणे आयुधानां बाहुल्यात् छायाशब्दस्य नपुंसकत्वमभिधानात् कीदृशौ खड्गादयः करे ययोस्तौ अकार्ष्टामिति कृञश्छांसि शजवदेति शिः भ०
॥ २॥

अथ तीक्ष्णायसैर्बाणैरधिमर्म्म रघूत्तमौ। व्याधं व्याधममूढौ तौ यमसाच्चक्रतुर्द्विषौ॥ ३॥

अथ। अथैतस्मिन् संग्रामे रघूत्तमौ रामलक्ष्मणौ कर्तृभूतौ कर्म्मभूतौ द्विषाविति सत्सूद्विषेत्यादिना क्विप् यमसाच्चक्रतुः यमाधीनौ कृतवन्तौ तदधीनवचन इति साति: तीक्ष्णायसैर्बाणैः तीक्ष्णमायसम्फलं येषामिति व्याधं व्याधं विद्ध्वा विद्ध्वा आभीक्ष्ण्ये णमुल् तच्च समानकर्त्तृकयोः पूर्व्वकाल इति वर्त्तते अभीक्ष्णे द्वे भवत इति जं०म०

द्विर्व्वचनं अधिमर्म्मेति विभक्त्यर्थेऽव्ययीभाव अमूढौ सावधानौ रामलक्ष्मणौ मर्म्मवेधमेवाह॥ ३॥

भ० अथेत्यादि। तयोर्व्विक्रमानन्तरं रघूत्तमौ कर्तृभूतौ तीक्ष्णाय सैस्तीक्ष्णफलैर्व्वाणैरधिमर्म्म जीवितस्थाने व्याधं व्याधं विद्धा विद्धा तौ द्विषौ खरदूषणौ कर्म्मभूतौ यमसात् यमाधीनौ चक्रतुः रघूत्तमौ किम्भूतौ अमूढौ रणपण्डितौ किम्वा खरदूषणौ अमूढौ अस्त्रवर्षेऽप्यसम्भ्रान्तौ मर्म्मवेधे सावधानौ वा रणपण्डितावपि वा तीक्ष्णमायसमयोविकारः फलं यत्र मर्म्म विध्यतीति कारकार्थेऽव्ययीभावः व्यधीताडे इत्यस्मात् चणम्वाभीक्ष्ण्ये इति चणम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धं कात्स्न्यीयत्योः सम्पद्यकादावित्यधीनत्वे चसात् किम्वा देयत्रायेति देयेऽर्थे चकारात् चसात् वा सुषित्यादिना द्विषः क्विप्॥ ३॥

हतबन्धुर्जगामासौ ततः शूर्पणखा वनात्। पारे समुद्रं लङ्कायां वसन्तं रावणं पतिं॥ ४॥

ज०म० हत। असौ शूर्पणखा हतबन्धुः व्यापादितभ्रातृकया ततोवनाद्दण्डकारण्यात्रावणम्पतिं प्रभुं शरणञ्जगाम गतवती पारेसमुद्रं समुद्रस्य पारइति पारेमध्येषष्ठ्यावेत्यव्ययीभावः तत्सन्नियोगेन पूर्व्वपदस्यैकारान्तत्वम्पञ्चम्यासप्तमी नाव्ययीभावादित्यभावःसमुद्रस्य पारे स्थितायां लङ्कायां वसन्तं रावणमिति॥ ४॥

भ० हतबन्धुरित्यादि। असौ शूर्पणखा हतबन्धुः सती परेण व्यापादितभ्रातृकया सती ततोवनात् दण्डकारण्यात् रावणं पतिं प्रभुं जगाम पारेसमुद्रं समुद्रपारे स्थितायां वसन्तं पारेसमुद्रमित्य

व्ययीभाव एवञ्च निपातनात् चीप्तप्रोर्व्येति सप्तम्यामः प्रतीति पाठे रावणं प्रति लचीकृत्य जगाम॥ ४॥

संप्राप्य राक्षससभं चक्रन्द क्रोधविक्लवा। नामग्रा हमरोदीत् सा भ्रातरौ रावणान्तिके॥ ५॥

सम्प्रा। सा शूर्पणखा राक्षससभं संप्राप्य ढौकित्वा राक्षसानां सभेति सभाराजेत्यादिना नपुंसकता चक्रन्द क्रन्दनकृतवती क्रोधविक्लवा क्रोधविवशा भ्रातरौ खरदूषणावरोदीत् रोदित वती नामग्राहन्नाम गृहीत्वा भ्रातरौ खरदूषणाविति नाम्ना दि शिग्रहोरिति णमुल् अत्र नामग्रहणविशिष्टाया रोदनक्रियाया व्याप्तुमिष्टत्वाद्रुदिः सकर्म्मकः रावणान्तिके रावणसमीपे सप्तम्य धिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यइति सप्तमी तयोः किञ्जा तमिति रावणेन पृष्टाह॥ ५॥ ज॰म॰

संप्राप्येत्यादि। सा शूर्पणखा राक्षससभं संप्राप्य चक्रन्द राक्ष सानां सभा राक्षससभं क्लीवत्वमभिधानात् क्रोधेन विक्लवा व्या कुला सती भ्रातरौ खरदूषणौ नामग्राहं नाम गृहीत्वा रावण स्यान्तिके समीपे अरोदीत् रुदेर्ण्यां ध्वां रुदाद्यस्विपेरितीम् पूर्व्वं क्रन्दनमुक्तं अत्र नामग्रहणमुक्तमिति भेदः अस्रुविमोचनमात्रे रुदिरकर्म्मकः शब्दयुक्तक्रन्दने तु सकर्म्मकः इति प्राञ्चः भ्रातरौ चक्रन्द आजुहाव क्रदिराह्वाने नामग्राहमरोदीदित्यन्वय इति केचित् नामग्राहमिति नाम्नोग्रहणमभिधानात् किम्वा हा खर भ॰

दूषणेति नामोग्राह्यं यद्वेति वा रोदनक्रियाया विशेषणं ग्राह्यमभ्ञन्तः ॥ ५ ॥

दण्डकामध्यवात्तां यौ वीर रक्षःप्रकाण्डकौ। नृभ्यां संख्येऽक्षषातां तौ सभृत्यौ भूमिवर्द्धनौ ॥ ६ ॥

ज॰म॰ दण्ड। हे वीर दण्डकात् दण्डकारण्यसन्निवेशात् अध्यवात्ताम् अध्युषितवन्तौ वसनिवासइत्यस्मात्लुङ् हलन्तलक्षणा वृद्धिः सःस्येत्यादिना धातुसकारस्य तत्वम् झलोझलीति सिचोलोपः रक्षःप्रकाण्डकौ प्रशस्तौ राक्षसौ प्रशंसावचनैश्चेति सः ततः स्वार्थे कन् स्वार्थिकाश्च प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तइति नपुंसको न भवति अन्यथा रूढिशब्दाः प्रशंसावचना आविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादानादेव समानाधिकरणाः स्युः यथा गोप्रकाण्डमिति तौ नृभ्यांमनुष्याभ्यां संख्ये युद्धे भूमिवर्द्धनावक्षषाताम् कृतौ कर्मणिलुङ् अचिण्वद्भावे रूपम् वर्द्धंत इति वर्द्धनौ कृत्यल्युटोबहुलमिति कर्त्तरि ल्युट् भूमेर्व्वर्द्धनाविति सः भस्मीकृतशरीरस्य भूमौलीयमानत्वात् सभृत्यौ नैकाकिना ॥ ६ ॥

भ॰ दण्डकामित्यादि। एवंप्रकारेणारोदीदित्यन्वयः वीरेति सोपालम्भसम्बोधनं यौ रक्षःप्रकाण्डकौ प्रशस्तराक्षसौ दण्डकामध्यवात्तां सभृत्यौ तौ नृभ्यां मनुष्याभ्यां संख्ये संग्रामे भूमिवर्द्धनौ अक्षषातां कृञः कर्मणि टौ इगुङ्ग्भ्यतीति कित्वाच्च गुणः शवस्यचितिवर्द्धन इति चिकाण्डशेषः अरण्ये दण्डकाशब्दः स्त्रीलिङ्गः

कार्योध्यायाः पुनरुपगमोदण्डकायां वने व इति भवभूतिः दण्ड कानिति पाठे दण्डकारण्यसन्निवेशानित्यर्थः केचित्तु दण्डकाशब्दः स्त्रीलिङ्गबहुवचनान्त एव इत्युक्ता दण्डका इति प्रशस्तं पठन्ति अध्यवात्तामिति अधिपूर्व्वाद्वसेष्टीतां थांसिः सत्यरे इति सस्य तः अनिमृलात् प्रिः रक्षसां मध्ये प्रकाण्डकौ प्रशस्तौ एकार्थत्वात् कर्म्मधारयोवा समासे विशेषणमपि परं स्यात् प्रशंसावचनैश्चेति परसूत्रं यद्यपि प्रकाण्डमुद्भतल्लजाविस्यमरेणोक्तं दृश्यते च गो प्रकाण्डमित्यादावजहल्लिङ्गता तथापि कप्रत्यये सति स्वार्थिकाः प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तेऽपीति न्यायात् पुंस्त्वं वस्तुतस्तु पुंलिङ्गोऽपि प्रकाण्डशब्दोऽस्ति निगडाक्रीडनलप्रकाण्डकाण्डा इति पुनपुंसकवर्गे हेमचन्द्रः उद्घप्रकाण्डौ द्वौ प्रशंसायामिति हलायुधः भूमिं वर्द्धयत इति नन्द्यादित्वादनः ॥ ६ ॥

विग्रहस्तव शक्रेण वृहस्पतिपुरोधसा। सार्द्धं कुमा रसेनान्या शून्यस्त्वासीति कोनयः ॥ ७ ॥

विग्र। वृहस्पतिः पुरोधा मन्त्री यस्य शक्रस्य तेन कार्य्येषु पुरा धीयत इति पुरोधाः पुरःपूर्व्वाद्धाञः सर्व्वधातुभ्य असुन् तथा कुमारः कार्त्तिकेयः सेनानीर्य्यस्य सेनाम्नयतीति सत्सूद्विषेत्या दिना क्विप् तेन शक्रेण सह सार्द्धं तव विग्रह आसीत् इदानी त्वार्थ्यनिपुणाभावात् शून्यस्त्वासि तासस्त्योर्लोप इति सकारलोपः नयात्कोनयः नय एव न भवतीत्यर्थः तदेव दर्शयन्नाह ॥ ७ ॥ ज०म०

भ॰ विग्रह इत्यादि। प्रक्रोण माद्वं तव विग्रहविरोधस्तथापि त्वं शून्यः कार्य्याकार्य्यविचाररहित एवासि इति कोनयः न कापि नीतिस्तवेत्यर्थः किम्भूतेन बृहस्पतिपुरोधसा बृहतां देवानां गुरुत्वात्पतिः बृहस्पतिर्मनीषादित्वान्निपातः स पुरोधाः पुरोहितो यस्य कुमारः कार्त्तिकेयः सेनानीः सेनापतिर्यस्य सेनां नयतीति क्विप् कथ्याद्यनेकाच इति यत्वं लोपोऽव्योर्वलीति अस्तेःसौ स लोपः॥ ७॥

यद्यहं नाथ नायास्यं विनसा हतबान्धवा। नाभ्या स्यत्त्वमिदं सर्व्वं प्रमाद्यंश्चारदुर्व्वलः॥ ८॥

ज॰भ॰ यदी। विनसा विगता नासा यस्याः नासैव नासिकेति कोष इति शुक्ले रूपम् तस्या नसादेशस्य विधीयमानत्वात् अत्र नस्यैव एव नास्ति विनसेति पाठान्तरम् तत्र विगता चासौ नासिका च विनासिका तत इत्थम्भूतलक्षणायांस्तृतीयायां पद्दन्नोमास्हृत्यादिना नसादेशः विगतया नासिकयोपलक्षितेत्यर्थः विगता नासिका अस्या इति बहुव्रीहिणा व्याख्याने अञ्नासिकेत्यादिना अञ् नसादेशस्य प्राप्तुतः तस्य संज्ञाविषयत्वात् उपसर्गाचेत्यसंज्ञायां विधीयमानो न भवति वेर्ग्रोवक्तव्यइति ग्रादेशो वाधकः हे नाथ यद्यहं विनसा हतबान्धवा नायास्यन्नायातानाभविष्यम् तदा तदिदं सर्व्वंभ्रातोर्व्वधनासाच्छेदस्य नाभ्यास्यः न ज्ञातोऽभविष्यः क्रियातिपत्तौ लिङ् अज्ञाने कारणमाह प्रमाद्यन् विषयेषु प्रमादङ्कुर्व्वन् चारदुर्व्वलः चारहीनः चाराहि चतूरा ज्ञाकार्य्याकार्य्यज्ञानाय लोके चरतीति चरः पचाद्यच् चर एव चारः प्रज्ञादित्वादण्॥ ८॥

यदीत्यादि। हे नाथ विनसा हतबान्धवा च सती यद्यहं नाथा भ॰
थं तदा त्वमिदं सर्व्वं पूर्व्वोक्तं नाज्ञास्यः यास्याभ्यां ध्वर्थासम्भवे थी
अज्ञाने हेतुमाह प्रमाद्यन् विषयेषु अनवधानतां गच्छन् यन्यो
प्रमादीति प्रमादित्वाद्दीर्घः प्रमादोऽनवधानता चारेण दुर्व्वलो
हीनः राजा चरैर्जगत्कृत्स्नं प्राप्नुयाल्लोकसम्मतैरिति हि शास्त्रं
विनसा इति विगता नासा नासिका यस्याः सा विनसा केचित्तु वि
गतया नासिकया उपलक्षिता विशेषणे तृतीया पादद्न्नोति नसा
देश इत्याहुः बन्धुरेव बान्धवः चर एव चारः स्वार्थे ष्णः॥ ८॥

करिष्यमाणं विज्ञेयं कार्य्यं किन्नु कृतं परैः। अप
कारे कृतेऽप्यज्ञो विजिगीषुर्नवा भवान्॥ ९॥

करि। परैः शत्रुभिरपचयचिकीर्षया करिष्यमाणकार्य्यं वि ज॰म॰
ज्ञेयम् किन्तु कृतमेव यत्तदवश्यमेव विज्ञेयमित्यर्थः त्वम्तुनः परै
रपकृतोऽपि अज्ञोऽविदिंतस्वरूपः अतोविजिगीषुर्नवा भवान्
युष्मां न राज्यं सम्भावयतीत्यर्थः॥ ९॥

करिष्यमाणमित्यादि। परैः शत्रुभिः करिष्यमाणमपि कार्य्यं भ॰
विज्ञेयं ..र्विजिगीषुणा किन्नु कृतं तदवश्यमेव विज्ञेयमित्यर्थः
परैः कृतेऽपि अपकारे भवान् अज्ञः अतो भवान् नवा विजिगीषुः
जेर्गिःसनयोरिति गिः आनातीति ज्ञः कृगृज्ञाप्रीति कः उसेची
त्यादिना आकारलोपः आदन्तात् जेनेष्टसिद्धौ कृगृज्ञादत्वाच
आयहणेन इनजनादित्यस्य उपपदस्यैव विषयः कृगृज्ञा इत्य
स्य तु उपपदेऽनुपपदे च विषय इति ज्ञापितं वाशब्द आक्षेपे
प्रश्ने वा॥ ९॥

वृतस्त्वं पात्रसमितैः खट्वारूढः प्रमादवान्। पान
प्रोपड्ःश्रियं नेता नात्यन्तोनत्वमुन्मनाः॥ १०॥

ज०म० वृतः। अत्यन्तगामिनीति अवारपारेत्यादिना खः तस्य भा
वोऽत्यन्तोनत्वं नैवात्यन्तीनामत्यन्तगामिनीं श्रियन्नेता न प्राप
णशीलः तृन्निति ताच्छीलिकस्तृण् नलोकेति षष्ठीप्रतिषेधः यद्यपि
महोदयं राज्यमाप्नवानसि तथापि न चिरकालमित्यर्थः यत
स्त्वमुन्मनाः भ्रान्तचित्तः यतः पानशोण्डः पाने प्रसक्तः सप्तमी
शौण्डैरिति सः अतएव प्रमादवान् अतोऽपि खट्वारूढः उत्पथप्र
स्थितः खट्वाक्षेप इति द्वितीया सः तत एव पात्रसमितैः भोजन
एव सन्निहितैः अनुजीविभिर्वृतः पात्रेसमितादयश्चेति क्षेपे सः
॥ १०॥

भ० वृतइत्यादि। त्वं श्रियं आत्यन्तीनत्वं अत्यन्तगामित्वं न नेता न
प्रापयिष्यसि नीञोद्विकर्मकात् तृण् ढघेकत्यच्चेत्यादौ शीलार्थे तृ
णवर्ज्जनात् न षी अत्यन्तशब्दात् ढघेकादिति तद्गामिन्यर्थे खीनः
तस्यैत्वजात्याख्य इतिपुम्वत् हेतुमाह पात्रेसमितैर्भोजनपात्र एव
समितैः सन्निहितैः कार्य्यान्तराक्षमैरनुजीविभिर्वृतोवेष्टितः अत्रा
क्षेपे समासो विभक्त्यलोपश्चाभिधानात् खट्वारूढः विपथप्रस्थितः
क्षेन क्षेपे खट्वाया द्वितीया तत्पुरुष इति परे स्वमते समासे सति
मण्डपादिवत् स्वभावादर्थान्तरे वृत्तिः प्रमादवान् अनवधान
तायुक्तः यतः पानशौण्डः पाने प्रसक्तः अतएव उन्मना उद्भ्रा
न्तचित्तः॥ १०॥

अध्वरेष्वग्निचित्वत्सु सोमसुत्वत आश्रमान्। अत्तुं महेन्द्रियं भागमैति दुश्च्यवनोऽधुना॥ ११॥

अध्व। त्वय्येवम्भूतेऽधुना दुश्च्यवन इन्द्रः आश्रमानैति आग ज०म च्छति आङ्पूर्व्वस्येणः एत्येधत्यूट्स्विति वृद्धिः सोमसुत्वतः सोमं सुनोतीति सोमेसुञ इति क्विप् सोमसुतः सन्ति येष्वाश्रमेष्विति मतुप् तयो मत्वर्थ इति भत्वे तकारस्य जश्त्वन्न भवति झयइति मतोर्व्वत्वम् किमर्थमैतीत्याह अत्तुम्भक्षयितुम्महेन्द्रियम्भागं महे न्द्रोदेवता अस्येति महेन्द्राद्घाणौ चेति घः क्व अध्वरेषु यज्ञेषु अग्निचित्वत्सु अग्निश्चितवन्तोऽग्निचितः आहिताग्नयः अग्नौ चेरिति . क्विप् ते सन्ति येष्विति पूर्व्ववन्मतुप्॥ ११॥

अध्वरेष्वित्यादि। तवैव प्रमादात् अधुना इदानीं दुश्च्यवन भ० इन्द्रः अध्वरेषु यज्ञेषु महेन्द्रियं महेन्द्रदेवतं भागं अत्तुं भक्षयि त्तुं आश्रमानैति आगच्छति स भागो राक्षसग्राह्य एवासीदिति भावः कीदृशेषु अग्निचित्वत्सु अग्निं चितवान् अग्निचिन्मुनिः चास्तु सिति चे.क्विप् ह्रस्वस्य तन्पिति ततोऽस्त्यर्थे मोऽकुमत्युपाइतुः मदं तमाविति पदत्वनिषेधात् न चपोऽवेजव कीदृशाम् सोमसुत्वतः सोमं .तवान् सोमसुत्यजमानः तद्युक्तान् पूर्व्ववत् क्विवादि सो मोलतासवनं यस्थानं महेन्द्रोदेवता अस्येति विकारसंघेत्यादि ना इयः॥ ११॥

आमिक्षीयं दधि क्षीरं पुरोडाश्यं तथौषधं। हविर्हैयङ्गवीनञ्च नाप्युपघ्नन्ति राक्षसाः॥ १२॥

ज०म० आमि। दध्ना सहितं शृतं पय आमिक्षा तस्यै हितमामिक्षीयं विभाषाहविरपूपादिभ्य इति छयतौ दधि च क्षीरञ्चेति विभाषा वृक्षेत्यादिना व्यञ्जनत्वादेकवद्भावः पुरोडाशाय हितमौषधनी वारतण्डुलादि पुरोडाश्यमपूपादित्वाद्यत् ओषधिरेवौषधम् ओषधेरजाताविग्यण् तण्डुलानामजातित्वात् स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इति नपुंसकलिङ्गता हविः हूयतइति हविः अर्चिशुचीत्यौणादिक इस् हैयङ्गवीनं घृतं ह्योगोदोहस्य विकार इत्यर्थे हैयङ्गवीनसंज्ञायामिति निपातनात् खञ् ह्यियं स्यादेशश्च तानि नाप्युपपन्नन्ति राक्षसाः त्वय्युदासीने सति इदानीं कार्य्यप्रदर्शनेन प्रोत्साहयितुमाह ॥१२॥

भ० आमिक्षीयमित्यादि। अधुना राक्षसा अपि एतानि वस्तूनि न उपपन्नन्ति अपिशब्दः पूर्व्वापेक्षया कानि आमिक्षायै हितं दधि दुग्धञ्च व्यञ्जनत्वे समाहारइति परः स्वमतेऽभिधानात् आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः हितार्थे ईयः तथा पुरोडाशाय हितं औषधं नीवारतण्डुलादि पुरोदश्यते इति पुरोडाशो ऽन्नविकारः पिष्टकादिः निपातनात् ततोहितार्थे यः ओषधिशब्दात् स्वार्थे ष्णः औषधं क्वचित् स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इति क्लीवत्वं हविर्हव्यञ्च ऊदाने चासुषिसितीस् ह्योगोदोहस्य विकारो हैयङ्गवीनं निपातनात् तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतमित्यमरः ॥१२॥

युवजानिर्धनुष्पाणिर्भूमिष्ठः खविचारिणः
यस्मादृ दोहन्ति कालकल्पशिलीमुखः ॥१३॥

पुव। युवतिः यौवनवती जाया यस्य युवजानिः जायाया निङ् वलिलोपः स्त्रियाःपुंवदिति पुंवद्भावात् स्त्रीप्रत्ययो निवर्त्तते धनुष्पाणिः पाणौ धनुर्यस्य प्रहरणेत्यादिना परनिपातः भूमिष्ठः भूमौ तिष्ठतीति भूमिष्ठः नाकाशचरः सुपिस्थ इति कः अम्बाम्बेत्यादिना षत्वम् कालकल्पशिलीमुखः मृत्युतुल्यशरः रामो राक्षसान् हन्ति खविचारिणः आकाशचरणशीलान् सुप्यजाताविति णिनिः॥ १३॥ जं०म०

युवजानिरित्यादि। भूमिष्ठोऽपि रामः खविचारिणोऽपि यस्माद्धेतो राक्षसान् हन्ति भूमौतिष्ठतीति हनजनादिति डः षत्वं मनीषादित्वात् खे आकाशे विचरितुं शीलं येषां ते तथा सुवन्तोपपदात्ताच्छील्ये णिनिति परः खमते खे विचरन्तीति ग्रहादित्वाणिन् यस्माय हृष्यन्तीति क्विप्कोदृशो रामो युवजानिः युवती जाया यस्य स तथा बहुव्रीहौ जायाया इञ्जानस्येति परः स्वमते जाया समानार्थो जानिशब्दोऽस्ति जनी सीमन्तिनीवध्वोरित्यनुशासनात् जनीशब्दस्य स्वार्थिकष्यन्तस्य जानिरिति रूपम्वा पुम्वत् स्युक्तपुंस्क इति पुम्वद्भावः धनुः पाणौ यस्य स तथा षत्वविधानं गवाक्षजालैरित्यत्र व्याख्यातं ईषदूनः कालः कालकल्पोयमतुल्यइत्य ः तादृशः शिलीमुखोवाणो यस्य स तथा त्यादेर्वोनेरति कल्पः॥ १३॥ भ०

मांसान्योष्ठावलोप्यानि साधनीयानि देवताः। अश्नन्ति रामाद्रक्षांसि विभ्यत्यश्नुवते दिशः॥ १४॥

मांसा। ओष्ठावलोप्यानि ओष्ठाभ्याञ्छेदार्हाणि शक्यानि वा अर्हार्थे शक्यार्थे वा कृत्यः कृत्यैरधिकार्थवचन इति षः। जं०म०

साधनीयानि यज्ञस्य साधनाय हितानि तस्मै हितमिति छः साव नीयानीति पाठान्तरम् तत्र सवनं स्नानं तद्योगात्स्नानकोऽपि तथोच्यते तत्र भवः सावनो यज्ञः तस्मै हितानीति छः तानि मांसानि देवता अश्नन्ति भुञ्जते न राक्षसाः रक्षांसि किन्तु रामाद्बिभ्यति वानपुंसकस्येति शतुर्नुमभावपक्षे रूपं दिशोऽश्नुवते व्याप्नुवन्ति ॥ १४ ॥

भ० मांसानीत्यादि। इदानीं देवता मांसानि अश्नन्ति रक्षांसि तु रामाद्बिभ्यति दिशोऽश्नुवते व्याप्नुवन्ति पलायन्त इत्यर्थः कीदृशानि मांसानि ओष्ठावलोप्यानि छेत्तुं शक्यानि लुपूछेदने तेभ्यः शक्यार्थे इति शक्यार्थे घ्यण् साधनीयानि स्वर्गादेः साधनाय यज्ञाय हितानि सुरसतायाः साधनं घृतादि तेन संस्कृतानि वा अश्नन्तीति अशभोजने आशीरित्याशीपः बिभ्यतीति ञिभी‍लि भीत्यां शतृः क्लादीरेदिः इः शतुर्नुन् शाविति पक्षे नुमोऽभावः अन्यन्तमिति केचित् तदा अन्तोऽदेरित्यत् अशूङ्व्याप्तिसंहत्योः श्नुभ्रोरित्युव् मान्तोऽदनतः ॥ १४ ॥

कुरु बुद्धिं कुशाग्रीयामनुकामीनतां त्यज। लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नय ॥ १५ ॥

ज०म० कुरु। कुशाग्रीयाकुशाग्रमिव सूक्ष्मां कुशाग्राच्छ इति इवार्थे छः स्थूलबुद्धिर्माभूदित्यर्थः अनुकामीनतान्त्यज यथेष्टगामितान्त्यज अवारपारेत्यादिना खः परम्परीणाम्परांश्चापरांश्च अनुभवतीत्यर्थे परापरशब्दात् परोवरेत्यादिना खः परादेशश्च

तां लक्ष्मीं क्रमायातामन्वयपुत्रपौत्रीणतामथ पुत्रांश्च पौत्रांश्चानु भवतीति खः तस्य भावः पुत्रपौत्रानुगामिनीं कुर्वित्यर्थः ॥ १५ ॥

कुरुष्वेत्यादि। त्वं बुद्धिं कुशाग्रीयां कुशाग्रमिव सूक्ष्मां कुरु वि कारमेघेति कुशाग्रादिवार्थं ईयः अनुकामीनतां कामस्य अभि लाषस्य अनु पश्चाद्गामितां यथेष्टाचरणं त्यज अनुकामान्तद्गा मिन्यर्थे ढघेकादितीनः परम्परीणां क्रमादायातां लक्ष्मीं पुत्र पौत्रीणतां पुत्रपौत्राधीनतां नय प्रापय परश्च परतरश्च इति द्वन्द्वे परम्परादेशो निपातनात् ततस्तदनुभवतीत्यर्थे पूर्व्वेण ईनः ॥ १५ ॥ भ०

**सहायवन्त उद्युक्ता बहवोनिपुणाश्च यां। श्रियमा शासते लोलां तां हस्तेकृत्य माश्वसीः ॥ १६ ॥**

सहा। याश्च श्रियन्त्वदीयां शौर्य्योपात्तां सहायवन्तः ससहा या उद्युक्ता उत्साहवन्तो निपुणाः कुशला आशासते इच्छन्ति आङःशासुइच्छायामित्यादादिकस्यात्मनेपदिनो रूपम् आत्म नेपदेष्वनत इत्यदादेशः तां हस्तेकृत्य स्वीकृत्य माश्वसीः आश्वासं माकार्षीः चञ्चलत्वात् यदाह लोलामिति ह्मयन्तक्षण श्वसजागृणीति वृद्धिप्रतिषेधः इटईटीति सिचोलोपः नित्यं हस्ते पाणाविति गतिसंज्ञायां समासे ल्यबादेशः तां लोलतान्द र्शयन्नाह ॥ १६ ॥ अ०म०

सहायवन्तइत्यादि। सहायवन्तः अशस्त्रसहाययुक्ता उद्यु क्ता उद्योगिनो बहवोनिपुणाः कर्मकुशला यां श्रियं आशासते भ०

दुरूच्छ्रितां श्रियं हस्तीकृत्य स्वीकृत्य मामकी: मत्यार्थ मा का र्षी: यतो खोलां चञ्चलां आकःश्रावर्ण्यायां श्रद्धादिरात्मने पदी हस्तिशब्द: समर्थ्यमप्रतिरूपकोऽव्यय: स्वीकारे वर्त्तते हस्ते पाणौप्राध्वमित्यादिना समास: ख्यादनञ:क्तोयपि आकःभाव श्राविः हस्तादे: येम दत्यादौ श्रवर्क्जनात्म त्रि: ॥ १६ ॥

लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात्। अन्तिकेऽपि स्थिता पत्युश्छलेनान्यं निरीक्षते ॥ १७ ॥

ज०म० लक्ष्मीः। तथैवं न मन्तव्यम् अन्यै: प्रार्थ्यमानापि न माम्परित्यजतीति यत: छलेन व्याजेन अन्यन्निरीक्षते किमर्थं पुंयोगमाशंसु: अभिलषन्ती सनाशंसभिक्षउ: कुतूहलात् कोऽस्य विशेषदति खेहादन्तिके अदूरेऽपि स्थिता पत्यु: दूरान्तिकार्थैरित्यादिना षष्ठी कुलटेव बन्धकीव प्रकन्ध्यादिषु दर्शनात्पररूपम् युवजानिरित्युक्तत्वा योपित्प्रलोभनायाह ॥ १७ ॥

भ० लक्ष्मीरित्यादि। लोलतां दर्शयति लक्ष्मी: पत्युरन्तिके स्थिताऽपि सुतरां दूरस्था कुतूहलात् अन्यं पुरुषं छलेन व्याजेन निरीक्षते केनापि छिद्रेण गन्तुमित्यर्थ: यत: पुंयोगमाशंसु: अभिलषन्ती एकेन पुंसा तृप्तिर्नास्तीत्यर्थ: अत एव कुलटा इव अटतीव कुलान्यटति पचादित्वादन् मनीषादित्वादकारलोप: समभिधाशंसउरिति आंपूर्वशंसेरु: ॥ १७ ॥

योषिद्वृन्दारिका तस्य दयिता हंसनादिनी। दूर्वाकाण्डमिव श्यामा न्यग्रोधपरिमण्डला ॥ १८ ॥

योषित। योषिचासौ वृन्दारिका चेति वृन्दारकेत्यादिना ज०म० सः रूपेण प्रियेत्याह दयिता प्रिया प्रशंसने कारणमाह हंस इव गन्तुं शीलं यस्याः कर्त्तर्य्युपमान इति णिनिः दूर्व्वाकाण्डमि व श्यामा दूर्व्वासम्बन्धादिव श्यामा न्यग्रोधपरिमण्डला उपमा नानीत्यादिना सः॥ १८॥

योषिदृन्दारिकेत्यादि। प्रलोभनार्थमिदमुच्यते तस्य रामे भ० सं दयिता प्रिया योषिद्वृन्दारिका योषितां स्त्रीणां मध्ये वृन्दा का रूपवती हंसवन्नदतीति हंसनादिनी कर्त्तर्य्युपपदाणिनिरिति परः समते यद्वादित्वात् हंसनादिनीशब्दः पारिभाषिकोऽप्यस्ति यथा गत्या नितम्बिनी या तु हंसशीलानुगामिनी। मत्तकोकिलवं शब्दा सा ज्ञेया हंसनादिनी। दूर्व्वाकाण्डमिव तन्वी कृशाङ्गी त्यर्थः दूर्व्वाकाण्डवत् श्यामवर्णेति व्याख्यानं पुराणविरुद्धं तत्र गौरत्वकथनात् श्यामान्यग्रोधपरिमण्डलाशब्दौ रूढौ यथा शी ते सुखोष्णसर्व्वाङ्गी ग्रीष्मे तु सुखशीतला। तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते। स्तनौ सुकठिनौ यस्या नितम्बे च विशा लता। मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डला अग्निपुराणे स्त्रीपुरुषलक्षणाध्याये न्यग्रोधपरिमण्डललक्षणमुक्तं यथा प्रसा रितभुजस्येह मध्यभागद्वयान्तरं। उच्छ्रायेण समं यस्य न्यग्रोध परिमण्डलइति केचित्तु दूर्व्वाकाण्डमिव न्यग्रोधपरिमण्डला न्यग् रुणद्धीति न्यग्रोधं अधःप्रसृतं परितोमण्डलं नितम्बमण्डल रूपं यस्याः दूर्व्वाकाण्डमपि अधः प्रसरति नोपरिष्टादित्याहुः अन्ये तु न्यग्रोधस्य वटस्य इव परिमण्डलं परिणाहोनितम्बभागे यस्याः एकदेशधर्म्मेणापि समुदायोपमानतादर्शनादित्याहुः

श्यामा अप्रसूतेति केचित् अप्रसूताङ्गनायाञ्च श्यामा सोमलता षधेः। त्रिवृताशारिवागुन्द्रा निशाकृष्णा प्रियङ्ग्विति विश्वः ॥१८॥

नास्यं पश्यति यस्तस्या निंस्ते दन्तच्छदं न वा। संशृणोति न चोक्तानि मिथ्याऽसौ विहितेन्द्रियः ॥१९॥

ज०म० नास्य। तस्या आस्यमुखं यो न पश्यति दन्तच्छदं ओष्ठञ्छाद्यते अनेनेति घः छादेर्घेद्व्युपसर्गस्येति ह्रस्व दन्तानाञ्छदंनवा निंस्ते न चुम्बति णिसिचुम्बन इत्यादादिकआत्मनेपदी इदितो नुम् धातोः उक्तानि उदितानि न संशृणोति समोगमित्यादिना तङ् न भवति अकर्म्मकादित्यधिकारात् मिथ्यासौ विहितेन्द्रियः वृथैव तस्य वेधसा विहितानि इन्द्रियाणि चक्षुरादीनि ॥१९॥

भ० नास्यमित्यादि। यस्तस्या आस्यं मुखं न पश्यति नवा दन्तच्छदं ओष्ठं निंस्ते चुम्बति निषिलङ्चुम्बने नवा तस्या उक्तानि भाषितानि संशृणोति असौ पुरुषः विहितेन्द्रियो विधात्रा कृतेन्द्रियोमिथ्या प्रयोजनाभावात् तस्य चक्षुरादीनि मिथ्येति भावः वृथेति क्वचित्पाठः वृथाविहितानि इन्द्रियाणि यस्य स तथा दन्ताच्छाद्यन्तेऽनेनेति छादेस्त्मन्क्वीसघेस्व इति ह्रस्वः घेस्वइत्युक्तेर्नान्यन्येतिकेति संज्ञायां घप्रत्ययोमिथ्यः ओष्ठाधरौ तु रदनच्छदावित्यमरः ॥१९॥

सारोऽसाविन्द्रियार्थानां यस्यासौ तस्य नन्दथुः। तस्ये कान्तान्तरैः सार्द्धं मन्येऽहं धिङ्गिमज्जयुं ॥२०॥

सारो। इन्द्रियार्थानाम्मध्ये सारोऽसौ दयिता इन्द्रियार्थः रूपाद्यतिशययोगात् यस्यासौ संपद्यते तस्य नन्दथुः आनन्दश्चेतसः तल्पे शयनीये यस्य कान्तान्तरैरन्यस्त्रीभिः सार्द्धं निमज्जथुं शयनं सर्व्वत्र द्वितोऽथुच् तस्य धिक् कुत्सितमहं मन्ये उभयत्र सर्व्वतसोरित्यादिना धिग्योगे द्वितीया तया सार्द्धं शोभनमित्यर्थादुक्तम्भवति ॥२०॥ ज०म०

सार इत्यादि। इन्द्रियस्य अर्था विषयाः स्रक्चन्दनवनितादयस्तेषां मध्ये असौ सीतैव सारः श्रेष्ठा यस्य असौ सीता विद्यते तस्यैव नन्दथुरानन्दः कान्तान्तरैः सार्द्धं तल्पे शय्यायां निमज्जथुं निमज्जनं शयनं धिक् तयैव सार्द्धं युज्यत इत्यहं मन्ये उभयत्र द्वितोऽथुर्भावे धिक्समयेति द्वितीया ॥ २० ॥ भ०

न तं पश्यामि यस्यासौ भवेन्नोद्वेजया मतेः। त्रैलोक्येनापि विन्दस्त्वं तां क्रीत्वा सुकृती भव ॥ २१ ॥

नतम्। सर्व्वथा न तम्पश्यामि जानामि जगति यस्य सम्बन्धिन्याः मतेश्चेतसः उद्वेजया उत्कम्पिकाऽसौ न भवेत् चित्तक्षोभजनिकेत्यर्थः उद्वेजयतीति अनुपसर्गाल्लिम्पेति कर्त्तरि शः कृद्योगे कर्म्मणि षष्ठी तस्मात् त्रैलोक्येनापि त्रयस्तेते लोकाश्चेति त्रिलोकाः त एव त्रैलोक्यञ्चातुर्व्वर्ण्यादित्वात्स्वार्थे ष्यञ् स्वार्थिका अतिवर्त्तन्त इति नपुंसकत्वम् तेनापि ताङ्क्रीत्वा लब्ध्वा विन्दस्त्वं सुकृती भव पण्डितो भव श्लाघ्यो वा भव पाण्डित्यमस्य त्रैलोक्यमात्रे ज०म०

स्यापि स्त्रीरत्नकल्पिता सर्वमिति विन्दतीति तेनैव सूत्रेण सः अन्या अपि स्त्रियः खनीति चेदाह ॥ २१ ॥

भ० मतमित्यादि। यथा सीता यस्य मतेरुद्देजया शोभजनिका न भवेत् तं पुरुषं नाहं पश्यामि त्रैलोक्येनापि तां कृत्वा त्वं त्रिन्द्रो लाभवान् सुकृती च भव सुकृती पुण्यवान् शोभनः कृती पण्डितो वा तत्कथणादेव तव लाभवत्त्वं पुण्यवत्त्वं पाण्डित्यञ्च सफलं अन्यथा निष्फलमिति भावः एजृकम्पे एजेरुद्रः स इति परः स्वमते शाङ्गिसातीत्यादिना अगेरित्यस्य मञ्ञा निर्द्दिष्टञ्च व्यभिचारात् सः विदुष्पञ्ञो लाभे पूर्व्वेण सः मुंचादित्वान्नुण् त्रिलोकीव त्रैलोक्यं स्वार्थे ष्यः स्वार्थिकाः प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्तेऽपीति वाक्यात् क्लीवत्वं ॥ २१ ॥

नैवेन्द्राणी न रुद्राणी न मनावी न रोहिणी। वरुणानी नचाग्नायी तस्याः सीमन्तिनी समा ॥ २२ ॥

जय० नैव। तस्यास्तु सीतायाः तुल्यार्थैरतुलोपमाभ्यामिति षष्ठी न काचित्सीमन्तिनी स्त्री तुल्या समा सीमन्तः केशेष्विति पररूपत्वम् अन्यत्र सीमान्तः स विद्यते यस्य इति इनिः इन्द्राणी इन्द्रभार्य्या न सर्व्वं किम्पुनरन्या तथा रुद्राणी रुद्रभार्य्या वरुणानी वरुणभार्य्या इन्द्रवरुणेत्यादिना आनुक् मनावी मनुभार्य्या मनो रौवेत्योकारः अग्नायी अग्निभार्य्या वृषाकप्यग्निकुसितकुसिदेत्यादिना ऐरिति सर्व्वत्र पुंयोगादाख्यायामिति ङीष् रोहिणी चन्द्रभार्य्या रोहितशब्दात् वर्णादनुदात्तेत्यादिना ङीप् नकारस्य

वरुणानी न आग्नायीत्यत्र प्रतिषेध एकः पूर्व्वेण योऽन्यः द्वितीयः परेणेति नचाग्नायीति पाठान्तरम्॥ २२॥

नैवेत्यादि। काऽपि सीमन्तिनी स्त्री तस्याः सीतायाः समा भ॰ तुल्या न सर्व्वेष नञ्सम्बन्धादिह नञ्सम्बन्ध उपपद्यते इन्द्राणी इन्द्रस्य पत्नी तस्याः समा न एव निरूप्यते इन्द्रवरुणभवेत्यादिना पत्यादीप् आनुक्च रुद्राणी रुद्रस्य पत्नी पार्व्वती समा न पूर्व्व वत् ङीप् आनुक्च मनावी मनोः पत्नी प्रसन्नरूपा न समा वारीव स्त्रीत्यादिना निपातः रोहिणी चन्द्रस्य भार्य्या न समा पूर्व्वेण नि पातः वरुणानी वरुणस्य पत्नी न समा इन्द्रवरुणेतीप् आनुक्च अ ग्नायी अग्नेः पत्नी न समा वृषाकप्यग्नीत्यैव् ऐकृच केचित्तु इन्द्रा णी न समा कीदृशी प्रशस्तसीमन्तयुक्ता एवं रुद्राण्यादावित्याहुः सीमन्तः कथ्यते स्त्रीणां केशमध्ये च पद्धतिरिति हलायुधः मनी षादित्वात्साधुः तस्या इति समार्थैर्नेत्यादिना षष्ठी॥ २२॥

प्रत्यूचे राक्षसेन्द्रस्तामाश्वसिहि बिभेषि किं। त्यज नक्तञ्चरि चोभं वाचाटे रावणोऽस्म्यहं॥ २३॥

प्रत्यू। राक्षसेन्द्रो रावणः राक्षसीम्प्रत्यूचे प्रतिवचनमुक्तवान् ज॰म॰ आश्वसिहि खेदन्त्यज रुदादीत्यादिना इट् बिभेषि किंकिमर्थं त्रापयस्यात् हे नक्तञ्चरि सद्विषये चोभं रोषन्त्यज वाचाटे बहु भाषिणि आलजाटचौ बहुभाषिणि यस्माद्रावणोऽहम् अनेना त्मोत्कर्षमावेदयति तमेव स्फुटयन्नाह॥ २३॥

प्रत्यूचेत्याहि। स राक्षसेन्द्रो रावणः तां शूर्पणखां प्रत्यूचे भ॰

प्रत्युत्तरमाह आश्वसिहि खेदं त्यज रक्षोयदिति इम् किं विभेषि तापसकात् हे नक्तञ्चरि क्षोभं दुःखं मयि रोषं वा त्यज हे वाचाटेव ऊनिन्द्यभाषणशीले हि यस्मात् अहं रावणः प्रसिद्धनामानुवादात् उत्कर्षः सूचितः वाचोऽस्त्यर्थे वीग्मिवाचाटवाचालाइति निपातः वाचाटोवऊगर्ह्यवागित्यमरः रवणस्य विश्रवसोऽपत्यं रावणः विश्रवसो विश्रवणरवणावपत्यण्णे इति परः स्तमते सर्व्वभूतानि रावयति आक्रन्दयति रावणः नन्द्यादित्वादनः किम्वा हिंसनधर्म्मत्वात् रावणः हिंसार्थरुधातोरनटि रवणं ततः अस्य शीलं इत्यर्थं विकारसंघेत्यादिना ष्णः अत्रापि वा नन्द्यादित्वादनः ततः स्वार्थे ष्णः रुलध्वनौ रुङ्वधे गत्यां ॥ २३ ॥

मामुपास्त दिदृक्षावान् याष्टीकव्याहतोहरिः। आशालाभोन्मुखोदूरात् काक्षेणानादरेक्षितः ॥ २४ ॥

ज०म० मामु। मामुपास्त सेवितवान् हरिरिन्द्रः दिदृक्षावान् द्रष्टुमिच्छावान् आत्मदर्शनेच्छावानित्यर्थः दूरादेव याष्टिकैः वेत्रग्राहिभिर्व्याहतोऽपसारितः कर्त्तृकरणेकृतेति सः यष्टिः प्रहरणमेषामिति ठक्रियष्टीरीकक् आशालाभे किमभिधास्यतीत्युन्मुखः उन्मुखः तत्परः सप्तमीति योगविभागात्सः अनादरेक्षितः अवज्ञाविलोकितः काक्षेण कुदृष्ट्या कापथ्यक्षयोरिति कुशब्दस्य कादेशः यदि तत्पुरुष इत्यनुवर्त्तते तदा कुत्सितमक्षमिति विग्रहः अक्षशब्दस्येन्द्रियसामान्याभिधायित्वेऽपि ईक्षितशब्दोपपदत्वाच्चक्षुषि वर्त्तते अथ तत्पुरुषइति नानुवर्त्तते सामान्ये

नादेशस्तदा कुत्सितमक्षि यस्येति वक्राक्षीदं वक्राक्षीदं सक्थ्यक्ष्णो रिति षच् काचेण मयेत्यर्थः॥ २४॥

मामित्यादि। हरिरिन्द्रो मामुपास्त सेवितवान् आशंसां रूपं भ॰ यष्ट्या प्रहरतीति याष्टीकः द्वारि नियुक्तः यष्टिप्रहारकपुरुषः ठण् के काद्विति ण्णीकः तेन व्याहतस्ताडितोऽपि दिदृक्षावान् द्रष्टुं इच्छा वान् मदाशाया लाभनिमित्तं उन्मुखः ऊर्द्धमुखः दूरात्समीपग मनायोग्यत्वात् मया तु काचेण कुदृष्ट्या अनादरेणावज्ञया ईक्षि तः अवलोकितः कुत्सितमक्षं काक्षं इन्द्रियसामान्यवाचिनोऽक्ष शब्दस्यात्र प्रकरणाच्चक्षुरेवार्थः कुत्सितमक्षि यस्येति वा सक्थ्यक्ष्णः षः स्वाङ्गे इति षः काचेदति कोःकादेशः तत्र अक्षदति इन्द्रिय वाचकत्वादन्तस्य कृतसमासान्तस्य अक्षिशब्दस्य च ग्रहणं ईष दक्षं काक्षं इति वररुचिः तदा कटाक्षे तात्पर्य्यं कोरीषदर्थे इति कादेशः॥ २४॥

विरुग्णोदग्रधाराग्रः कुलिशो मम वक्षसि। अभिन्नं शतधात्मानं मन्यते बलिनं बली॥ २५॥

विरु। विरुग्णानि अवसन्नानि कुण्ठितानि उदग्राणि महान्ति अ॰म॰ धाराग्राणि यस्य स कुलिशो वज्रः मम वक्षसि पतितः सन् बली आत्मानमभिन्नं शतधा शतप्रकारं सञ्ज्ञायाविधार्थे धा बलिन मन्यते अहो बलवानयं येन शतधा भग्न इति तस्य देवतारूप त्वात् बलमस्त्येव आत्मानं बलिनं मन्यतइवेत्युत्प्रेक्षा॥ २५॥

भ० विद्रुम इत्यादि कुलिशेभ्योऽप्यात्मानं बलिनं मन्यते कुत इत्याह मम वचसि अतथा अतत्प्रकारेण अभिन्नं केवलं विद्रुमाणि भग्नानि उदयाणि अशानि धाराग्राणि यस्य तादृशः मणी वस्तु तोषयत्वार्थम् मदनवत्त्वमज्ञादेव बलं जानाति अस्तु रत्नसूत्रविदा रणादपीदमेव तस्याधिकमुत्कर्षस्थानमित्यर्थः तस्य वताकृपत्वा भञ्जनमस्त्येव उत्प्रेक्षामात्रं वा मन्यत इव इत्यर्थः इवाद्यायाधार्थ्य प्रकारे ॥ २५ ॥

कृत्वा स्कन्दद्रुमात्तानमहमैरावतं गजं। बन्धनेऽनुपयोगित्वान्नतं तृणवदत्यजं ॥ २६ ॥

ज०भ० कृत्वा। स्याद्वीयतरित्यालानं अधिकरणे ल्युट् विभाषा को यतरित्यालम् स्कन्दद्रुमा आलानानि यस्यैरावतारुयस्य गजस्य तं कृत्वा नतञ्चममुखन्तृणमिव मत्वा सोऽहमत्यजम् त्यक्तवान् बन्धनेऽनुपयोगित्वात् प्रयोजनाभावात् ॥ २६ ॥

भ० कृत्वेत्यादि। स्कन्दद्रुम एवालानं बन्धनस्तम्भो यस्य तथाभूतं ऐरावतं गजं कृत्वा नतं नम्रं तं अहं तृणवत् अत्यजं अथवा तं गजं तृणवत् न अत्यजं अपि तु अत्यजमेवेति शिरश्चालने नञ् कुत इत्याह बन्धनेऽनुपयोगित्वात् स्वयमेव वशीभूतत्वात् अनुपादेयत्वाद्वा आलीयतेऽस्मिन्नित्यालानं आधारेऽनट् शिरोर्थ ख्योक्तःऽवजितित्वश्वत्वा इति पचे का इरावान् समुद्रः तत्र जात इति ढणेकादिति अणः ॥ २६ ॥

आलोपुलपिकां पश्य मम सङ्गतकान्तिभिः। ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः सन्निधिः सदा ॥ २७ ॥

आहो। अहोपुरुषस्य भावः मनोज्ञादित्वाद्वुञ् आहोपुरुषिका ज०म० कार्य्यसिद्धावपि तत्तामभेमि दृप्तिः तां मम शूर्पणखे पश्य चन्द्रकान्तिभिः ध्वस्तान्धकारेऽपि पुरे पूर्णेन्दोः पूर्णचन्द्रस्य सन्निधिः सदा. सन्निधानञ्च पुनस्तैव कृत्यं रत्नप्रभाभिरेव तत्कृत्यस्य कृतत्वात् ॥ २७ ॥

आहोइत्यादि। ममाहोपुरुषिकां पश्य चन्द्रकान्तिभिः चन्द्र भ० कान्तानां प्रभाभिर्ध्वस्तान्धकारे नाशितध्वान्तेऽपि मत्पुरे सदा पूर्णेन्दोः सन्निधिः एतेन प्रयोजनाभावेऽपि भीत्या पूर्णीभूय चन्द्रस्तिष्ठति देवैरपि भीत्या नासौ पीयते चन्द्रप्रभाणि च रत्नानि मम सन्तीति सूचितं अहमेव पुरुषोऽयञ्चेति सम्भावनायामाहोपुरुषिका निपातनात् आहोपुरुषिका दर्पाद्या स्यात्सम्भावनात्मनीत्यमरः। अहोपुरुषस्य भाव आहोपुरुषिका इति केचित् तदा विकारसंघेतिभावे कण् क्लीबत्वमभिधानात् काव्यनाभीरकइति अत इत्वं सदेति कुतःकक्वित्यादिना निपातितं ॥ २७ ॥

हृतरत्नश्च्युतोद्योगी रक्षोभ्यः करदो दिवि। पूतक्रतायीमभ्येति सत्रपः किन्न गोत्रभित् ॥ २८ ॥

हृत। हृतोच्चैःश्रवआदिरत्नो गोत्रभिदिन्द्रः अतएव च्युतोद्योगः दिवि वर्त्तमानोऽपि रक्षोभ्यः करदः राजग्राह्यं वित्तम्प्रयच्छन् पूतक्रतायीं शचीं पूतक्रतोरैच्चेति ङीष् पुंयोगादाख्यायामिति सत्रपः सव्रीडः किन्नाभ्येति न ढौकते ॥ २८ ॥ ज०म०

हृतेत्यादि। गोत्रभित् इन्द्रो दिवि वर्त्तमानोऽपि सत्रपः सलज्जः भ०

नाभिमुखो

अपि तु तथैव सचपले हेतुमाह मया चतरत्नः हृतं रत्नं यस्य स तथा गलितोद्योगः राजभ्यः करदः करं राजग्राह्यभागं ददातीति डः पूतक्रतोरिन्द्रस्य पत्नी पूतक्रतायी वृषाकप्यग्नि इत्यादिना ईप् ऐकुच गोत्रान् पर्व्वतान् योभिनत्ति सोऽतिबली यान् इति साभिप्रायं पदं ॥ २८ ॥

अतुल्यमहसा सार्द्धं रामेण मम विग्रहः। त्रपाकरस्तथाप्येष यतिष्ये तद्विनिग्रहे ॥ २९ ॥

ज०म० अतु। तदेवंविधस्य मम अतुल्यमहसा अतुल्यतेजसा रामेण सह विग्रहस्त्रपाकरः कृञोहेत्वित्यादिना टः तथापि लज्जार्थं मया एष च यतिष्ये तद्विनिग्रहे विविधनिग्रहविषये तस्य यतिष्ये यत्नं करिष्यामि वर्त्तमानसामीप्ये वर्त्तमानवद्वेति विकल्पेन लटो विधानात् लृडुदाहृतः ॥ २९ ॥

भ० अतुल्येत्यादि। यद्यपि अतुल्यमहसा असदृशतेजसा रामेण सार्द्धं मम विग्रहस्त्रपाकरः तथापि तस्य विविधनिग्रहे एषोऽहं यतिष्ये यत्नं करिष्ये लज्जार्थमयेति शेषः त्रपां लज्जां करोतीति त्रकुष्टः निग्रह इति विषयसप्तमी निमित्तमात्रेऽपि सप्तमी लोकोपचारादित्यन्ये ॥ २९ ॥

उत्पत्य खं दशग्रीवो मनोयायी शितास्त्रभृत्। समुद्रसविधावासं मारीचं प्रति चक्रमे ॥ ३० ॥

उत्प। उत्प्लीवङ्गमाकाशमुत्पत्य मारीचमति चक्रमे यत अ०म०
मारीचो राघवस्तत्र गत इत्यर्थः अनुपसर्गादिति क्रमेस्तङ् मनो
वदाशु यातुं शीलमस्येति कर्त्तर्य्युपमान इति णिनिः शितास्त्रभृत्
गृहीततीक्ष्णचन्द्रहासः समुद्रस्य सविधे समीपे आवासो यस्य
मारीचस्य सह विधेन सविधमिति व्युत्पत्तिमात्रं शब्दस्तत्समीप
वाची॥ ३०॥

उत्पेत्यादि। एवमुक्त्वा दशग्रीवो रावणः खमाकाशं उत्पत्य भ०
मारीचं प्रति लक्षीकृत्य चक्रमे गतः वागेरिति मं द्वितीयानिमि
त्तकस्य प्रतिशब्दस्य गिलाभावात् मन इव शीघ्रं यातीति मनो
यायीति कर्त्तर्य्युपमाने उपपदे णिनिति परः स्वमते गोत्रादि
त्वाणिन् व्याघ्रस्त्वासौ श्वा चेति वाक्यं कुर्व्वता क्वचिदुपमानव्यञ्ज
कशब्दाभावेऽप्युपमानं गम्यते इति सूचितं तेन मन इव यायीत्य
र्थोगम्यते शितं तीक्ष्णमस्त्रं विभर्त्तीति क्विप् समुद्रस्य सविधे समी
पे आवासो यस्य तं। सदेशाऽभ्याशसविधसमर्य्यादसवेशवदित्य
मरः॥ ३०॥

सम्पत्य तत्सनीडेऽसौ तं वृत्तान्तमशिश्रवत्। चक्षु
नाथ श्रुतार्थेन तेनागादि दशाननः॥ ३१॥

सम्प। असौ दशग्रीवः तत्सनीडे मारीचस्य समीपे अचापि सह अ०म०
नीडेनेति व्युत्पत्तिमात्रम् समेत्य गत्वा तं वृत्तान्तं शूर्पणखा
कथितमशिश्रवत् श्रावितवान् श्रृणोतेर्ण्यन्तस्य लुङि रूपम् तेन
मारीचेन श्रुतार्थेन चक्षुना वचनशीलेन दशाननः अगादि
उक्तः कर्म्मणि लुङ्॥ ३१॥

भ॰ संपत्येत्यादि। असौ रावणः तस्य समीडे समीपे संपत्य संगत्य तं मारीचं ह्यस्तनं पूर्व्वपक्षोक्तं अभिप्रवत् आवित्तवान्। समीपे निकटासन्नसन्निकृष्टसमीडवदित्यमरः। अथ अनन्तरं भूतार्थेन तेन मारीचेन भक्ता भीतेन इमानवोऽगादि उक्तः कर्म्मणि टो ॥ ३१ ॥

अन्तर्द्धत्स्व रघुव्याघ्रात्तस्मात्त्वं राक्षसेश्वर। घोरणे दुरुपस्थानो यस्तरोधं दधद्धनुः ॥ ३२ ॥

ज॰म॰ अन्त। हे राक्षसेश्वर त्वन्तस्माद्रघुव्याघ्रादन्तर्द्धत्स्व अन्तर्हितोभव व्यवहितो भवेति यावत् दधातेर्लोटि आभ्यस्तयोरित्याकारलोपः अभ्यासस्य दधस्तथोश्चेति भष्भावः अन्तर्द्धौ येनेत्यपादानसंज्ञा यस्मात् रामः रणे दुरुपस्थानः दुःखेन उपस्थीयते उपगम्यत इति भातोयुचेति युच् यतोहस्तरोधन्दधद्धनुः हस्तेन रुध्वा सदैव योधनुर्धत्ते स कथन्दुरुपस्थानो न भवति हस्तशब्दे तृतीयान्त उपपदे सप्तम्यां चोपपीडरुधकर्ष इति णमुल् चकारेण तृतीयायाः समुचितत्वात् तृतीयाप्रभृतीन्यन्यतरस्यामिति सः तदेव दुरुपस्थानत्वं स्फुटयन्नाह ॥ ३२ ॥

अन्तरित्यादि। हे राक्षसेश्वर तस्माद्रघुव्याघ्रात् त्वं अन्तर्द्धत्स्व स यथा न पश्यति तथा व्यवहितोभव अन्तःपूर्व्वधाञोगीत्वः ञादीरेदिः श्नभ्यस्तयोरित्यादिना लोपः धस्य दस्य श्नमान्तस्येति दस्य धः आघोरालोपः इत्यालोपः श्नपश्नसारिति धस्य तः यतोऽपायेत्यादिना अन्तर्द्धौ पञ्चमी हेतुमाह घोरामोदुरुपस्थानः

दुःखेनोपस्थीयते उपगम्यते शत्रुभिः समीपगमनमेवाशक्यं किं पुन र्युद्धमिति भावः आतोमनोऽदृरिति अनः धतोऽसंरोधं सदा धनुर्दधाति इत्यनेन त्यक्ता इत्संरोधं आसक्तौ तृतीयान्ताद्धुधीयम् इति परः तेन सदा निरन्तरं धनुर्दधातीत्यर्थः केचित्तु इत्सं ह द्धत्यर्थे त्याङ्गात् तृधेरणम् तेनान्यकर्मानिष्पत्तिरेतस्य गम्यत इत्या हुः त्यमते इत्सं हृणद्धि कार्य्यान्तराद्भावयतीति ढान् षण् धनु र्विशेषणं॥ २२॥

भवन्तं कार्त्तवीर्य्यं योऽहीनसन्धिमचीकरत्। जि गाय तस्य हन्तारं स रामः सार्व्वलौकिकः॥ २३॥

भव। यः कार्त्तवीर्य्यः कृतवीर्य्यस्यापत्यं प्रहस्रबाहुः भवन्तं अं०म० हीनसन्धिमचीकरत् हीनेन दुर्व्वलेन यः सन्धिः तमभवन्तङ्का रितवान् तेन हीनत्वं बलान्निर्ज्जित्य कारित इति दुरुपस्थानमु क्तम् हृक्रोरन्यतरस्यामिति द्विकर्म्मता तस्य कार्त्तवीर्य्यस्य योह न्ता परशुरामः कृत्ययोगे कर्म्मणि षष्ठी तेन हि तस्याग्निहोत्रधे नुमपहृत्य गच्छतः परशुना बाहुसहस्रच्छिन्नम् तस्य हन्तारं सरामो जिगाय जितवान् अयतेर्लिटि धातुजकारस्य सलिटोर्जे रिति कुत्वम् सार्व्वलौकिकं सर्व्वलोके विदितं लोकसर्व्वलोकाभ्या ठञ् अनुशतिकादित्वादुभयपदवृद्धिः सार्व्वलौकिक इति पाठा न्तरम् तच्च राम इति योज्यम्॥ २३॥

भवेत्यादि। दुरुपस्थानत्वं स्फुटीकुर्व्वन्नाह यः कार्त्तवीर्य्योऽर्ज्जु भ० नो भवन्तं हीनसन्धिं भग्नसन्धिं अचीकरत् कृतवान् कृञः स्वार्थे

ञिः पुर्भोञ्जिर्ब्बा इत्यस्य योगविभागात् क्वचिच्चुरादेरन्यस्माद पि स्वार्थे ञिर्ब्बा भवतीति बोध्यं तेन रामोराज्यमकारयदित्या दिप्रयोगाः यद्वा हीनजनेन सह सन्धिं सन्धानं मिलनं कारया मास यद्भयात् भवता हीनजनोऽप्याश्रितइत्यर्थः घोऽञौञेरिति प्रयोज्यकर्त्तुः कर्म्मता कृतवीरस्यापत्यं कार्त्तवीर्य्यः गर्गादित्वात् ष्णः तस्य कार्त्तवीर्य्यस्य हन्तारं परशुरामं स रामोजिगाय जे र्गिःसन्वोः सार्व्वलोकिकं सकलक्षत्रियनाशेन सर्व्वलोकविदि तम् प्रथमान्तपाठे रामविशेषणं तत्र विदितइत्यर्थे ठघेकादिति ष्णिकः ष्णित्येञिरिति सुभगादित्वात् उभयपदेवृद्धिः ॥ ३३ ॥

यमास्यदृश्वरी तस्य ताडका वेत्ति विक्रमं। शूरम्म न्योरणान्नाहं निरस्तः सिंहनर्दिना ॥ ३४ ॥

ज०म० यम। तस्य रामस्य विक्रमन्ताडका वेत्ति ज्ञातवती वर्त्तमान सामीप्य इति भूते लट् कीदृशी यमास्यदृश्वरी तच्छरताडिता यममुखन्दृष्टवती मृतेत्यर्थः दृशेः क्वनिप् वनोरचेति ङोप्रेफौ अहमपि शूरम्मन्यः शूरमात्मानम्मन्यमानः आत्ममाने खश्च सिंहनर्दिना रामेण सिंहइव नर्दतीति कर्त्तर्य्युपमान इति णिनिः रणान्निरस्तः बहिष्कृत इत्यर्थः ॥३४॥

भ० यमास्येत्यादि। तस्य रामस्य विक्रमं ताडका वेत्ति जानाति अहञ्च वेद्मि सा किंभूता यमास्यदृश्वरी यममुखं दृष्टवती मृतेति यावत् जास्यसिति दृशेः क्वनिप् नचवसादनइति ङीप् रश्च अहं किम्भूतः शूरम्मन्यः आत्मानं शूरं मन्यमानः मन्यात्मार्थेइति

खम् ग्रित्वात् रले दिवसुतुदेत्यादिना यम् तेन सिंहनर्द्दिना रणात् निरस्तः निराकृतः सिंह इव नर्द्दतीति मनोयायीतिवत् वेत्तीति लोकान्तरस्था ताडका इदानीमपि जानातीत्यभिप्रायेण वर्त्तमाने क्ती वर्त्तमानसामीप्ये भूतेऽपि कीत्यन्ये रणादिति हेतौ पञ्चमी रणभूमेः सकाशात् वहिष्कृत इति वा ॥ ३४ ॥

न त्वं तेनान्वभाविष्ठा नान्वभावि त्वयाऽप्यसौ। अनुभूतोमया चासौ तेन चान्वभविष्यहं ॥ ३५ ॥

नत्वमित्यादि। तेन रामेण त्वन्नान्वभाविष्ठाः त्वमनेन नानुभूतः कर्म्मणि लुङ् थासि स्यसिजित्यादिना चिण्वदिट् इत्वं नान्वभावि त्वयाऽप्यसौ नानुभूतः येनैवमुच्यते अत्र चिण्भावकर्म्मणोरिति चिण् अनुभूतोमया चासौ चशब्दः पुनरित्यर्थे मया पुनरसावनुभूतः न शक्योजेतुमिति तेन रामेण चान्वभविष्यहमनुभूतोऽहम् तेन सह योद्धुमहम इति अत्र चिण्वद्भावो न कृतः किन्तु लुङि उत्तमपुरुषैकवचने वलादिलक्षण इट् तेन वृद्ध्यभावात् गुण एवेति ॥ ३५ ॥ ज०म०

नत्वमित्यादि। त्वद्वचने कोग्रहः मत्प्रसिद्धौव सद्दूरीभविष्यति इत्याशङ्कायामिदमुत्तरं तेन रामेण त्वं न अन्वभाविष्ठा न अनुभूतः कथं त्वत्तोऽस्य भयं स्यात् अनुपूर्व्वोभूधातुः सकर्म्मकः कर्म्मणि थास् इनग्रहहृशभवइति पक्षे चिण् त्वयापि असौ रामो न अन्वभावि न अनुभूतः तेन तत्रावज्ञा न युक्ता कर्म्मणि टो तन् असौ मया अनुभूतः तत्रापि तत्त्वज्ञोऽहमिति मद्वचनं भ०

गृह्णातीति भाव: तेनाप्यहमग्रभविषि अनुभूतः तेन मङ्गमनं व्यर्थं पराजितस्य मम दर्शनेन तस्यावज्ञाप्रसङ्गात् कर्मणि टी इण् जिणोरभावपक्षे इम्॥ ३५॥

अध्यङ् प्रस्त्रभृतां रामोन्यञ्चस्तं प्राप्य मद्विधाः। सक न्याशुल्कमभनङ्क्षिथिलायां मखे धनुः॥ ३६॥

ज॰म॰ अध्यङ्। प्रस्त्रभृतामध्ये रामोऽध्यङ् अधिकः अध्यञ्चेत्या धिक्ये वर्त्तत इति ऋत्विगित्यादिना किन् तस्मिन् लुप्ते अनुनासि कलोपे उगिदचामिति नुम् तस्यानुस्वारपरसवर्णत्वे कृते च हल् ङ्यादिसंयोगान्तलोपौ नकारस्य क्विन्प्रत्ययस्य कुरिति कुत्वेन ङकारः तस्मादप्राप्य मद्विधा न्यञ्चो हीनाः निपूर्व्वोऽञ्चाधो भावे वर्त्तते न्यञ्च इति पूर्व्ववत् क्विन् अनुनासिकलोपः नुम् हल्लो पोनास्ति अहल्त्वात् कुत्वञ्च नास्ति अपदसंज्ञत्वात् यो मिथिला यामबद्धनुरभनक् भग्नवान् सोऽस्मादपि कारणात् प्रस्त्रभृताम ध्यङ् भञ्जेर्लङि श्नम्नलोपः हल्ङ्यादिलोपः कुत्वञ्च कन्याशु ल्कङ्न्यामूञ्जन्नङ्क्षि यो रौद्रन्धनुरारोपितगुणङ्करोति तस्मै कन्या दीयत इति मूल्यीकृत्य स्थापितम्॥ ३६॥

भ॰ अध्यङित्यादि। प्रस्त्रभृतां मध्ये रामो अध्यङ् आधिक्येन पूजि तः कर्म्मणि क्विप् हस्तकलोपोऽप्राविति प्राप्तनलोपस्य नेदित्पूजा र्थाञ्चेरिति प्रतिषेधः क्विप्प्रत्ययोवा ऋत्विगिति अञ्चोः इयक् पञ्च णात् लुप् प्राक्कङ् वोर्नुः अपेञ्चनोः स्यान्तस्य लुप् अध्यङ् अ धिकोवा अधिपूर्व्वोऽञ्चतिराधिक्ये वर्त्तते तं प्राप्य मद्विधा मत्स

कारका: पुरुषा न्यञ्च: निम्नद्रोऽधोभागे न्यञ्चन्ति अधोगच्छन्तो ति न्यञ्चो हीना इत्यर्थः कुत इत्याह सरामोमिथिलायां मखे यज्ञे धनुरभनक् भग्नवान् भञ्जेर्थ्यां रुधादित्वात् नम् नमो नखो ग्यः श्नसल्लोपादिति दिलोपः चर्त्त्विति कङ् कन्याशुल्कं कन्या पणं धनुरारोपे सति कन्या देयेति मूल्येन स्थापितं ॥ २६ ॥

संविन्तः सहयुध्वानौ तच्छक्तिं खरदूषणौ। यज्वा नश्च सुत्वानोयानगोपीन्मखेषु सः ॥ २७ ॥

संवि। नाहमेव रामशक्तिमवैमि अपितु खरदूषणावपि सं विन्तः ज्ञातवन्तौ वर्त्तमानसामीप्यइति भूते लट् सकर्मकत्वात् समोगमीत्यादिना तङ् न भवति तत्राकर्मकादिति वर्त्तते सह युध्वानौ सह तेन युद्धवन्तौ सहेचेति युधेः क्वनिप् यज्वानस्या हिताग्नयः सुत्वानः सोमयाजिसहिताः सुयजोर्ङ्वनिप् संवि दन्तीति वचनविपरिणामेन योज्यम् यानगोपीत् अरक्षीत् मखेषु सरामः लुकि रूपन्नथा मखद्रुहोराक्षसाः यतोरामस्य शक्तिं ज्ञातवन्तः ॥ २७ ॥ ज०म०

संविन्तइत्यादि। न केवलमहमेव वेद्मि खरदूषणावपि तस्य शक्तिं संविन्तः ज्ञातवन्तौ ताडका वेत्तीतिवत् की सहयु ध्वानौ तेन सह युद्धवन्तौ राजसुयिति क्वनिप् यज्वानस्याहिताग्न यस्य विदन्ति पूर्व्वेण क्वनिप् याडुखाच जिः सुत्वानः सुत्वभिः कृतसोमपानैः सहिताः पूर्व्वेण क्वनिप् ह्रस्वतन्पितीति तन् तेषां आने हेतुमाह मखेषु यज्ञेषु संयानगोपीत् अरक्षीत् तेषां यज्ञे भ०

राक्षसहननात् तेऽपि जानन्तीत्यर्थः गुपूरक्षणे वारेइति आयो ऽभावः पक्षे व्यांसिः वेमूदिति पक्षे दम् ॥ ३७ ॥

सुखजातः सुरापीतो नृजग्धोमाल्यधारयः। अधि लङ्कं स्त्रियोदीव्य मारब्धा बलिविग्रहं ॥ ३८ ॥

ज०म० सुख। यतएवन्दरूपस्थानः स तस्माद्बलिना रामेण विग्रह मारब्धाः माकार्षीः रभेराङ्पूर्व्वात् माङि लुङ् थास् झलोझ लीति सिज्लोपः झषस्तथोर्धोधः झलाञ्जश्झशि किद्धार्थेमि त्याह अधिलङ्कं लङ्कायामधि विभक्त्यर्थेऽव्ययोभावः स्त्रियोदीव्य क्रीड लोटि रूपम् दिवःकर्म्मचेति कर्म्मसंज्ञायां वामृशसोरि तीयङ् कीदृशः सुखजातः जातं सुखमस्येति बहुब्रीहिः क्तता सवपानत्वात् यदाह सुरापीतः पीतमदिरः नृजग्धः भुक्तमानुषः भिक्षायामदोजग्धिः पूर्व्ववद्बहुलम् एषु वाहिताग्न्यादिदर्शनात्प रनिपातः माल्यन्धारयतीति माल्यधारयः अनुपसर्गात् लिम्पे त्यादिना शः ॥ ३८ ॥

भ० सुखेत्यादि। रामोदुरूपस्थान एव अतस्तेन बलिना सह विग्रहं युद्धं मारब्धाः माकार्षीः आङ्रभेष्टी थास् झसस्था दिति सिलोपः ढभात्तथोरिति थस्य धः अधिलङ्कं लङ्कायामधि कृत्य स्त्रियोदीव्य स्त्रीभिः क्रीड कारकार्थेऽव्ययीभावः दिवसृतु इत्यादिना दिवः श्यन् र्व्वमच्तयीति र्घः हेर्लोपः दिवोऽर्थेवेति करणे द्वितीया कीदृशः सुखं जातमस्य सुरा पीता येन ना मनु ष्योजग्धोभक्षितोयेन स तथा एषु अग्न्याहितादित्वात् का

न्तस्य परनिपात इति परः स्वमते पूर्व्वपरनिपातयोर्व्विवक्षा धीनत्वं दैवकयोऽन्वय इत्युक्तेः जग्धोऽदोयपि चेति जग्धादेशः माल्यानि धारयतीति माल्यिसातीति अः॥ ३८॥

तं भीतङ्कारमाक्रुश्य रावणः प्रत्यभाषत। यातयामं विजितवान् स रामं यदि किन्ततः॥ ३९॥

तंभी। तम्मारीचम्पूर्व्वोक्तन्निराकुर्व्वन् रावणः प्रत्यभाषत प्रत्युक्त वान् लङि रूपम् भीतङ्कारमाक्रुश्य भीतङ्कृला भीतोऽसीति कर्म्म ण्याक्रोशे क्रञः खमुञ् यातयामङ्गतवयसं यदि विजितवान् रा मोदाशरथिः किन्ततः किं तापसः शूरः॥ ३९॥ ज०म०

तमित्यादि। भीतङ्कारं त्वं भीतोऽसीत्युक्त्वा आक्रुश्य तं मारीचं रावणः प्रत्यभाषत प्रत्यूचे भीतंकारमिति कर्म्मण्याक्रोशे क्रञो भाषणार्थे क्त्वा चणम् खिदश्चेति परः स्वमते तमाक्रुश्य प्रत्य भाषत तं किम्भूतं भीतं भययुक्तं पुनः किम्भूतं कारं घोरणे दुरूप स्याम इत्यादेर्व्विज्ञापयितारं कृकङ्विज्ञाने इत्यस्मात् ञ्यन्तात् कभातेऽसीति कर्त्तरि धञ् किम्वा चणम्वेत्यस्य योगविभागात् आक्रोशे चणम् मनीषादित्वात् पूर्व्वपदस्य दीर्घान्तत्वं किं प्रत्य भाषतेत्याह स राघवोयातयामं वृद्धं रामं जामदग्न्यं विजित वान् ततः किं नहि वृद्धजयेन शौर्य्यं ख्यायते। यातयामस्तु स्यात् परित्यक्तोजिह्मितेऽपि चेति विश्वः॥ ३९॥ भ०

अघानि ताडका तेन लज्जाभयविभूषणा। स्त्रीज
ने यदि तच्छ्लाघ्यं धिग्लोकं क्षुद्रमानसं ॥ ४० ॥

ज०म० अघा। तेन रामेण ताडका अघानि व्यापादिता हन्तेः क
र्मणि लुङ् लज्जा भयं च विभूषणं यस्याः स्त्रीलाक्ष शौर्यम् एवं
विधाया अनेन रामेण यदि गर्ह्यमपि हननं स्त्रीजने श्लाघ्यं श्लाघ
नीयम् कृत्यानाङ्कर्त्तरिवेति तृतीया तं धिक् तं लोकं क्षुद्रमानसं
हीनमानसम् ॥ ४० ॥

भ० अघानीत्यादि। लज्जा भयञ्च विभूषणं यस्याः सा ताडका
तेन रामेण अघानि मारिता हन्तेः कर्मणि टी रतनोर्यंगिणौ
खेर्रोघोञ्जितिचेति घलं स्त्रीजने तत्कर्म यदि श्लाघनीयं तदा
क्षुद्रमानसं हीनचित्तं लोकं धिक् धिक्षमयेति द्वी ॥ ४० ॥

यज्ञेष्वेनर्द्दिनमसौ शरैर्भीरुमभाययत्। कुब्रह्मयथ
के रामो भवन्तं पौरुषं न तत् ॥ ४१ ॥

ज०म० यज्ञे। असौ रामोयज्ञवनभीरुं शरैरभाययत् भायितवान्
णुगात्मनेपदे न भवतः भयहेतोरभावात् अत्र हि शरेभ्यो
भयम् न तु रामात् तत् किम्पौरुषम्पुरुषकारः किमसौ पुवादित्वा
दण् गेहेनर्द्दिनञ्च इदएव नर्द्दिनं पाचेषमितादित्वात्तः कुब्रह्मयथ
के कुत्सिता ब्रह्माणः कुब्रह्माः कुःपापार्थे इति सः कुब्रह्मान
न्यतरस्यामिति समासान्तष्टच् तेषां कुत्सितो यज्ञः तस्मिन्नति

कुत्सायाः कन् तेन ब्रह्मबन्धोऽहं राजन्येन निरस्तः इत्ययुक्तमुक्तम् ॥ ४१ ॥

यद्ग इत्यादि। असौ रामः कुब्रह्मणके यज्ञवन्तं शरैरभा भ॰ ययत् अत्रासयत् तदपि न पौरुषं कथमित्याह भीरुं भयशीलं अतएव गेहेनर्द्दिनं खगृह एव नर्द्दतीति पात्रादित्वात् पात्रे समितादित्वात् क्षेपे समासो विभक्त्यलोपश्चेति परः अभाययदि ति भियोऽन्यन्तात् णौ ञिभियोर्घ्वाऽर्थे ञौ मश्चेत्यस्य भीर्भीषि त्यस्य च नात्र विषयः यतः शरेभ्य एवात्र भयं विवक्षितं नतु प्रयोजकात्कर्त्तुः कुत्सितो ब्रह्मा ब्राह्मणः कुब्रह्मा देशाद्ब्रह्मणः कुमहद्भ्यान्तु वेति पक्षे षः तस्य कुत्सितोऽयमिति निन्दायां विका रसंघेत्यादिना कः अतएव प्रयोजनाभावात्तत्र समया राक्षसा न गच्छन्ति पुरुषस्य भावः कर्म्म वेति पूर्व्वेण ष्णः ॥ ४१ ॥

चिरकालोषितं जीर्णं कीटनिष्कुषितं धनुः। किं
चित्रं यदि रामेण भग्नं क्षत्रियकान्तिके ॥ ४२ ॥

चिर। यदि रामेण क्षत्रियकान्तिके कुत्सितक्षत्रियसमीपे ज॰म॰ भग्नन्धनुः किन्तच्चित्रमाश्चर्य्यं क्षत्रिया जनकादयः तस्य कुत्साया कन् क्षत्रियकस्यान्तिके दूरान्तिकार्थयोगे षष्ठीसमासं विधाय पश्चात्सप्तम्यधिकरणे चेति चकाराद्दूरान्तिकार्थेभ्यश्चेति सप्तमी किमिति न चित्रमित्याह चिरकालमुषितमिति कालाध्वनोरि ति द्वितीयां विधाय अत्यन्तसंयोगे चेति द्वितीयासः जीर्णञ्च

रकालोषितत्वात् वृष्वयोर्हानौ निष्ठा च्वतईङ्क्षातोः इकोहलि चेति दीर्घः रदाभ्यामिति निष्ठानत्वम् कीटैर्घुणैर्निष्कुषितमुष्मा दितं निरःकुष इत्यनुवर्त्तमाने इण्निष्ठायामितीट्॥ ४२ ॥

चिरेत्यादि। च्वत्रियकान्तिके कुत्सितानां च्वत्रियाणां जन कादीनां निकटे यदि रामेण धनुर्भग्नं तदपि किं चित्रं कथं न चित्रमित्याह चिरकालोषितं चिरकालं व्याप्य स्थितं सदाध्वादि व्याप्ताविति द्वितीया तथा समासः ततएव जीर्णं जृजरायां हानौ क्तः ऋदिरणावितीर् वंनत्युतयीति दीर्घः ऋल्वादीदिति नका रः कीटैर्घुणैर्निष्कुषितं अन्तःखादितं नेमडीत्यादौ निष्कुषवर्त्त नात् इम् षत्वविधानं गवाक्षजालैरभिनिष्पतत्त्व इत्यत्र व्याख्या ॥ ४२।

वनतापसके वीरौ विपक्षे गलितादरौ। किं चित्रं यदि सावज्ञौ मन्नतुः खरदूषणौ ॥ ४३॥

ज०म० वन। वने तापसोवनतापसः कुत्सायां कन् तस्मिन् तापसके रामे सावज्ञत्वाद्गलितादरौ विपक्षे किमयङ्करिष्यतीत्यश्रद्धये व योधितवन्तौ खरदूषणौ यदि मन्नतुः म्नतौ कोदोषः कि ञ्चिचं म्रियतेर्लुङ्लिङोश्चेति नियमात् लिव्यात्मनेपदन्न भवति ॥ ४३ ॥

भ० वनेत्यादि। खरदूषणौ यदि मन्नतुः तदापि किञ्चित्रं नैवा श्चर्य्यमित्यर्थः तपःशीलस्तापसः वने कुत्सितस्तापसो वनतापसको रामस्तस्मिन विपक्षे किमयं करिष्यतीति मत्वा गलितादरौ

गौरावपि वाक्यौ विषयादराभावात् युद्धेऽपि सावहेलौ रुङ् ष्टौबीमिति नियमात् नवशःपमे इति अितोऽन्यत्वात् यौः परस्मैपदं॥ ४३॥

त्वञ्च भीरुः सुदुर्बुद्धे नित्यञ्च रणकाम्यसि। गुणां-
श्चापकुषेऽस्माकं स्तौषि शत्रूंश्च नः सदा॥ ४४॥

त्वञ्च। हे दुर्बुद्धे त्वम्पुनः भीरुश्च भवसि नित्यञ्च रणकाम्यसि आत्मनोऽनिशं रणमिच्छसि आत्मेच्छायाङ्काम्यच् अस्माकञ्च सतो गुणानपकुषे अपनयसि क्रुङ् अपनये आदादिकः ङित्त्वात्तङ् शत्रूंश्च नोऽस्माकं स्तौषि स्तौतेः उतोवृद्धिर्लुकि हलि॥ ४४॥ ज०म०

त्वञ्चेत्यादि। हे दुर्बुद्धे मारीच त्वं भीरुश्च भवसि रणकाम्यसि च आत्मनो रणमिच्छसि च त्वंःकाम्यक्त्वेच्छायां भीरोर्युद्धेच्छाऽनुचितैव युद्धे पराजयोऽवश्यं एवमस्माकं गुणांश्चापकुषे शौर्य्यादीन् अपनयसि क्रुङ् लचार्य्ये सदा नोऽस्माकं शत्रून् स्तौषि ष्टुञ् स्तुतौ रपिद्धस्तुतोऽदेर्मिः॥ ४४॥

शीर्षच्छेद्यमतोऽहं त्वां करोमि क्षितिवर्द्धनं। कार-
यिष्यामि वा हत्यं विजिघृक्षुर्व्वनौकसौ ४५॥

शीर्ष। यतएवम्विधस्त्वन्दुष्टः अतोऽहं त्वामीदितीयाया इत्या ष्टमिकलत्वपेन त्वादेशः शीर्षछेद्यं शीर्षच्छेदाई शीर्षच्छेदायत् ज०म०

चितिवर्द्धनङ्करोमि शिरश्छित्वा श्थापादयामीत्यर्थः अथवा कृत्य करणोयं विभाषाकृवृषोरिति क्यप् कारयिष्यामि ह्रक्रोरिति द्विकर्म्मकता विजिघृक्षुः विग्रहीतुमिच्छुः सनिग्रहगुहोश्चेतीट् प्रति षेधः रुदविदेत्यादिना सनः कित्त्वे ग्रहिज्येत्यादिना सम्प्रसारणम् होढः एकाचो वशोभष् षढोःकसि वनौकसौ रामलक्ष्मणौ वन मोकोगृहं ययोः नलोकेति कर्म्मणि षष्ठ्याः प्रतिषेधः॥ ४५॥

भ० शीर्षेत्यादि। अतः कारणात् अस्मद्गुणापकर्षात् युवाव नाच शीर्षच्छेद्यं शीर्षच्छेदार्हं त्वां चितिवर्द्धनं मृतं करोमि शिर श्छित्वा मारयामीत्यर्थः शीर्षच्छेदमर्हतीत्यर्थे ढघेकादिति यः किम्वा छिदोण्यत् शीर्षे छेद्यः शीर्षे छेद्यं यस्येति वा विग्रहः अथवा कृत्यं कार्य्यं त्वां कारयिष्यामि यदि जीवनेच्छास्ति तदा मत्कृत्यं कुर्व्वितिभावः कृवृषमृजांति पचे क्यप् घोऽत्रोजेरिति प्रयोज्य कर्त्तुः पचे कर्म्मत्वं वनमेव श्रोको ययोस्तौ रामलक्ष्मणौ विग्रहीतुं योधयितुं अभिभवितुं वा इच्छुरहं ग्रहेः सन् नेमुगुहयह इति इमृनिषेधः ग्रहस्वपप्रच्छांजिः॥ ४५॥

तमुद्यतनिशातासिं प्रत्यवाच जिजीविषुः। मारी चोऽनुनयंस्त्रासादभ्यमित्र्यो भवामि ते॥ ४६॥

ज०म० तमु। तं रावणं एवमुक्तवन्तं निशात इति शाछोरन्यतरस्यामि तीत्वाभावपचे रूपं उद्यतः उत्थापितः निशातस्तीक्ष्णोऽसिर्येन तम्मारीचस्त्रासात् प्रत्युवाच वचनमुक्तवान् अभ्यमित्र्योभवामि

ते अमित्रस्याभिमुखमभ्यमित्रमाभिमुख्येऽव्ययीभावः अभ्यमित्र मलङ्गामीत्यस्मिन्नर्थे अभ्यमित्राच्छचेति चकाराद्यत्खौचेति यत् त्वदमित्राभिमुखङ्गच्छामीत्यर्थः अनुनयन् अनुकूलयन् किमर्थं जिजीविषुः जीवितुमिच्छुः॥ ४६॥

तमित्यादि। मारीचोजिजीविषुर्जीवितुमिच्छुः सन् चासात् भ० अनुनयन् तं रावणं प्रत्युवाच त्रासहेतुमाह उद्यत उत्थापितो निशातस्तीक्ष्णोऽसिर्येन तं निशातेति छाशोर्वेति श्यतेः पचे न क्तिः किं प्रत्युवाचेत्याह अहं तेतव अभ्यमित्र्यः शत्रुभिमुखगामी भवामि अमित्रस्य अभिमुखं अभ्यमित्रं आभिमुख्येऽव्ययीभावः अभ्यमित्र शब्दादिदं गच्छतीत्यर्थे विकारसंघेति यः॥ ४६॥

हरामि रामसौमित्री मृगोभूत्वा मृगद्युवौ। उद्यो गमभ्यमित्रीणो यथेष्टं त्वञ्च सन्तनु॥ ४७॥

हरा। अहम्मृगोभूत्वा रामसौमित्री हरामि देशान्तरम्प्रा ज०म० पयामि आखेटकाभिरतत्वात् यदाह मृगद्युवौ मृगैर्दीव्यत इति क्विप् च्छ्वोःशूडनुनासिके चेति चकारात् क्वौ च ऊट् यणा देशः अथवा मृगद्युताविति पाठान्तरम् तत्र द्युअभिगमने इ गात् द्यौति अभिगच्छतीति क्विप् त्वञ्च यथेष्टं यथारुचि तमु द्योगं सन्तनु विस्तारकुर्मित्यर्थः तनोतेर्लोटि उतश्चेति हेर्लुक् अभ्यमित्रीणः अमित्राभिमुखमलङ्गामी अभ्यमित्राच्छचेति चका राद्यत्खौचेति खः॥ ४७॥

भ० हरेत्यादि। उपायं दर्शयन्नाह अहं सुवर्णो भूत्वा रामसौमित्री हरामि अन्यच नयामि यतस्तौ मृगयुवौ मृणयारशिकौ मृगैर्दीव्यत इति क्विपि छ्वोः शूठाविति वश्चोट् धोरिण्युवपि मृगद्युताविति पाठे द्युलभिसर्पणे इत्यस्मात् क्विपि स्वयतम्पितीति तन् मृगाभिगामिनावित्यर्थः ततस्त्वमपि अभ्यमित्रीणोयथेष्टमुद्योगं सन्तनु तनदुर्ध्वविस्तारे हेर्लोपोऽसोपोऽश्वेति हिलोपः अभ्यमित्रीय इति अभ्यमित्र्यवत् ॥ ४७ ॥

ततश्चित्रीयमाणोऽसौ हेमरत्नमयो मृगः। यथा
मुखीनः सीतायाः पुप्लुवे बहु लोभयन् ॥ ४८ ॥

ज०म० ततः। उक्तानन्तरमसौ मारीचो मायामृगीभूतः सन् हेमरत्नमयः रत्नस्य हेमचेति विगृह्य मयड्वैतयोर्भाषायामिति विकारे मयट् निर्मललात् सीताया अपतो यथामुखीनः प्रतिबिम्बाश्रय इव भूत्वा पुप्लुवे भ्रमतिस्म इवशब्दलोपो द्रष्टव्यः यथामुखन्दर्शनमिति यथामुखसम्मुखस्य दर्शनः खः बहु लोभयन् सुष्ठु स्पृहाञ्जनयन् यतश्चित्रीयमाणः आश्चर्यं भवन् हेमरत्नमयत्वात् नमोवरिवइत्यादिना क्यच् चित्रङ्आश्चर्ये ङकारआत्मनेपदार्थत्वात् शानच् अवयवकृतं लिङ्गं समुदायस्य भवतीति ॥ ४८ ॥

भ० ततइत्यादि। ततोवचनानन्तरं असौ मारीचो मायया हेमरत्नमयो मृगः सन् सीतायायथामुखीनोऽग्रतः स्थायी भूत्वा बहु

लोमयम् चक्षुःस्पृहां जनयन् पुप्लुवे भ्रमतिस्म मुकुन्तौ ठौ चित्रं करोतीति चित्रीयमाणः चित्रङ्‌आश्चर्य्ये कण्ड्वादित्वात् क्यः ङित्वादात्मनेपदं हेम रत्नञ्च प्रस्तुतं यत्रेति प्रस्तुतार्थे मयट् बाहुल्यात् विकारइत्येके मुखस्य सदृशं यथामुखं दर्पणादिस्थ प्रतिबिम्बमुच्यते सादृश्येऽव्ययीभावः मृगस्य रत्नमयत्वेन स्वच्छ तया यथा मुखं दृश्यतेऽत्रेति विकारसंघेत्यादिना तदत्र दृश्यते इत्यर्थे ईनः वस्तुतस्तु उपचारात् यथामुखीनशब्दोऽभिमुखमात्रेऽपि वर्त्तते सीताभिमुखोभूत्वेत्यर्थः ॥ ४८ ॥

तेनादुद्यूषयद्रामं मृगेण मृगलोचना। मैथिली विपुलोरस्कं प्रावुवूर्षुर्मृगाजिनं ॥ ४९ ॥

तेना। तेन मृगेण मैथिली सीता राममदुद्यूषयत् क्रीडितुं अंकमिकन्तमयुक्तवती गृह्णातामयमिति इवन्तस्य दिवेः सनीवन्तेत्यादिना यदा नेट् तदा च्छ्वोःशूट् द्विर्व्वचनम् तस्मात्सनन्तण्यन्तात् लङि रूपम् मृगलोचना मृगस्य लोचने इव लोचने यस्याः मध्यपदलोपी सः विपुलोरस्कं विस्तीर्णवक्षस्थलमुरःप्रभृतिभ्यः कप् किमर्थमदुद्यूषयत् मृगाजिनमृगचर्म्म प्रावुवूर्षुः प्रावरितुमिच्छुः प्राङ्पूर्व्वस्य वृङ इट्सनिवेत्यनिट्पक्षे अज्झनगमां सनीति दीर्घः उदोष्ठ्यपूर्व्वस्येत्युत्वम् रपरत्वं र्वोरुपधायादीर्घ इकः द्विर्व्वचनम् इणकोरिति षत्वम् रेफस्यैकग्रहणेन ग्रहणाद्गयोश्छयोऽपि वकार ओष्ठ्यग्रहणेन गृह्यते ॥ ४९ ॥

भ॰ तेनेत्यादि। मैथिली मृगाजिनं मृगस्य चर्म्म प्रावुवूर्षुः प्रावरीतुं परिधातुमिच्छुः सती तेन मृगेण रामं अदुधूषयत् क्रीडितुमिच्छामकारयत् दिवेः सन् भ्रस्जश्रिस्वृयूर्णुभरदरिद्रेत्यादिना पक्षेऽनिम् पूर्णाजिमोति गुणाभावे छ्वोःशूठाविति वस्य ऊठं ततोद्वित्वं ञिःप्रेरणे दिवेरकर्म्मकत्वात् णौञ्ञोरिति अणोज्यकर्त्तुः कर्म्मत्वं सा कीदृशी मृगस्येव लोचने यस्याः सा तथा रामं कीदृशं विपुलं प्रकीर्णमुरोवक्षःस्थलं यस्य तं उरःप्रभृतितः कोवऊश्रीह्याविति परः समते स्वार्थे कः प्रावुवूर्षुरिति वृञ्वरणे सन् णौऽज्यनिङ्गमां स्याद्दुरिति पक्षेऽनिम् दन्त्योष्ठ्यस्याणोष्ठ्यकार्य्यत्वात् च्छदिरणावूर्णोष्ठ्यादिति उर् व्यनचतयीति घः॥ ४८॥

योगचेमकरं कृत्वा सीतायां लक्ष्मणं ततः। मृगस्यानुपदी रामो जगाम गजविक्रमः॥ ५०॥

ज॰म॰ योग। ततोदुधूषानन्तरं रामोजगाम योगचेमौ शरीरस्थितिपालने करोतीति कृञोहेत्वित्यादिना हेतौ टः ग्रहणवता तदन्तविधेरभावात् चेमप्रियमद्रेण्चेत्यण्खचौ न भवतः सीतायाः स्थितिपालनहेतुभूतं लक्ष्मणकृत्वा रामः मृगस्यानुपदी अन्वेष्टा अनुपद्यन्वेष्टेति निपातनात्साधुः गजविक्रमः गजगमनमिव गमनं यस्येत्यर्थः॥ ५०॥

भ॰ योगेत्यादि। ततोऽनन्तरं लक्ष्मणं जानक्या योगचेमकरं

त्वा गजविक्रमो हस्तिपराक्रमो हस्तिगमनतुल्यगमनोवा रामो मृगस्यानुपदी सन् जगाम फलपुष्पादेरलब्धस्य साधनं योगः शरीरादेर्लब्धस्य पालनं क्षेमः तौ करोतीति क्षेमकृत् अनुपदं यातीति वाऽऽख्यात् इन् अनुपदमनुगमनं विद्यतेऽस्येति नैका जादिति इन् अन्वेष्टर्य्यनुपदादिनिति परसूत्रं ॥ ५० ॥

स्थायं स्थायं क्वचिद्यान्तं क्रान्त्वा क्रान्त्वा स्थितं क्वचित्।
वीक्षमाणोमृगं रामश्चित्रवृत्तिं विसिष्मिये॥५१॥

स्थायम्। मृगश्चित्रवृत्तिमद्भुतशरीरचेष्टं वीक्षमाणोरामो विसिष्मिये विस्मितः स्मिङोङित्त्वादात्मनेपदं षोपदेशत्वाभावे णः परस्य सस्य षः चित्रवृत्तितां दर्शयन्नाह स्थायं स्थायं स्थित्वा स्थित्वा क्वचित्प्रदेशे यान्तं क्रान्त्वा क्रान्त्वा क्वचित्प्रदेशे उत्प्लुत्योत्प्लुत्य स्थितम् आभीक्ष्ण्ये णमुल् क्त्वाच्चेणमुलौ द्विर्व्वचनञ्च ॥ ५१ ॥ ज॰म॰

स्थायमित्यादि। मृगं वीक्षमाणो रामोविसिष्मिये विस्मितः स्मिङश्चा रूपं षोपदेशत्वात् खेरित्वात् षत्वं अध्वोरितीयः विस्मये हेतुमाह चित्रवृत्तिं आश्चर्य्यचेष्टं चित्रवृत्तित्वं दर्शयति स्थित्वा स्थित्वा क्वचित् गच्छन्तं णमाभीक्ष्ण्येपूर्व्वकाले इति णम् आभीक्ष्ण्ये द्वित्वं लोकतः सिद्धमिति स्मारं स्मारं नमसीत्युदाहरणेन ज्ञापितं क्वचित् क्रान्त्वा क्रान्त्वा उत्प्लुत्य उत्प्लुत्य स्थितं क्रमोर्घो वेति पक्षे दीर्घः॥ ५१ ॥ भ॰

चिरं क्लिशित्वा मर्म्माविद्रामोविलुभितप्लवं। शब्दायमानमव्यात्सीत् भयदं चणदाचरं ॥ ५२ ॥

ज॰म॰ चिरम्। रामः चणदाचरमारीचमव्यात्सीत् विद्धवान् व्यधे लुङि हलन्तलचणाद्वृद्धिः मर्म्माविद्रामः मर्म्माणि विध्यतीति क्विप् नहिवृतीत्यादिना पूर्व्वपदस्य दीर्घत्वं चिरं क्लिशित्वा महान्तङ्का लमायस्य अत्यन्तसंयोगे द्वितीया क्लिशः क्त्वानिष्ठयोरिति विकल्पेनेट् तत्र रलोव्युपधादिति कित्त्वविकल्पे मृडमृदेत्यादिना कित्त्वं विलुभितप्लवं व्याकुलितगमनं लुभोविमोहन इतीट् विमोहनं व्याकुलीकरणम् शब्दायमानं शब्दङ्कुर्व्वाणं शब्दवैरेति क्यङ् भयदश्चिशाचरं शब्दविशेषणं वा ॥ ५२ ॥

भ॰ चिरमित्यादि। रामश्चिरकालं क्लिशित्वा आन्तोभूत्वा भयदायकं चणदाचरं तं राचसं अव्यात्सीत् व्यधीताडे टी पूक्लिशुदितइम् इति क्लिशः पचे इम् सेमत्तुधेत्यादौ क्लिशवर्ज्जनात् न गुणः मर्म्माणि विध्यतीति क्विप् जिः वीरुधोधक्क्वाविति दीर्घनिर्द्देशात् क्वचित् क्विवन्ते पूर्व्वपददीर्घत्वं स्यादिति सूचितं आङ्पूर्व्वस्य रूपं वा मर्म्मावित् मर्म्मज्ञोवा वेत्तेरूपं विलुभितप्लवं मर्म्मताडनात् व्याकुलगतिं लुभश्चविमोहने विमोहनं व्याकुलीकरणं चुधवसपूजेत्यादिना इम् शब्दायमानं शब्दं कुर्व्वाणं शब्दसुखकष्टादेरिति क्यः भयदमिति ब्रमस्य शब्दक्रियाया वा विशेषणं ॥ ५२ ॥

श्रुत्वा विस्फूर्जथुप्रख्यं निनादं परिदेविनी। मत्वा कष्टश्रितं रामं सौमित्रिं गन्तुमैजिहत् ॥ ५३ ॥

श्रुत्वा। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं टुओस्फूर्जावज्रनिर्घोषे ट्वितोऽथुच् निनादं शब्दं नीगदनदेति विकल्पनात् पक्षे घञ् श्रुत्वा मैथिली कष्टश्रितं कष्टमाप्तं रामं द्वितीयाश्रितेत्यादिना सः मत्वा बुद्ध्वा कष्टप्राप्तेन रामेण मृतमिति परिदेविनी परिदेवन शीला शङ्कमाना सम्पृचानुरुधेत्यादिना घिनुण् सौमित्रिङ्ग न्तुमैजिहत् ईहाञ्चारितवती ईहेर्ण्यन्तात् लुङि द्विर्वचनेचीति स्था निवद्भावादजादेर्द्वितीयस्येति हिशब्दस्य द्विर्वचनम् अभ्यास कार्य्यञ्च॥ ५३॥ ज०म०

श्रुत्वेत्यादि। विस्फूर्जथुप्रख्यं वज्रनिर्घोषतुल्यं निनादं श्रुत्वा कष्टश्रितं कष्टं प्राप्तं रामं मत्वा परिदेविनी परिदेवनशीला अर्थात् सीता सौमित्रिं गन्तुं ऐजिहत् चेष्टामकारयत् ईहङ्चे ष्टायां ञिःप्रेरणे ञ्कि ईर्दिलं टुओस्फूर्जावज्रनिर्घोषे दीर्घवानि त्यके ट्विसोऽथुर्भावे॥ ५३॥ भ०

एष प्राष्टषिजामोदनादी भ्राता विरौति ते। भ्रा तेयं कुरु सौमित्रे भयात्त्रायस्व राघवं॥ ५४॥

एष। एष ते भ्राता रौति उतोवृद्धिरित्यौकारः प्राष्टषि जातः प्राष्टषिजः सप्तम्या जनेर्डः प्राष्टडित्यादिना सप्तम्या अलुक् यथामोदस्येति विशेषणमिति सः तदवदतीति कर्त्तर्य्युपमाने णिनिः तस्मात्सौमित्रे भ्रातेयं भ्रातिभावकर्त्म्कर्म वा कुरु कपिभ्रा त्योर्ढक् तेन भयात्त्रायस्व राघवम्॥ ५४॥ ज०म०

भ० एषइत्यादि। हे सौमित्रे एष ते तव भ्राता विरौति शब्दायते इत्यध्वनौ रपिवृत्सुतोऽदेर्मि: प्रावृषि वर्षाकाले जातः प्रावृषिजः हनजनादिति डः शरसिजमित्युदाहरता क्वचित् समासे विभक्तेरलुगिति सूचितं अम्भोददातीति अम्भोदः पूर्ववत् डः प्रावृषिजश्चासौ अम्भोदोमेघश्चेति सइव नदतीति ग्रहादित्वा णिन् त्वं भ्रातेयं भ्रातिकर्म कुरु किमदित्याह भयाद्राघवं चायस्व त्रिकारश्चेत्यादिना कर्मण्यर्थे भ्रातेः ण्येयः ॥ ५४ ॥

रामसंघुषितं नैतन्मृगस्यैव विवञ्चिषोः। रामस्व नितसङ्काशः स्वान इत्यवदत्स तां ॥ ५५ ॥

ज०म० राम। रामसङ्घुषितं रामशब्दितमेतन्न भवति घुषिरविशब्दार्थः तस्य निष्ठायां रुष्यमलरेत्यादिना विकल्पेनेट् मृगस्य विवञ्चिषोः छलयितुमिच्छोः वञ्चु गतौ भौवादिकः तस्यानेकार्थत्वात् प्रलम्भनइति चौरादिकस्याण्यन्तस्य वा प्रयोगः येषामनित्यण्यन्ताश्चुरादयइति दर्शनं तेषां मतेनाचापि सिध्यति एष स्वानोध्वानः स्वनहसोर्वेति पक्षे घञ् कीदृशः रामस्वनितसङ्काशः रामशब्दानुकारीति तां सीतां एवमवदत् उक्तवान् सलक्ष्मणः ॥ ५५ ॥

भ० रामेत्यादि। सलक्ष्मणस्तां सीतां इत्यवदत् किमदित्याह एतन्न रामसंघुषितं घुषरवे विवञ्चिषोर्वञ्चयितुं छलयितुमिच्छोर्मृगस्यैव एष स्वानः शब्दः रामस्वनिततुल्यः वञ्चकत्वञ्चनेकित्वात् चौरादिकः वञ्चनं प्रलम्भनं चुर्भ्योञ्जिर्ण्वेति ञ्यभावपक्षे

रूपमिदं केचित्तु वस्नगत्यां चौरादिकोधातोरनेकार्थत्वात् प्रस्न अनेऽपि वर्त्तत इत्याहुः स्वनशब्दे भावे क्ते स्वनितं घञि स्वानः ॥ ५५ ॥

आप्यानस्कन्धकण्ठांसं हृषितं सहितुं रणे। प्रोर्णु वन्तं दिशोबाणैः काकुत्स्थं भीरु कः क्षमः॥ ५६ ॥

आप्या। प्यैङ्वृद्धौ अस्मादाङ्पूर्व्वात्संयोगादेरातोधातो यण्वत इति निष्ठातोनः ओप्यायीवृद्धावित्यस्य वा रूपम् ओदितश्चेति निष्ठानत्वं पीभावस्तु आङ्पूर्व्वस्य स्वन्धूधसोरिति वच नात् इह न भवति आप्यानस्कन्ध इति आप्यानं स्थूलं स्कन्ध कण्ठांसं यस्य काकुत्स्थस्य काङ्गिरोंऽसः तस्य पश्चिमोभागः स्कन्धः तं हृषितं क्रुद्धं रणे संग्रामे सहितुं हे भीरु कातरे कः क्षमः शक्तः अपि तु न कोऽपीत्यर्थः क्षमेः शक्नोत्यर्थत्वात् तदुपपदे शक धृषेत्यादिना तुमुन् तोषसहेत्यादिना वेट् ककुत्स्थस्यापत्यं का कुत्स्थः शिवादिभ्योऽण् कस्मान्न क्षम इत्याह प्रोर्णुवन्तन्दिशोबाणैः यतः सर्व्वा दिशः बाणैः छादयन्तं ऊर्णोतेः शतरि उवङ् क्षमत इति क्षमः पचाद्यच् ॥ ५६ ॥ ज०म०

आप्यानेत्यादि। हे भीरु कातरस्वभावे रणे हृषितं क्रुध्यन्तं का कुत्स्थं रामं सहितुं अभिभवितुं कः क्षमः शक्तः न कोऽपीत्यर्थः केशसहलुभइत्यादिना उभयत्र पक्षे इम् क्षमेः पचादित्वादन् ककुत्स्थस्यापत्यं इति शिवादित्वात् ष्णः आप्यानं स्थूलं स्कन्धक ण्ठांसं यस्य तं ओप्यायीङ् वृद्धौ ओदित्वात् स्वाद्योदिति क्तस्य नकारः प्योर्लोपो व्यये इति यलोपः आङोऽन्धूधसोरिति निय भ०

मात् न पादेश: पैडुन्ट्द्राविव्यस्य रूपं वा असोभुजशिर: वापे दिश: प्रोर्णुवन्तं आच्छादयन्तं ॥ ५६ ॥

देहं बिभ्रक्षुरस्त्राग्नौ मृगः प्राणैर्दिदेविषन्। ज्याघुष्टकठिनाङ्गुष्ठं राममायान्मुमूर्षया॥ ५७॥

ज॰म॰ देहम्। एष मृगोराममायात् आगतवान् यातेर्लङि रूपम् किमर्थं देहं शरीरं अस्त्राग्नौ अस्त्रे अग्नाविव बिभ्रक्षुः भ्रष्टुमिच्छुः भ्रस्जेः सनीवन्तर्द्धेत्यनेनेड्भावपक्षे स्कोःसंयोगाद्योरित्यनेन सलोपे षत्वकुत्वयोश्च रूपम् प्राणैर्दिदेविषन् क्रीडितुमिच्छन् दिवः कर्म्म चेति चकारात् करणसंज्ञा सनीवन्तेतीट् पक्षे रूपम् ज्यया गुणेन घुष्टौ निघृष्टौ ततएव कठिनौ अङ्गुष्ठौ सव्यापसव्यकर्षणा यस्य घुषिरविशब्दनइति निष्ठायामनिट् मुमूर्षयः मर्त्तमिच्छया मृङ: सनि उदोष्ठ्यपूर्व्वस्येत्युत्वम् अः प्रत्ययात् ॥ ५७ ॥

भ॰ देहमित्यादि। एष मृगोमुमूर्षया मर्त्तुमिच्छया राममायात् आगच्छत् याप्रापणे घी मृङः सनि धौऽज्झनिङ्गमामिति दीर्घे च्छदिरणाविति उर् रामस्य अस्त्रमग्निरिव तत्र स्वदेहं भ्रष्टुमिच्छुः भ्रस्जः सनि भ्रस्जश्रिस्वृयूर्णुभरइति इमोऽभावपक्षे स्कादेः सोलोपः व्रश्चभ्राजिति षत्व षढोःकःसे प्राणैर्दिदेविषन् क्रीडितुमिच्छन् इवन्तत्वात् पूर्व्वेण पक्षे इम् ज्याघुष्टोधनुर्गुण निष्पिष्टः कठिनाङ्गुष्ठोयस्य तं रामं घुषशब्दे घुष्टवाढेत्यादिना निपातः निपातात् निष्पेषणार्थोऽपि गम्यते गुणनिष्पेषेऽङ्गुष्ठकाठिन्यं युक्तं निपातोऽपि शब्दार्थ एव इति चेत् ज्यया घुष्टः शब्दितः मुशविद्धः कठिनाङ्गुष्ठोयस्येति ॥ ५७ ॥

अन्नून् भीषयमाणं तं रामं विस्मापयेत कः। मास्म
भैषीस्त्वयाद्यैव कृतार्थोऽन्विष्यते पतिः॥ ५८ ॥

अनून्। तं रामं अनून् भीषयमाणभीतान् कुर्व्वाणं भियोहे जं०म०
तुभये षुक् भीस्म्योर्हेतुभयइति तङ् विस्मापयेत कः चुभितचित्त
कुर्य्यात् नैवेत्यर्थः नित्यं स्मयतेरिति णावात्वम् अतीत्यादिना
पुक् निमन्त्रणे नियोगे वा लिङ् पूर्ववदात्मनेपदं तङ्गास्मास्म
भैषीः माभूर्भीता स्मोत्तरे लङ्चेति चकारात् लुङ् सिचि
वृद्धिः त्वया अद्यैव कृतार्थः पूर्णमनोरथः पतिर्दृश्यते दृशेः कर्म्म
णि लट्॥ ५८ ॥

अन्नूनित्यादि। अनून् भीषयमाणं भीतान् कुर्व्वाणं रामं को भ०
विस्मापयेत चुभितहृदयं कुर्य्यात् न कोऽपीत्यर्थः स्मिभ्योर्णाकुर्ध
मश्चेति स्मिधातोरिकार आ मश्च भीर्भीषवेति भियः पचे भीषा
देशः तस्मात् त्वं मा भैषीः भयं न कुरु मास्मेनघोव्याविति रौ
अजवदेति श्रिः मायोगे अमागमाभावः त्वया अद्यैव कृतार्थः
कृतकृत्यः पतिर्दृश्यते दृशः कर्म्मणि तो बद्धोऽकिञ्चसदृति रेफः०
॥ ५८ ॥

यायास्त्वमिति कामो मे गन्तुमुत्सहसे न च। इच्छुः
कामयितुं त्वं मामित्यसौ जगदे तया॥ ५९ ॥

याया। तदन्वेषणाय यायास्त्वमिति कामोऽभिलाषः काम जं०म०
प्रवेदने कच्चिति इत्यकच्चित्युपपदे लिङ् न च गन्तुमुत्सहसे अक

धृषेति तुमुन् तस्मात्त्वमाद्मामयितुमिच्छुः एवंशीलः समान कर्तृकेषु तुमुन् विन्दुरिच्छुरिति निपातनात्साधुः इत्येवमसौ वं चपो जगदे गदितस्तया सीतया ॥ ५८ ॥

भ० याथाइत्यादि। त्वं रामान्वेषणाय याथाइति मे मम कामोऽभिलाषः कामोऽकपितीति वौ मत्तु गन्तुं उत्सहसे तस्मात्त्वं मां कामयितुं इच्छुः इच्छतीति इच्छुः विन्दिच्छूइति निपातः कमच्चतोगुपूधूपेति कमेर्णिङ् इत्यसौ लक्ष्मणस्तया सीतया जगदे कर्मणि ठौ ॥ ५८ ॥

मृषोद्यं प्रवदन्तीं तां सत्यवद्योरघूत्तमः। निरगात् प्रत्नुहस्तं त्वं यास्यसीति ग्रपन् वशी ॥ ६० ॥

अ०म० मृषो। माङ्कामयितुमिच्छुरित्येतन्मृषोद्यम् मृषावादं राजसूयेत्यादिना भावे क्यप् यजादित्वात्सम्प्रसारणं प्रवदन्तीं तां सीतां रघूत्तमोलक्ष्मणः ग्रपन् ग्रत्नुहस्तं त्वं यास्यसीति शापमयच्छन् भौवादिकोऽत्र ग्रपिर्न दैवादिकः निरगात् निर्गतः तस्मादुटजादित्यर्थात् कथं मृषोद्यमित्याह वशी वशनं वशः इन्द्रियसंयमनं वशिरण्योरुपसंख्यानमित्यप् सयस्यास्ति सवशी जितेन्द्रियः अतएव सत्यवद्यः अवितथवादी ग्रत्नुहस्तं यास्यसीति सत्यं वदतीति कृत्यल्युटोबहुलमिति कर्त्तरि यत् वदःसुपि क्यप्चेति चकारायत् भावे वा यतं विधायार्श आदित्वात् ॥ ६० ॥

भ० मृषोद्यमित्यादि। त्वं ग्रत्नुहस्तं यास्यसीति तां सीतां ग्रपन् शापं प्रयच्छन् रघूत्तमो लक्ष्मणोनिरगात् निर्गतः इत्थगतौ

गाथां भुङ्क्षेति सेर्लुक् इच्छुः कामयितुं मामिति मृषोद्यं मिथ्या वादं प्रवदन्तीं मृषोपपदे वदेर्नित्यं क्यप् सेर्ब्रह्म्यदःक्यप्याविति न त्वरं मृषोद्यं नित्यमित्युक्तं ग्रहस्यपाद्योरिति जिः सत्यं वदतीति हज्रोः कभावइत्युक्तेः कर्त्तरि यः सत्यवद्यः सेर्ब्रह्मदःक्यप्याविति भावे ये सत्यं वद्यं विद्यते अस्येति अर्शआदित्वादद्वा सत्यं वद्यं अस्येति वज्रप्रीहिर्व्वा यद्वा वदनं वत् वदस्थैर्य्ये क्विप् विकारइत्यं त्यादिना तत्र साधावर्थे यः सत्यस्य करणे साधुरित्यर्थः वशी जितेन्द्रियः वशइन्द्रियसंयमः सोऽस्यास्तीति नैकाजादिति इन् अतएव सत्यवद्यः॥ ६०॥

कुलकं।

गते तस्मिन् जलमुचिः शुद्धदन्वावणः शिखी। जंज पूकोऽक्षमालावान् धारयो मृद्लावुनः॥ ६१॥

गते। तस्मिन् लक्ष्मणे गते सति रावणः सीतामूच इति वक्ष्य- अ०म० माणेन सम्बन्धः कीदृशः जलमुचिः स्नातइत्यर्थः शुद्धदन् निर्म्म लदशनः शुद्धा दन्ता यस्य अग्रान्तेत्यादिना दन्तस्य दत्रादेशः शिखा अस्यास्तीति शिखी परिव्राजकः श्रीह्यादित्वादिनिः जञ्ज पूकः पापाश्रयत्वात् गर्हितञ्जपतीति लुपसदेति यङ् जपजभे त्यभ्यासस्य नुक् यजजपदशां यङ् इत्यूकः अक्षमालावान् अक्ष सूत्रयुक्तः संसर्गे मतुप् धारयतीति धारयः अनुपसर्गादिति शः कस्य मृद्लावुनः नञिवंभनेर्नलोपश्चेत्यौणादिकजकारे प्र त्यये अलावूः तस्य विकारः फलमिति ओरञ् तस्य फले लुक्

नपुंसकह्रस्वत्वम् सृत्पूर्णमलावु इति मध्यपदलोपी सः क्षप्रयोगे कर्म्मणि षष्ठी इकोऽचिविभक्ताविति नुम्॥ ६१॥

भ० गते इत्यादि। तस्मिन् लक्ष्मणे गते सति रावणः समागम्य सीतामूचे इति चतुर्थश्लोकेनान्वयः कीदृशः जलशुचिः जलेन शुचिः स्नातत्वात् शुद्धा निर्मला दन्ता यस्येति शुद्धदन् निपातनात् शिखी शिखायुक्तः नैकाजादिति इन् पापाशयत्वात् गर्हितं जपतीति जञ्जपूकः गत्यर्थात् लुपसदेत्यादिना यङ् जपजभेति सेनुण् जागृयङन्तयजजपेति ऊकः यङोलुक् अक्षमालावान् अक्षसूत्रयुक्तः मृदलावुनोधारयः धारयतीति शाद्विशातिचेतीति शः ङे षी मृच अलावुञ्च इति समाहारद्वन्द्वे पर्गे कत्वं क्लीवं मृत्पूर्णमलावु मृदलावु वा भवेदलावुरालावुरालावुस्तादलावुर्चेति शब्दभेदः अलावुस्तुम्बीफलं मृत् तीर्थमृत्तिका ॥ ६१ ॥

कमण्डलुकपालेन शिरसा च मृजावता संवस्त्य लाक्षिके वस्ते माचाः संभाष्य दण्डवान् ॥ ६१ ॥

ज०म० कम। कमण्डलुना कपालेन च जातिरप्राणिनामिति द्वन्द्वे एकवद्भावः मृजावता निर्म्मलेन शिरसा च उपलक्षित इत्यम्भूते तृतीया संवस्त्य परिधाय वस्तात्समाच्छादन इति मुण्डमिश्रेत्यादिना णिच् लाक्षिके वस्त्रे लाक्षया रक्ते लाक्षारोचनेत्यादिना ठक् माचाः कमण्डल्वादिकान् संभाष्य समाचित्य राशीकृत्येत्यर्थः

भाण्डात्समाचयनइति पुच्छभाण्डेत्यादिना णिङ् दण्डवान् गृहीतत्रिदण्डः संसर्गे मतुप् ॥ ६२ ॥

कमेत्यादि। कमण्डलुश्च कपालोभिक्षापात्रश्चेति समाहार भ० द्वन्द्वः तेन उपलक्षितः केचित्तु कं जलं पालयतीति कपालः कमण्डलुश्चासौ कपालश्चेति कर्म्मधारयः तेन उपलक्षितः परिव्राजकोहि दक्षिणकरे सजलं पात्रं धारयतीति भावइत्याङ्गः मृजावता मार्जनायुक्तेन शिरसा उपलक्षितः मृजलूषश्च्छुद्वौ षित्वात् भीषिभिचिन्तीत्यादिना ङः स्त्रीलिङ्गलञ्च विशेषणे तृतीया लाक्षिके वस्त्रे संवस्य परिधाय शिःकत्वादेरिति वसात् समाच्छादने परिधाने च शिः संपूर्व्वस्यैव तदभिधानशक्तिः प्रकृत्यर्थपरित्यागस्तु धातोः स्वभावात् यदुक्तं विशेषकर्म्मसम्बन्धात् प्रकृतेस्तु गतार्थतेति लाक्षया रक्ते लाक्षिके विकारएतेत्यादिना तेन रक्तेऽर्थे ष्णिकः मात्रां परिच्छदं कमण्डलुप्रभृतिं संभाण्ड्य समाचित्य युगवहनार्थं राशीकृत्य भाण्डानि संचिनोतीत्यर्थे पूर्व्ववत् शिः प्रकृत्यर्थत्यागः संपूर्व्वतानियमश्च मात्रा कर्णविभूषणे। अक्षरावयवे वृत्ते मानेऽल्पे च परिच्छदेइति विश्वः दण्डवान् गृहीतदण्डः॥ ६२ ॥

अधीयन्नात्मविद्विद्यां धारयन्मस्करिव्रतं। वदन् वक्राङ्गुलिस्फोटं भ्रूक्षेपञ्च विलोकयन्॥ ६३ ॥

अधी। मा कुरुत कर्म्माणि शान्तिर्व्वः श्रेयसीत्येवद्घोषयन्ति ज०म० ये ते मस्करिणः परिव्राजकाः तेषामेतमस्कस्मसौ धारयन्

मस्करमस्करिणाविति परिव्राजके क्षुट् आत्मविदां योगिनां विद्यामुपनिषदमधीयन् जपन् इङ्धार्य्योरिति ङ्धारेः स्य शत्रवति कर्त्तरि शतृप्रत्ययः अन्तरा वक्तृ प्रभूतं वदन् अङ्गुलिस्फोट मुनः स्फोटिकान्दत्वा भ्रूक्षेपञ्च विलोकयन् भ्रुवावुत्क्षिप्योत्क्षिप्य विलोकयन् उभयत्रापि स्वाङ्गे भ्रुवदति णमुल्॥ ६३॥

भ० अधीत्यादि। आत्मविदां योगिनां विद्यामुपनिषदं अधीयन् पठन् धारीङोरकृच्छ्रे शतृरिति परस्मैं क्षमते कश्चिदभिधानात् आत्मनेपरस्मैपदिनोः परस्मैपदात्मनेपदिता मस्करिणः परिव्राजकस्य व्रतं धारयन् अङ्गुलीस्फोटं अङ्गुलीं स्फोटयित्वा वक्तृ वदन् मितभाषितया वक्तृ हस्तसंज्ञयैव वदतीति भावः भ्रूक्षेपं भ्रुवमुत्क्षिप्य विलोकयन् स्वजुतया कटाक्षाद्यभावदत्या प्रयः उभयत्र पोड्यमानात्स्वाङ्गात्क्षमिति परः वक्तृ अङ्गुलेः स्फोटो यत्र वदनक्रियायां भ्रुवोः क्षेपोयत्र विलोकनक्रियायां स्फोटक्षेपौ चञ्चौ॥ ६३॥

संदिदर्शयिषुः साम निजुन्हुषुः चपाटतां। चंक्रमावान् समागत्य सीतामूचे सुखाभव॥ ६४॥

ज०म० संदि॥ इह भयमाभूदिति साम सान्त्वं सन्दिदर्शयिषुः सन्दर्शयितुमिच्छुः वदन् वक्रङ्गुलिस्फोटमिति योज्यं हृयेऽर्णन्तसनन्तले रूपं चपाटतां राचसत्वनिजुन्हषुर्निन्होतुमिच्छुः धारयन्मस्करिव्रतमिति योज्यम् न्होतेरज्झनगमांसनीति दीर्घः कुटिलं क

ममञ्चङ्क्रमा क्रमेर्नित्यङ्कौटिल्ये गताविति यङ् नुगत इत्यभ्यासस्य नुक् अःप्रत्ययादित्यकारः अतोलोपः यस्य हलः टाप् सा यस्यास्ति चङ्क्रमावान् कुटिलगतिमानित्यर्थः समागत्य ढौकित्वा सीता मूचे किमित्याह सुखाभवेति अनुकूला भवेत्यर्थः यदहमार्थये तत्र प्रतिकूला न भवेति भावः सुखप्रियादानुलोम्य इति डाच्प्र्त्यये डाच् ॥ ६४ ॥

सन्धीत्यादि। साम सान्त्वं संदर्शयितुमिच्छुः इष्टेर्व्यसनात् भ० सन् सपाटतां राक्षसभावं निह्नोतुमिच्छुः प्रकूलचौर्य्ये सनि धौऽच्यनिङ्क्रमामिति घः चङ्क्रमावान् कुटिलगतियुक्तः अमेध्यादिखलपरिजिहीर्षया चित्तशल्यं वा कौटिल्यं गत्यर्थाद्वलुपेति यङ् ञमजपेति खेर्नुण् यङोलुक् संख्यादः ततोवतुः ईदृशः सन् समागम्य सुखाभव यदहं याचे तत्रानुकूला भवेति सीतामूचे सप वनिष्यसेत्यादिना सुखादानुकूल्ये डाच् यद्यप्यत्र तीयसम्बवीजेत्यादिसूत्रात् डञीत्यनुवर्त्तते तथापि मण्डूकप्लुताधिकारात् च्विः डभ्वस्त्वभूततद्भाव इति सूत्रात् डभ्वस्तित्यस्यानुवर्त्तनं बोध्यं प्रयोगदर्शनात् कृत्तौडञीति लिपिकरप्रमादात् वाक्यार्थं वा . किम्वा सुखं विद्यते यस्या इत्यर्शआदित्वात् अः ततआप् ॥ ६४ ॥

सायन्तनीं तिथिप्रण्यः पङ्कजानां दिवातनीं। कान्तिं कान्त्या सदातन्या ह्रेपयन्ती शुचिस्मिता ॥ ६५ ॥

सायम्। का त्वमिति वक्ष्यमाणेन सम्बन्धः सायन्दिनावसानन्तत्र ज०भ० भवा कान्तिम् यदा सोऽन्तकर्मणीत्येतस्मात् घञ्प्रत्ययान्तः तदा

सायञ्चिरेति ट्युट्युलौ तुट् च मकारान्तत्वञ्च निपात्यते यदा सायंशब्दोमकारान्तः तदाव्ययत्वादेव प्रत्ययागमौ स्यातां कस्येत्यपेक्षायां तिथिप्रण्यः चन्द्रमसः पञ्चदश कलाः तासां वृद्धि ह्रासाभ्यां पञ्चदशतिथीः प्रणयति प्रवर्त्तयति सत्सूद्विषेति क्विप् उपसर्गादसमासेति णत्वम् एरनेकाचइति यणादेशः पङ्कजा नाञ्च कान्तिङ्कीदृशीन्दिवातनीन्दिवाभवां कान्त्या त्वदीयया स दातन्या सदाभवया ह्रेपयन्ती लज्जयन्ती दिवातन्याः सायन्त न्याश्च सदाभवत्वात् जिह्रीतेरर्तीत्यादिना णौ पुक् शुचिस्मिता शुभ्रहासा ॥ ६५ ॥

भ० सायमित्यादि। का त्वमेकाकिनीति द्वितीयश्लोकेन सम्बन्धः तिथिप्रण्यश्चन्द्रस्य सायन्तनीं दिनावसानभवां कान्तिं तथा पङ्कजानां पद्मानां दिवातनीं दिनभवां कान्तिं स्वकान्त्या ह्रेपयन्तो लज्जयन्ती कीदृश्या सदातन्या सर्व्वकालस्थितया चन्द्रपद्मयोस्तु प्रभा न सदा तिष्ठतीति लज्जाहेतुः पञ्चदशतिथीः प्रणयति प्रवर्त्तयतीति तिथिप्रणीश्चन्द्रः तस्य ह्रासवृद्धिभ्यामेव ज्योतिःशास्त्रे तिथिनिरूपणात् त्रासुषिति क्विप् प्राग्वन्नोणइति णत्वं कव्यादिने काचइति यत्वं तिथिप्रणीर्दर्शविपन्निशामणिस्त्विनेत्रचूडामणिर त्रिनेत्रभूरित्यमरः मन्मथेनार्पिता छाया सैव कान्तिरिति स्मृतेति परिभाषिता कान्तिः सीतायाः चन्द्रपद्मयोस्तु शोभामात्रं कान्तिरिति बोध्यं त्यज्वाद्यश्चिरदर्चिषेत्यादिना सायंदिवासदा शब्देभ्यस्तनट् भवार्थे शुचिस्मिता शुद्धहासा स्मितन्त्वदृष्टदशने हासे इति वैजयन्ती ॥ ६५ ॥

का त्वमेकाकिनी भीरु निरन्वयजने वने। क्षुध्यन्तो
ऽप्यघसन् व्यालास्त्वामपालां कथन्न वा ॥ ६६ ॥

कालम्। का त्वन्देवी मानुषी राक्षसी वेति एकाकिनी असहाया एकादाकिनिच्चासहायइति आकिनिच् भीरु इत्यामन्त्रणम्भयप्रकृतित्वात् स्त्रीणाम् निरन्वयानिरनुगमाजनायस्मिन्वने यत्र न कथञ्चिन्मनुष्याणां सम्भवः क्षुध्यन्तोऽपि वुभुक्षमाणाअपि दिगादित्वात् यत् व्यालाहिंस्राव्याघ्रादयः कथं वा त्वान्नाघसन् न भक्षितवन्तः अदेः लुङ्सनोर्घस्लृ लृदित्वाच्च्लेरङ् क्षुध्यन्तोनाघसन्निति पाठान्तरम् तत्र कथन्न वा अपरिचितानेवाघसन् इति योज्यम् अपालां सतीं अविद्यमानः पालोयस्याइति पालरक्षण इति चौरादिकः पालयतीति पालः पचाद्यच् यदा प्रयोजकविवक्षा तदा पातेर्लुगागमो णौ वक्तव्यइति लुक् ततः पचाद्यच् ॥ ६६ ॥ ज०म०

का त्वमित्यादि। हे भीरु वने एकाकिनी का त्वं देवी मानुषी अन्या वा वने किम्भूते निरन्वयजने निरन्वयानिःसम्बन्धाजना यत्र भीरु इति सम्बोधनं भयप्रकृतित्वान्नारीणां जातिभेदस्य प्रत्यक्षत्वाद्वा एकादाकिन्नसहायेऽभिधानात् क्षुध्यन्तोवुभुक्षमाणा व्यालाव्याघ्रादयोहिंस्राः अपालां पालकारक्षितां त्वां कथं नाघसन् न भक्षितवन्तः घस्लृदःसन्त्यल्घञोति अदघ्यां घस्लृद नुबन्धात् शासलिप्युदिति ङः क्षुधवुभुक्षायां दिवादिः पाल रक्षणे चौरादिकः पचादित्वादन् व्यालोदुष्टगजे सर्पे श्वापदेनान्यवत्सल इति मेदिनी ॥ ६६ ॥ भ०

हृदयङ्गममूर्त्तिस्त्वं सुभगम्भावुकं वनं। कुर्व्वाणा भीममप्येतद्वदाभ्येः केन हेतुना॥ ६७॥

ज॰म॰ हृद।केन हेतुना इदं वनमभ्येः अभिगतासि वद कथय अभि पूर्व्वादिणो लङ् मध्यमपुरुषैकवचनं आडजादीनाम् आटश्चेति वृद्धिः हृदयङ्गच्छति या मूर्त्तिः शरीरमत्यन्तसौन्दर्य्यात् गमेश्चेति खच् सा एवम्बिधा मूर्त्तिर्यस्याः सा त्वभीममप्येतद्वनं सुभगम्भावुकं सर्व्वस्यैवाप्रियं प्रियङ्कुर्व्वाणा असुभगं भूत्वा सुभगं भवतीति कर्त्तरि भुवइति खुकञ्॥ ६७॥

भ॰ हृदयेत्यादि। केन हेतुना त्वं एतद्वनं अभ्येः अभिगता इति वद अभिपूर्व्वादिणोद्याः सिप् लुगङ्लोऽपः घीटोयीश्विति अम् आदिगंचोरिति णुः भूयोऽम् ल्यादयोऽर्थार्थैकस्मोरिति हतीया हृदयङ्गमा मूर्त्तिर्यस्याः सा तथा लावण्यातिशयात् हृदयं गच्छतीति तृभूहृदइत्यादिना खः नाम्नीत्यस्य व्यभिचारो वाङ्कत्वात् भीममप्येतद्वनं सुभगम्भावुकं कुर्व्वाणा प्रागप्रियं प्रियं भवतीति भुवो येखिष्णखुकञाविति खुकञ्॥ ६७॥

सुकृतं प्रियकारी त्वं कं रहस्युपतिष्ठसे। पुण्यकृच्चाटुकारस्ते किङ्करः सुरतेषु कः॥ ६८॥

ज॰म॰ सुकृतं। सुकृतमपुण्यकारिणं शोभनं कृतवानिति सुकर्म्मपापेत्यादिना क्किप् कं रहसि विजने त्वमुपतिष्ठसे उपस्थिस्यसि सङ्गतकरणेतङ् प्रियकारी अनुकूलवर्त्तिनी सती प्रियमनुकूलङ्करोतीति

क्षेमप्रियमद्रेऽण्चेति अण् टिड्ढाणञित्यादिना ङीप् पुण्यकृत् कृतपुण्यः तस्य पूर्व्ववत्क्विप् चाटुकारः प्रियवाक्यकरः नग्नबहुलो केत्यादिना टे प्रतिषिद्धेऽणेव भवति ईद्दृशस्ते किङ्करः दासः दिवा विभेति टः किंयत्तद्बहुषु कृञोऽज्विधानमिति तत्स्त्रीविषये द्रष्टव्यम् सुरतेषु शोभनरतेषु नपुंसके भावे क्तः अनुदा त्तेत्यादिनानुना सिकलोपः अनेनोभयत्रचिरन्त्वाता ॥ ६८ ॥

सुकृतमित्यादि। त्वं प्रियकारी अनुकूलवर्त्तिनी सती कं सुकृ तं पुण्यकारिणं पुरुषं रहसि विजने उपतिष्ठसे सङ्गच्छसि मैत्रा ध्वसङ्गाराधदति सङ्गे मं शोभनं करोतीति चासुत्विति क्विप् प्रियङ्करोतीति क्षेमप्रियमद्रात्कृञ्वा इति खाभावपक्षे ढात्पण् कः पुण्यकृत् ते तव सुरतेषु शोभनरतेषु किङ्करोदासः सन् चाटुकारः प्रियवाक्यकारी पुण्यं करोतीति क्विप् रमेर्भावे क्तः वनतनाद्यनिमामिति मलोपः चाटु करोतीति क्वचिदपवादवि षयेऽप्युत्सर्गो ऽभिनिविशतइति न्यायात् सुकृद्दति टविषयेऽपि ढात्पण् किमित्यव्ययं तस्मात् कृञष्टः ॥ ६८ ॥ भ०

परिपर्य्युदधेरूपमाद्यलोकाच्च दुर्लभं। भावत्कं दृष्टवत्स्वेतदस्मास्वधि सुजीवितं ॥ ६९ ॥

परि। एतद्रूपभावत्कभवत्यारदमिति भवतष्ठक्छसाविति ठक्छसौ ठक्छसोश्चोपसंख्यानमिति पुंवद्भावः इसुसुक्तान्तात्कः दुर्लभम्परिपर्य्युदधेः अपपरीवर्जनइति कर्म्मप्रवचनीयसंज्ञा याद्वितीयायाञ्चाप्रायामपञ्चम्यपाङ्परिभिरिति पञ्चमी अप ज०म०

परिवहिरञ्चवःपञ्चम्यादति विभाषासमासञ्च असमासपक्षे परे वर्ज्जनइतिद्विर्व्वचनम् उदधिं वर्जयित्वा चतुरुदधिमेखलायाम्भुवि दुर्लभमाद्युलोकाच स्वर्गलोकान्तञ्च यावत् दुर्लभमचापि पूर्व्ववत्पञ्चमी तादृशन्द्दृष्टवत्त्वस्मासु अधि सुजीवितमस्मद्विषयो अधिकोन सुजीवितम् अहो वा सुजीवितमिति अहो शब्दार्थे अधिशब्दोवर्त्तते॥ ६८॥

भ॰ परीत्यादि। एतत् भावत्कं भवदीयं रूपं दृष्टवत्सु अस्मासु अधि सुजीवितं अधिकं शोभनं जीवनं विषये सप्तमी यद्वा अधि केशार्थोपाधिभ्यामिति स्वाम्यर्थेनाधिना च योगे सप्तमी तेनास्मत्स्वामिकं सुजीवितमित्यर्थः त्वामपश्यतस्तु जनस्य तन्नास्तीति भावः भवत्यादइदमित्यर्थे विकारसंघेति कण् पुम्वत्त्व्यूनपुंस्काः स्त्रियामित्यादौ तलश्यसन्ततरादावित्यस्य तद्धितसंज्ञके त्वपर्य्यन्तप्रत्ययं शसन्ततरादौचेति देवीदासचक्रवर्त्तिव्याख्यानात् पुंवत्ये तु त्वनौभावइत्यनेन कृतयोस्त्वतलयोरेवमित्याऽऽदस्तन्नतेऽभिधानात् योगविभागात् किम्वा पुम्वत्त्येरिति पुम्वत् भवच्छब्दस्य स्त्रिसंज्ञायां पठितत्वात् पुम्वत्त्येरित्यत्र कोलुक्त्येचेत्यस्मात्त्येचेत्यनुवर्त्तते वृत्तौ त्येचेति यन्न दृश्यते तल्लिपिकरप्रमादात् ग्रन्थगौरवाद्वा न लिखितं तदनुवृत्तेर्दुर्निवारत्वेन स्पष्टत्वात्पुम्वत्त्वर्व्वनाम्नोवृत्तिमात्रे तसादौ चेति परसूत्रं कीदृशं रूपं उदधेः परि परि उदधिं वर्ज्जयित्वा दुर्लभं दुष्प्रापं उदधिपरिच्छिन्नायां पृथिव्यां दुर्लभमित्यर्थः समुद्रे लक्ष्म्या उत्पत्तिः तत्रैव तत्सम्भवो नान्यत्रेति भावः आद्युलोकात् स्वर्गलोकपर्य्यन्तञ्च दुर्लभं उभयत्र अन्यारभ्येत्यादिना पञ्चमी पर्य्याङौ त्यागसीमार्थौ आङ्

व्याघ्रिणोव्याघ्रात्पुंसोऽन्यावित्युक्तेः वर्जनार्थपरैर्विभाषया दित्वम भिधानात् ॥ ६८ ॥

प्रपीतमधुका भृङ्गैः सुदिवेवारविन्दिनी। सत्परिमल लक्ष्मीका नापुंस्कासीति मे मतिः ॥ ७० ॥

आपी ॥ परि सर्व्वतोमार्जनमिति परिमलः कलचपस्येत्यधि अ०भ०
कृत्य मृजेष्टिलोपश्चेति कलप्रत्ययश्चौणादिकः इह सुरतोपभो गविमर्द्दः परिमलोऽभिप्रेतः तस्य लक्ष्मीः तत्कृतत्वात् सती विद्य माना परिमलशोभा यस्याः उरःप्रभृतिभ्यः कप् सा त्वमपुंस्का अविद्यमानभर्त्तृका नासीति मे मतिः पूर्व्ववत्कप् किमिव सुदिवेवा रविन्दिनी पद्मिनी शोभनन्दिवा नीहाराद्यभावाद्दिवा दिवसं यस्याः सुप्रातेत्यादिना अच् आपीतमधुका भृङ्गैः आपीतमधु यस्याः शेषाद्विभाषेति कप् यथेयं सत्परिमललक्ष्मीका तथात्व मपीति ॥ ७० ॥

प्रपीत्या।दि। त्वं न अपुंस्कासि किन्तु विद्यमानभर्त्तृकासीति भ०
मेमम मतिः यतः सती परिमलस्य लक्ष्मीर्यस्यास्तादृशी विम र्द्दोत्थे परिमलोगन्धे जनमनोहरइत्यमरः सुरते भोगविमर्द्द एव परिमलइति अयमकृत्वा पुंलक्ष्मीभ्यामेकवचनान्ताभ्यां कोव ऊश्चोदाविति परः स्वमते लक्ष्मीशब्दात् ऋतःकइति कः अपुंस्केति पुंवत्स्त्युक्तपुंस्कइति ज्ञापकात् ऋतःकइत्यस्य योगविभागेन क्वचि दन्यत्रापि कइति बोध्यं स्वार्थे कोवा यथा भृङ्गैः प्रपीतं मधु यस्या

स्तादृशी सुदिवा अरविन्दिनी पद्मिनी तथा त्वमपि यत्परिमल लक्ष्मीका शोभनं नीहारादिरहितं दिवा दिनं यस्याः सुपूर्व्वाद्दिवाशब्दाद् ऊङ्गीष्ठौ अदिति परः स्वमते दिवाशब्दात् स्वार्थे ष्णः तस्यानित्त्वविवक्षया न ईप वृद्धिश्च यद्वा शोभने दिवसे इति यत्र स्यन्तं रूपं दिवाशब्दोऽयमव्ययः ॥ ७० ॥

मिथ्यैव श्रीः श्रियम्मन्या श्रीमन्मन्यो मृषा हरिः। साक्षात्कृत्याभिमन्येऽहं त्वां हरन्तीं श्रियं श्रियः ॥ ७१ ॥

ज०म० मिथ्ये। श्रियः श्रियं रूपसम्पदं हरन्तीमभिभवन्तीं त्वां साक्षात्कृत्य प्रत्यक्षीकृत्य विभाषा कृञीत्यनुवर्त्तमाने साक्षात्प्रभृतीनि चेति गतिसंज्ञा गतिसमासे ल्यवादेशः अहमभिमन्ये किं मिथ्या श्रीः श्रियम्मन्या अहमेव श्रीर्नान्येति मन्यमाना श्रीर्मिथ्या नैव श्रीः किन्तु त्वमेवेति आत्ममाने खश् दिवादित्वात् श्यन् इच एकाचोऽम्प्रत्ययवच्चेत्यम्भावः तस्यामः प्रत्ययत्वान्नलोपाभावः न विभक्तौतुस्मा इति वचनात् अचीतीयङादेशः क्विन्ताधातुत्वन्न जहतीति क्विब्वचीत्यादिना श्रयतेरौणादिकः क्विप् हरिस्त्वात्मानं श्रीमन्तम्मन्यमानो मृषा न श्रीमान् यस्य त्वं स एव श्रीमानित्यहमभिमन्ये॥ ७१ ॥

भ० मिथ्यैवेत्यादि। श्रिया लक्ष्म्याः श्रियं शोभां हरन्तीं जयन्तीं वा त्वां साक्षात्कृत्य अहमेवमभिमन्ये श्रीर्लक्ष्मीर्मिथ्यैवात्मानं श्रियं मन्यते हरिरपि मृषा आत्मानं श्रीमन्तं मन्यते त्वमेव श्रीस्तदीयशोभाहरणात् त्वत्पतिरेव त्वद्योगात् श्रीमानिति भावः मन्या

स्वार्थइति खञ् ञित्वात् दिवसुतुदेति यन् खित्ययाजइषइति एकाजित्वात् अोश्ब्दस्य दीक्रान्तत्वं इत्तेपाणौमाञ्भमित्या दिना समासपचे आदनञः क्रोयपो साचादादेरभूततङ्गवे नञः क्रोयप् वेति परः॥ ७१॥

नोदकण्ठिष्यतात्यर्थं त्वामैचिष्यत चेत् स्मरः। खेला यन्ननिशं नापि सजूःकृत्य रतिं वसेत्॥ ७२॥

नोद। स्मरभार्य्या रतिः सापि रूपेण निकृष्टेति दर्शयति जं० म० चेत् यदि स्मरः त्वामैचिष्यत दृष्टवानभविष्यत् तदा अत्यर्थन्नो दकण्ठिष्यत रतिम्प्रति भृशमुत्कण्ठितोनाभविष्यत् ईचदर्शने इति कठिशोकइति भ्वादिकात् क्रियातिपत्तौ लृङ् नापि र तिं स्वभार्य्यां सजूःकृत्य सहायीकृत्य वसेत् अपितु परित्यजेत् अत्र क्रियातिपत्तिर्न विवचिता किन्तु हेतुहेतुमद्भावः नापि रतिं सजूःकृत्य वसेत् यदि त्वामीचेतेति हेतुपदमभ्यूह्य हेतुम द्भावदर्शनात् ऊर्य्यादिषु सजूःसहार्थइति वचनात् गतिसंज्ञा खेलायन् अनिशं क्रीडन् सर्व्वदा खेलाशब्दात् कण्ड्वादित्वात् यक्॥ ७२॥

नोदेत्यादि। रतिरपि न ते तुल्येति दर्शयन्नाह स्वयं भ० कामश्चेत् यदि त्वां ऐचिष्यत तदा अत्यर्थं न उदकण्ठिष्यत रतिं प्रति भृशमुत्कण्ठितोनाभविष्यत ईचङ्दर्शने कठिङ्शा ध्याने उभयत्र स्वर्थासम्भवे यो नापि रतिं स्वभार्य्यां सजूःकृत्य

सहायीकृत्य अनिशं निरन्तरं खेलायन् क्रीडयन् वसेत् तां परि
त्यजेदेव यदि त्वां पश्येत् इति हेतुपदमत्र बोध्यं भव्येवाफलहेतो
रित्यस्य योगविभागात्कृतेऽपि स्त्री भव्येऽपि न चतिः विलासार्थात्
खेलाशब्दात् कण्ड्वादित्वात् करोत्यर्थे क्यः सजुःशब्दोऽयमव्ययः
सहायार्थे वर्त्तते साक्षादादित्वात् हस्तेपाणौशाश्वंइत्यादिना
समासः ॥ ७२ ॥

वल्गूयन्तीं विलोक्य त्वां स्त्री न मन्तूयतीह का।
कान्तिं नाभिमनायेत को वा स्थाणुसमोऽपि ते ॥ ७३॥

ज०म० वल्गु। त्वां वल्गूयन्तीं शोभमानां विलोक्य न मन्तूयति स्त्रीह
का इह जगति का स्त्री न मन्तूयेत् न कुप्येत् सर्व्वदा कुप्यत्येव
ईर्ष्यायुक्तत्वात् स्त्रीणाम सम्भावने लिङ् वल्गुमन्तुशब्दाभ्यां कण्ड्वा
दित्वाद्यक् कोवा कोनाम स्थाणुसमोऽपि काष्ठतुल्योऽपि गुणदो
षानभिज्ञत्वात्ते तव कान्तिं विलोक्य नाभिमनायेत पूर्व्वमदृष्ट
त्वादनभिमनाः सन् अभिमनाः सचेताभवेत् पूर्व्ववल्लिङ् अभि
मनसोभृशादित्वात्क्यङ् सलोपस्य महादेवतुल्योवा आस्ता
मन्यः सोऽपि तावदभिमनायते ॥ ७३ ॥

भ० वल्गित्यादि। इह जगति का स्त्री वल्गूयन्तीं शोभमानां
त्वां विलोक्य न मन्तूयति न ईर्ष्यति स्वपतिवैराग्यशङ्कया सर्व्व
व कुप्यतीत्यर्थः वल्गुमन्तुभ्यां कण्ड्वादित्वात्क्यः धोऽज्यरे कोवा
स्थाणुसमोऽपि महादेववज्जितेन्द्रियोऽपि काष्ठवन्नीरसोऽपि वा

नव कान्तिं विलोक्य न अभिमनायेत प्रीतमना न भवेत् अपि तु सर्व्वएवाभिमनायेत भृशादेश्च्व्यर्थे वेति पाक्षिकोऽच्च्यः सखोपस्य घोँ ऽज्यरे प्रौढ्यासम्भावने इति खी ॥ ७३ ॥

दुःखायते जनः सर्व्वः सएवैकः सुखायते। यस्यो
त्सुकायमाना त्वं न प्रतीपायसेऽन्तिके ॥ ७४ ॥

दुःखा ॥ सएवैकोजनः सुखायते सुखं वेदयते यस्यान्तिके समीपे न त्वम्प्रतीपायसे न प्रतिकूलवर्त्तिनी भवसि उत्सुकायमाना उत्कायमाना सती यस्य पुनरन्तिके उत्सुकायमाना प्रतीपायसे ससर्व्वोजनः दुःखायते दुःखं वेदयते सुखदुःखशब्दाभ्यां सुखादिभ्यः कर्त्तृवेदनायामिति क्यङ् उत्सुकप्रतीपशब्दाभ्याभृ शादित्वात् ॥ ७४ ॥ ज०म०

दुःखेत्यादि। यस्यान्तिके समीपे त्वं उत्सुकायमाना उत्सु कीभवन्ती न प्रतीपायसे न प्रतिकूलीभवसि सएवैकोजनो जग ति सुखायते सुखमनुभवति अन्यः सर्व्वोजनोदुःखायते दुःखमनु भवति सुखदुःखशब्दाभ्यां शब्दसुखकष्टादेरिति वेदे ज्यः केचित्तु सुखदुःखयोस्तदाश्रयेऽपि वर्त्तमानत्वात् असुखःसुखोभवति अदुः खोदुःखोभवति इत्यर्थे डाच् लोहितादेःपक्षेति क्यमाङः उत्सु कप्रतीपाभ्यां भृशादित्वात् च्व्यर्थे ज्यः केचित्तु प्रतीपशब्दात् घान्तकीत्यादिना आचारे क्यमाङः ॥ ७४ ॥ भ०

कः पण्डितायमानस्त्वामादायामिषसन्निभां। त्रस्यन् वैरायमाणेभ्यः शून्यमन्ववसद्वनं ॥ ७५ ॥

ज०म० कःपं। पण्डितायमानः अपण्डितः कथमपि पण्डितोभवन् भृशादित्वात्क्यङ् त्वामामिषसन्निभां सर्व्वजनप्रार्थनीयत्वात् आदाय गृहीत्वा कः शून्यं वनमन्ववसत् शून्ये वने अवसदित्यर्थः उपान्वध्याङ्वसइति कर्म्मसंज्ञा कीदृशः त्रस्यन् बिभ्यत् वैरायमाणेभ्य. वैरङ्कुर्व्वाणेभ्यः शब्दवैरेत्यादिना क्यङ् भीत्रार्थानामित्यपादानसंज्ञा ॥ ७५ ॥

भ० कइत्यादि। कः पण्डितायमानः अपण्डितः पण्डितोभवन् आमिषसन्निभां लोभ्यद्रव्यतुल्यां त्वां आदाय गृहीत्वा शून्यं वनं अन्ववसत् वसतिस्म कर्म्मक्रियेत्यादिना ङे ढं पण्डिताद्भृशादित्वात् ञ्यः वैरायमाणेभ्यः वैरं कुर्व्वाणेभ्यः त्रस्यन् शत्रुभयाभावे एवं वर्त्तुमनुचितमिति भावः वैरात् शब्दादित्वात् शब्दसुखकष्टादेरिति ञौ ञ्यः यतोऽपायभीति अपादानसंज्ञा आमिषं पललेलोभ्ये सम्भोगोत्कारयोरपि। आमिषं सुन्दराकारे रूपादिविषयेऽपि चेति विश्वः ॥ ७५ ॥

ओजायमाना तस्यार्घ्यं प्रणीय जनकात्मजा। उवाच दशमह्रानं सादरा गद्गदं वचः ॥ ७६ ॥

ओजा। एवमुक्तवति रावणे जनकसुता दशमूर्द्धानमुवाच जं०भ०
दश मूर्द्धानः शिरांसि यस्य तस्मा अर्घ्यंप्रणीय दत्वा अतिथिरयमि
ति सम्प्रदानस्य शेषत्वेन विवक्षितत्वात् षष्ठी ओजायमाना ओज
इवाचरन्ती कर्त्तुःक्यङ्सलोपश्च ओजसोप्सरसोर्नित्यमिति वच
नात् किञ्चिल्लज्जापरित्यागात् तेजस्विनी भवन्तीत्यर्थः किमु
वाच वक्ष्यमाणं सादरा सती परिव्राजकइति गद्गदमनभि
व्यक्तमसंस्कृतत्वात्॥ ७६ ॥

ओजेत्यादि। जनकात्मजा सादरा सती तस्य कपटपरिव्रा भ०
जकस्य अर्घं प्रणीय अतिथिबुद्ध्या दत्वा दशमूर्द्धानं दश मूर्द्धानो
यस्य तं रावणं गद्गदं लज्जया अन्तर्भिया वा सम्यगनभिव्यक्तं
वक्ष्यमाणं उवाच ओजायमाना किञ्चिल्लज्जापरित्यागात्
ओजस्विनीवाचरन्ती ओजःशब्दात् धर्म्मिप्रधानात् क्यङ्वक्षी
ति क्यङ् सलोपश्च भृशादित्वात् च्व्यर्थे वा क्यङ् तस्य इति सम्प्रदा
नस्य सम्बन्धविवक्षायां षष्ठी प्रणीयेत्यत्र समीपे स्थापयित्वा इति
वार्थः मूल्येपूजाविधावर्घः अर्घाय इदमित्यर्थे विकारसंघेति
यः॥ ७६ ॥

महाकुलीनऐक्ष्वाके वंशे दाशरथिर्म्मम। पितुः
प्रियङ्करो भर्त्ता क्षेमकारस्तपस्विनां॥ ७७॥

महा। यदुक्तन्तेन कं रहस्युपतिष्ठसइति अस्य प्रतिवचनं मम जं०भ०
भर्त्ता महाकुलीनः महाकुलस्यापत्यमिति महाकुलादञ्खञौ

विति खञ् किमादित्यवंशसम्भवः किं सोमवंशसम्भवो वा महाकुलस्यापत्यमित्याह ऐक्ष्वाके वंशे इक्ष्वाकूणामयमैक्ष्वाकः दाण्डिनायनेत्यादिना टिलोपनिपातनम् अन्ये तच बन्तीत्याह दाशरथिः दशरथस्यापत्यं यः सम मम भर्त्ता महाकुलीनः कीदृशः पितुः प्रियङ्करः अनुकूलकारी तपस्विनाञ्च चेमकारः चेमप्रियमद्रेष्वेति चकारात् खच्॥ ७७ ॥

भ० महेत्यादि। कं रक्षःपतिरुशसे इति रावणप्रश्ने उत्तरमिदं मम भर्त्ता दाशरथिः प्राधान्यात् विशेषेण महिषा च ज्येष्ठ एव गम्यते दशरथस्यापत्यं इति वाक्याद्यतइति अदन्तत्वात् ष्णिः णित्तेत्रिः ऐक्ष्वाके वंशे महाकुलीनः इक्ष्वाकुनामा कश्चित् सूर्य्यवंशसम्भवः तस्यापत्यमिति तद्भवे वंशेऽन्यत्रपीत्यर्थाद्भ्यते शिवादित्वात् ष्णः ओर्लोपोऽकद्रुपाण्ड्वोरेवे इत्यत्र एयस्य असीति समासात् उकारलोपः ये तु केवलष्णोयप्रत्ययइति व्याचचते तन्मते योगविभागात् महाकुले विद्यमानः ढखेकादिति षीनः महाकुलीनइति पाठे अनिच्छविवचया न त्रिः महाकुलस्यापत्यमिति केचित् पितुः प्रियङ्करः प्रियङ्करोतीति चेमप्रियमद्राल्कर्म्मेति खः तस्य विकल्पपक्षे तपस्विनां चेमकारः कुशलकर्त्ता ढातृपष्॥ ७७ ॥

निहन्ता वैरकाराणां सतां वङ्गकरः सदा। पार अधिकरामस्य शत्रोरन्तकरो रणे॥ ७८॥

निह। वैरकाराणां शत्रूणां वैरपूर्व्वात्क्रोशनशब्दश्लोकेत्या हिना टे प्रतिषिद्धे अत्रैव भवति निहन्तीति हजन्तस्य प्रयोगः तत्र कर्म्मणि षष्ठी सतान्धर्म्मे स्थितानामङ्ककरः बहुकार्य्यङ्करोतीति दिवाविभेति टः स्त्रीविवक्षायान्तु किंयत्तदबहुष्विति करोतेरच् आङ्परयोः खनिशृभ्याण्डित्यौणादिकः कुः परशुशब्दः तत्पर्य्याय एवाव्युत्पन्नः परश्वधशब्दः सप्रहरणं यस्य परश्वधाढ्यश्च तस्य परशुरामस्य सम्बन्धिन्याः शक्तेः सामर्थ्यस्यान्तकरो विनाशयिता अन्तङ्करोतीति पूर्व्ववट्टः रणे सङ्ग्रामे तत्र भवः॥ ७८॥ ज॰म॰

निहेत्यादि। तथा वैरकाराणां निहन्ता ढात्वण् कर्म्मणि षष्ठी सतां साधूनां सदा सर्व्वदा बहूनि कार्य्याणि करोतीति टकुष्टः रणे पारश्वधिकरामस्य जामदग्न्यस्य शक्तेः सामर्थ्यस्य अन्तकरो नाशयिता परश्वधेन परशुना प्रहरतीति ण्ठिकः परान् श्यति खण्डयतीति परशुः परश्वधस्येति निपातनात् ॥ ७८॥ भ॰

अध्वरेष्विष्टिनां पाता पूर्त्ती कर्म्मसु सर्व्वदा। पितु र्न्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनं॥ ७९॥

अध्व। इष्टमेभिरिति इष्टिनो यज्वानः इष्टादिभ्यश्चेतीनिः किमिष्टवन्तः अध्वरान् कर्म्माणि तत्र क्तस्येन्विषयस्येति कर्म्मणि सप्तमी अध्वरेष्विष्टिनामिति कर्म्मणि षष्ठी तद्योगे पाता रक्षिता पूर्त्ती कर्म्मसु सर्व्वदा पृणातेर्निष्ठायामुदोष्ठ्यपूर्व्वस्येत्युत्वम् न ज॰म॰

ध्याख्येत्यादिना निष्ठागमप्रतिषेधः पूर्त्तमनेनेति पूर्व्ववदिनिः क्लिन्पूर्त्तमिति' सर्व्वदा आह्लादिकर्म्मणि पूर्व्ववत्सप्तमी स राजत्वं राज्यम् हित्वा त्यक्त्वा वनमभ्यागमत् आभिमुख्येन आगतवान् लुङ् ल्वेरङि रूपम् पितुर्नियोगात् नायोग्यत्वात् स मे भर्त्तेति योज्यम् ॥ ७९ ॥

भ॰ अध्वर इत्यादि। तथा अध्वरेषु इष्टिनां यज्वनां पाता रक्षिता पाल रक्षणे इष्टं यजनं भावे क्तः ढ्येक्तेतीति कर्म्मणि षष्ठी सर्व्वदा कर्म्मसु पूर्त्ती पूर्त्तं पूरणं भावे क्तः सुल्वाद्योदित्यादौ पूर्वर्ज्जनाच्च क्तस्य नः वृदुश्रिञ्जूर्णोरिति इण्निषेधः कर्म्मोपादाने ऽपि भावे क्तः अध्वरान् इष्टमेभिः कर्म्माणि पूर्त्तमनेन चेत्यर्थे इष्टादेरिष्टमनेनेत्यादावर्थे कर्त्तरि वाच्ये इन्प्रत्ययोभवेदिति परः स्वमते क्तेनाढे इति ज्ञापकात् क्तान्तात्कर्त्तरि इन् तद्योगे कर्म्मणि सप्तमी किम्वा इष्टपूर्त्ताभ्यां भावक्तान्ताभ्यां नैकाजादिति अस्त्यर्थे इन् अध्वरकर्म्मभ्यां विषये सप्तमी केचित्तु अध्वरा इष्टा एभिः कर्म्माणि पूर्त्तान्यनेन चेति कर्म्मक्तादिन् कर्त्तरीत्याहुः यः पितुराज्ञया राजत्वं हित्वा त्यक्त्वा वनमभ्यागमत् स मे भर्त्तेति योज्यं ॥ ७९ ॥

पतत्रिक्रोष्टुजुष्टानि रक्षांसि भयदे वने। यस्य वाणनिकृत्तानि श्रेणीभूतानि शेरते ॥ ८० ॥

ज॰म॰ पत ॥ यस्य वाणैर्निकृत्तानि छिन्नानि रक्षांसि भयदे वने दीर्घ

निद्रया शेरते समम भर्त्तेति योऽयम् शेरतइति शीङोरुट् कीदृशानि अश्रेण्यः श्रेण्योभूतानि ऊर्य्यादिच्विडाचश्चेति च्चय आनाज्जुगतिप्रादयइति सः च्वौचेति दीर्घः व्यर्थानान्तु श्रेण्या द्यः क्षतादिभिरित्ययं विषयः पतत्रिभिः क्रोष्टुभिश्च जुष्टानि परिष्टतानि ॥ ८० ॥

पतत्रीत्यादि। चरन् वैरायमाणेभ्य इति वाक्ये तस्य वाणो भ० मास्तीत्युत्तरमिदं यस्य वाणैः शरैर्निकृत्तानि खण्डितानि रक्षां धि भयदे वने शेरते पतितानि सन्तीत्यर्थः समे भर्त्तेति समन्मः शीङः की अन्ते शीङोरुट् मान्तोरम् मान्तोऽदनतः अश्रेण्यः श्रेण्योभूतानि श्रेणीभूतानि च्विः अभूतद्भावइति च्विः दीर्घश्च त्योवस्माचोलोपइति च्विलोपः पतत्रिभिः मृगादिभिः क्रोष्टुभिः शृगालैश्च जुष्टानि परिष्टतानि जुषमुदिसेवे ॥ ८० ॥

दीव्यमानं शितान् वाणानस्यमानं महागदाः।
निघ्नानं शात्रवान्श्रामं कथं त्वं नावगच्छसि ॥ ८१ ॥

दीव्य। शितांस्तीक्ष्णान् वाणान् दीव्यमानंक्षेप्तुं शक्तमच्छोलं अ०म० वा अनेकार्थत्वाद्धातूनान्दिवेस्ताच्छील्यवयोवचनेत्यादिना चानश् दिवादिभ्यः श्यन् महागदाः अस्यमानं चेप्तं शक्तमच्छोलं वा पूर्व्ववचानश् शात्रवान् शत्रून् प्रज्ञादित्वादण् निघ्नानं हन्तुं शक्त मच्छोलं वा पूर्व्ववत्प्रत्ययः हन्तेर्गमहनेत्युपधालोपः होहन्ते रिति कुत्वम् एवम्विधं रामकृष्यस्त्वावगच्छसि तेन कर्म्मणा सर्व्व लोकविदितत्वादिति भावः ॥८१ ॥

भ० दीव्येत्यादि। कथं त्वं राममपि नावगच्छसि न जानासि सर्व्वलोकप्रसिद्धकर्म्मत्वात् तथाहि सितान् वाणान् दीव्यमानं तीक्ष्णैः शरैः क्रीडाशीलं विजिगीषाशीलं वा दिवुजिगीषेच्छापण द्युतौ क्रीडागत्योः दिवोधर्मेति करणे द्वितीया शपतीर्गदाश्रय मानं क्षेप्तुं शक्तं उत्क्षेपणयोग्ये वयसि वर्त्तमानं वा क्षेप्तुं शीलं यस्येति वा शाक्ववान् निघ्नानं निहन्तुं शक्तं पर्व्वच शक्तिवयस्ता च्छील्येशतुः शानः हन्तेर्हनुगमित्युक्लोपे हनोक्तोघ्नः शक्नुरेव शाक्ववः स्वार्थे ष्णः॥ ८१॥

कुलकं।

भ्रातरि न्यस्य यातोमां मृगाविन्मृगयामसौ। एषि तुं प्रेषितोयातोमया तस्यानुजोवनं॥ ८२॥

ज०भ० भ्रात। यद्येवं क्वासावित्याह असौ रामोमाम्भ्रातरि न्यस्य अर्पयित्वा मृगयामाखेटकं यातः मृगैः स्वार्थिकोणिच् अदन्त त्वाच गुणो न भवति तदन्तात्कृञःशचेति अधिकृत्य परिचर्य्या परिसर्य्या मृगया टाद्यानामुपसङ्ख्यानमिति भावे शप्रत्ययः यक् अलोपाभावस्य टाप् मृगान्विध्यतीति मृगावित् क्वासौ भ्रातेति चेदाह तस्यानुजः कनिष्ठोमया प्रेषितः सन् यातोवनं अनु पश्चा आयतद्दति अन्येभ्योऽपि दृश्यतद्दति डः असौ कर्म्मण्युक्तमकर्म्म क्षपि भवति किमर्थं एषितुम् तस्यैव ज्ञातुम् इषुगताविव्यस्य रूपम् ज्ञानार्थत्वात् प्रेषितद्दति तस्यैव रूपम्॥ ८२॥

भ० भ्रातरीत्यादि। तथापि त्वामेकाकिनीं हित्वा त्यक्त्वा कुतोगत

इत्याह असौ रामोमां भ्रातरि न्यस्य समर्प्य मृगयां यातोगतः मृगान् विध्यतीति मृगावित् स कुर्वन्त्याह तस्यानुजोऽपि मया प्रेषितः प्रस्थापितः सन् एषितुं ज्ञातुं अर्थाद्रामं वनं गतः सर्व्वे गत्यर्थाज्ञानार्थाइति वचनात् इष्यसर्पणइत्यस्य ज्ञानार्थत्वं अनु जातोऽनुजः इनजनादिति डः ॥ ८२ ॥

अथायस्यन् कषायाक्षः स्यन्नस्वेदकणोल्वणः। स न्दर्शितान्तराकूतस्तामवादीद्दशाननः॥ ८३ ॥

अथेति। अथैवमुक्तोजानक्या दशाननस्तामवादीत् उक्तवान् ज०म० आयस्यन् क्रोधाविष्टत्वात् शरीरङ्खेदयन् यसुप्रयत्नइति दैवादिकः परस्मैपदी क्रोधादेव कषायाक्षः वहुव्रीहौ सक्थ्यक्ष्णो रिति षच् स्यन्नैः स्रुतैः स्वेदकणैरुल्वणउद्भटः व्याप्तइत्यर्थः स्यन्दे र्निष्ठायां रूपम् संदर्शितमान्तरमन्तर्गतमाकूतमभिप्रायोयेन सएवम्विधः ॥ ८३ ॥

अथेत्यादि। अथ तयैवमुक्तोदशाननस्तां सीतामवादीत् भ० अजवदेति शिः कीदृशः आयस्यन् तद्वाक्यैः क्रोधवशात् शरीरं खेदयन् कषायाक्षः क्रोधेन कषाये अक्षिणी यस्य सतथा सक्थ्य क्ष्णः षःस्वाङ्गे स्यन्नैः स्रुतैः स्वेदकणैरुल्वणः उद्भटः व्याप्तइत्यर्थः स्यन्दूङ्स्रुतौ ऊदित्वादेमत्वे नेमडोश्वीदित्यादिना इमनिषेधः इसुङ्नलोपोऽणाविति नस्य लोपः स्वाद्योदिति नस्य दस्य च नः सन्दर्शितं प्रकटीकृतं आन्तरं अन्तर्गतं आकूतमभिप्रायो येन स तथा ॥ ८३ ॥

कृते कानिष्ठिनेयस्य ज्यैष्ठिनेयं विवासितं। कोनग्न मुषितप्रख्यं वक्तु मन्येत राघवं ॥ ८४ ॥

ज०म० कृते। कनिष्ठाया अपत्यं ज्येष्ठाया अपत्यमिति स्त्रीभ्योढक् कल्याण्यादीनामिनङ् तयोः कल्याण्यादिषु पठितत्वात् कनिष्ठासुतस्य भरतस्य कृते निमित्ते ज्येष्ठायाः सुतः निरुपयोगितया विवासितः विसर्ज्जितः विपूर्ब्बस्य वसतेर्हेतुमण्ण्यन्तस्य निष्ठायां रूपम् तन्नग्नमुषितप्रख्यं यथा कश्चिन्मुषितो नग्नो भवति तद्वद्भूतं पूर्ब्बकालेति सः तस्याः पूर्ब्बापरकालत्वात् राजदन्तादित्वात्पर निपातः ईदृशं राघवं कोवक्तु मन्येत स्लाघेत नैवेत्यर्थः ॥ ८४ ॥

भ० कृतेइत्यादि। कोजनो राघवं वक्तु मन्येत स्लाघेत न कोऽपीत्यर्थः किम्भूतं कानिष्ठिनेयस्य कनिष्ठाया अपत्यस्य भरतस्य कृते निमित्तं ज्यैष्ठिनेयं ज्येष्ठाया अपत्यमपि विवासितं पित्रा परित्यक्तं राज्याद्बहिष्कृतं वसिर्ज्जिकान्तस्य रूपं ततएव नग्नमुषितप्रख्यं यः कश्चित् प्रथमं मुषितो निराकृतः पश्चान्नग्नो लज्जितो दिगम्बरीकृतो वा भवति तत्तुल्यं पूर्ब्बकालस्यापरकालेनेति कर्म्मधारयार्थं परत्वं स्वमते पूर्ब्बकालसम्बन्धात् य एव मुषितः परकालसम्बन्धात् स एव नग्न इत्येकार्थतास्येव अभिधानात् पूर्ब्बकालीनस्य परनिपातः राजदन्तादित्वादिति परः ज्येष्ठाकनिष्ठाभ्यामावन्नत्वात् वाङ्गायनोऽव्यावादेरिति कृतस्य ण्यस्य कल्याण्यादिभ्यइत्यादिना इनेयः नग्नेति ओलजकोष्ठिषि योदित्वात् स्वादयोदिति क्तस्य नकारः मग्नवत्स्य गत्वं केचित्तु नस्जेर्नस्य निपातनात् तवर्गपञ्चमइत्याहुः ॥ ८४ ॥

राक्षसान् वटुयज्ञेषु पिण्डीशूरान्निरस्तवान्। यद्य सौ कूपमाण्डूकि तवैतावति कः स्मयः॥ ८५॥

राक्ष।अध्वरेष्विष्टिनामित्यस्योत्तरमाह यद्यसौ राक्षसान पिण्डीशूरान् पिण्ड्यामेव शूरान् भोजने एव शूरान् पात्रेसमि तादयश्चेति सः वटुयज्ञेषु कुब्राह्मणयज्ञेषु निरस्तवान् तिरस्कृ तवान् हे कूपमाण्डूकि कूपे माण्डूकीव पूर्व्ववत्सः ढक्मण्डूकादि ति चकाराद्‌ण्वापत्ये एतावति स्वल्पे वस्तुनि तव कः स्मयः नैव युज्यते मत्पराक्रमे तु युक्तः तचापि मम न युक्तं वक्तुमित्याह ॥ ८५ ॥ ज०म०

राक्षसानित्यादि। अध्वरेष्विष्टिनां पातेत्यस्योत्तरमिदं वट वो ब्राह्मणास्तेषां यज्ञेषु यदि असौ रामः पिण्डीशूरान् पिण्ड्यां भोजनएव शूरान् कार्य्यान्तराक्षमान् राक्षसान् निरस्तवान् तदा एतावति अल्पेऽपि कार्य्ये हे कूपमाण्डूकि तव कः स्मयो गर्व्वः विस्मयोवा मण्डूकस्य भेकस्य स्त्र्यपत्यमिति शिवादित्वात् ष्णः कूपे माण्डूकी इव एतेनाल्पदृश्यत्वादन्ये वीरास्त्वया न दृष्टा इति ते स्मयइति सूचितं कूपमण्डूकीति पाठे जातेरतइतीप् कूपमाण्डूकीत्यत्र पिण्डीशूरान् इत्यत्र च पात्रेसमितादित्वात् क्षेपे तत्पुरुषइति परः समसे अर्थवशात् क्षेपोगम्यते॥ ८५॥ भ०

मत्पराक्रमसंक्षिप्तराज्यभोगपरिच्छदः। युक्तं ममै व किं वक्तुं दरिद्राति यथा हरिः॥ ८६॥

ज०म० मत्प । राज्यभोगादयः परिच्छदोयस्य स्वादिः यमत्पराक्रमेण संचिप्तोऽपहृतोयस्य हरेरिन्द्रस्य सयथा दरिद्राति निरर्थको. भवति तन्ममैव किं वक्तुं युक्तमात्मगुणवादस्य लज्जाकरत्वात् दरिद्रातेरादादिकत्वाच्छपोलुक् ॥ ८६ ॥

भ० मदित्यादि । मत्पराक्रमेण संचिप्तोऽपहृतो राज्यभोगपरिच्छदोयस्य स्वादिर्यस्य तादृशोहरिरिन्द्रोयथा यदि दरिद्राति दुर्गतोभवति तदा किं ममैव वक्तुं युक्तं अपि तु नैवेत्यर्थः आत्मगुणानुवादस्य लज्जाकरत्वात् दरिद्रा चलदुर्गत्यां ॥ ८६ ॥

निर्लज्जोविमदः स्वामी धनानां हृतपुष्पकः । अध्यास्तेऽन्तर्गिरं यस्मात् कस्तन्नावैति कारणं ॥ ८७ ॥

ज०म० निर्ल । यस्मात् कारणात् धनानां स्वामो धनदः अन्तर्गिरमध्यास्ते अध्यासितवान् गिरेः कैलासस्यान्तर्मध्ये विभक्त्यर्थेऽव्ययीभावः गिरेश्च सेनकस्येति टच् अधिशीङ्स्थासामिति कर्मसंज्ञा तेन तृतीयासप्तम्योर्बहुलमित्यम्भावो न भवति नाव्ययीभावादित्यमेव भवति तत्कारणंमम पराक्रमरूपं वा कोनावैति न जानाति कीदृशः निर्लज्जः लज्जातोनिष्क्रान्तः निरादयः क्रान्ताद्यर्थे पञ्चम्येति सः एकविभक्तिचेत्युपसर्जनसंज्ञायां ह्रस्वत्वम् हृतपुष्पकः हृतं आच्छिन्नम्पुष्पकाख्यं विमानं यस्य अतएव विमदोऽपि तदर्थः लङ्का पुष्पकञ्च धनदस्यासीत् तच्छित्त्वा अनेन गृहीतमिति ॥ ८७ ॥

निर्लज्ज इत्यादि। धनानां स्वामी कुबेरः यस्मात् कारणात् अन्तर्गिरं गिरेः कैलासस्य मध्यमध्यास्तेऽधिवसति तत्कारणं मत्पराक्रमरूपं कोजनोनावैति अपितु सर्व्व एव जानाति कीदृशः कुबेरः निर्लज्जः लज्जाया निष्क्रान्तः पञ्चमीतत्पुरुषः व्यपूर्व्वमिति निरः पूर्व्वनिपातः निर्गता लज्जा यस्येति वा विमदः विगतो मदो दर्पो यस्य हृतपुष्पकः हृतं पुष्पकं विमानं यस्य ईदृशोऽपि मत्पराक्रमादेवैति भावः अन्तर्गिरमिति सप्तम्यर्थेऽव्ययीभावः अप् मदीपोर्थमास्याग्रहायणोगिरेर्व्वेति पक्षे अः कर्मक्रियेत्यादिना आधारस्य कर्म्मत्वं॥ ८७॥　भ०

भिन्ननौक इव ध्यायन् मन्तोविभ्यद्यमः स्वयं। क्ष्णिमानं दधानेन मुखेनास्ते निरुद्यतिः॥ ८८॥

भिन्न। स्वयं साक्षान्मन्तोविभ्यत् त्रसन् यमोविलक्षणात् मुखेन क्ष्णिमानकृष्णवर्णत्वं वर्णदृढादिभ्यःष्यञ्चेति चकारादिमनिच् दधानेन धारयता इत्थम्भूते तृतीया निरुद्यतिः निरुद्यमः आस्ते उत्पूर्व्वाद्यमेः स्त्रियाक्तिन् अनुनासिकलोपः कीदृशः ध्यायन् चिन्तयन् किममापद्यदृशमनेन हृतसर्व्वस्व इति भिन्ननौक इव विपन्नपोतवणिगिव उरःप्रभृतिभ्यः कप्॥ ८८॥　ज०भ०

भिन्नेत्यादि। यमः मन्तोविभ्यत् त्रसन् स्वयं ध्यायन् चिन्तयन् निरुद्यतिर्निरुद्यमआस्ते स्वयमिति स्वयमेवात्मनोऽसामर्थ्यं जानाति नतन्येन बोधित इत्यर्थः क्ष्णिमानं कृष्णत्वं दधानेन मुखेन　भ०

उपलक्षित: विशेषणे हृतीया गुणादिमन्भावे भिक्षा विद्यारिता गौर्येस्य तादृशोवणिक् यथा ध्यायति तथा ध्यायन् एकवचना न्तेन गौशब्देन वजशीरौ करति परः क्षमते स्वार्थे पुंवत्स्यु न्नपुंसकइति ज्ञापकात् तयोरिति प्रसङ्गः पञ्चभ्यास्तम् युष्म दस्मदोरनादेशावित्यादिना मदादेशः गवोशकार्थस्य वाऽख्यात् त्यदादेरःत्राविति अनिषेधः भिभोक्तिभोत्यां प्रश्न; इवादीरेंडिः ऋद्वेरित्युक्तेर्न गुण् निरत्पूर्व्वात् यमः क्तौ वनतनाद्यनिमामिति मलोपः एतेन दिक्पतीनां जयाद्रूमेव सुप्रसिद्धोस्तु तथेत्युक्तं ॥ ८८ ॥

समुद्रोपत्यका हैमी पर्व्वताधित्यका पुरी । रत्न पारायणं नाम्ना लङ्केति मम मैथिलि ॥ ८९ ॥

ज०म० एवं । स्वपौरषप्रदर्शं स्लोकर्त्तुमाह समु । हे मैथिलि लङ्केति नाम्ना मम पुरी कीदृशी समुद्रएवोपत्यका आसन्नोयस्याः सा स मुद्रोपत्यका समुद्रस्य पर्व्वतोपत्यकात्वात् समुद्रोपत्यकेति समा से साधुत्वम् भवति यतः संज्ञाधिकारात् पर्व्वतस्यासन्ने अधि रूढे उपाधिभ्यां त्यकन्प्रत्ययान्तयोरुपत्यकाधित्यकाशब्दयोः साधुत्वमुक्तम् प्रतिषेधे त्यकन् उपसंख्यानमिति प्रत्ययस्थादिती कारो न भवति हैमी हेमविकारा प्राणिरजतादिभ्योऽञ् पर्व्वता धित्यका त्रिकूटपर्व्वतस्योपरि स्थिता रत्नपारायणं यत्र रत्ना न्यपारमवसानमयन्ते बुध्यन्ते तत्परीक्षकाः सर्व्वरत्नस्थानमि त्यर्थः । दुर्गावस्थित्यानभिभवनीयतां रत्नोपचयात् समृद्ध तान्दूचयन् प्रलोभयति ॥ ८९ ॥

समुद्रेत्यादि। अस्माति सीताप्रलोभनं क्रियते हे मैथिलि लङ्केति नाम्ना ख्याता मम पुरी कीदृशी समुद्रोपत्यका समुद्रस्य उपत्यका समीपे भूमिः पर्व्वतस्य त्रिकूटस्य अधित्यका उपरि स्थिता अध्युपाभ्यां त्यचादित्वात् त्यचाद्यपिरेत्यादिना भवादित्वात् अद्रावासन्नयोस्त्यः ततः स्वार्थे कः स्त्रियामाप् काप्यतोरित्यादिना षिपादित्वात् न इत्वं उपत्यकाद्रेरासन्ना भूमिरूर्द्धमधित्यका इत्यमरकोषे अद्रेरित्युपलक्षणं समुद्रउपत्यका पर्व्वतासन्नभूमिर्यस्या इति केचित् एतेन दुर्गमत्वं सूचितं रैमो रैवो विकारः विकारसंघेति ष्णः मन्वर्थेत्यादौ विकारग्रहणात् नलोपनिषेधाभावात् न्वोर्लोपोतावितीति नस्य लोपः रत्नानां पारमवसानं अयन्ते बुध्यन्ते तत्परीक्षका अत्रेति रत्नपारायणं च अस्य नट्थघे इति आधारे अनट् स्वभावादजहल्लिङ्गता सर्व्वरत्नस्थानमित्यर्थः यदाह हलायुधः शाकल्यवचनं प्राज्ञैः पारायणमुदाहृतमिति॥ ८९॥ भ०

आवासे सिक्तसंमृष्टे गन्धैस्त्वं लिप्तवासिता। अर्पितोरुसुगन्धिस्रक् तस्यां वस मया सह॥ ९०॥

आवासे। तस्यां पुर्य्यां आवासे गृहे आवसत्यस्मिन्निति अधिकरणे घञ् मया सह त्वं वस प्रार्थनायां लोट् सिक्तसंमृष्टे पूर्व्वं सिक्ते पश्चात्संमृष्टे गन्धैर्लिप्तवासिता सती पूर्व्वं लिप्ता चन्दनादिभिर्गन्धैः पश्चाद्वासिता धूपिता अगुर्व्वादिभिः पूर्व्वकालेत्यादिना जं०म०

वः अर्पिता न्यस्ता उर्व्वी महती सुगन्धिस्रक् सुरभिमाला यस्यां सा त्वं किमिति त्वया सह वसामीति चेदाह ॥ ९० ॥

भ० आवासइत्यादि। तस्यां पुर्य्यां आवासे गृहे मया सह त्वं वस प्रार्थनायां गी पूर्व्वं सिक्ते पश्चात् संमृष्टे शोधिते सिक्तसंमृष्टे गन्धै स्चन्दनादिभिर्लिप्तवासिता पूर्व्वं लिप्ता पश्चाद्वासिता धूपैः उभ यत्र पूर्व्वपरकालसम्बन्धादेकार्थत्वेन कर्मधारयः गन्धयतीति गन्धश्चन्दनादिः वासिता करिणी नार्य्योर्वासितं सुरभीकृते। च्छा तमाचे खगारावे वासितं वस्त्रवेष्टितइति विश्वः अर्पिता न्यस्ता उर्व्वी महती सुगन्धिः सुरभिः स्रक् माला यस्यां तादृशी च सती स्रुत्सुरभिपूतिरित्यादिना गन्धादित्प्रत्ययः ॥ ९० ॥

सङ्गच्छ पौंस्नि स्त्रैणं मां युवानं तरुणी शुभे। राघवः शोभ्यपापीयान् जहीहि तमकिञ्चनं ॥ ९१ ॥

ज०म० सङ्ग। हे पौंस्नि पुमांसमर्हति तद्धिताय वा अर्हार्थे हितार्थे वा स्त्रीपुंसाभ्यान्नञ्स्नञौ स्त्रीप्रत्यये नञ्स्नञीकक्तरुणतलुनाना मुपसंख्यानमिति मां युवानन्तरुणं सङ्गच्छ अङ्गीकुरु गमेः प्रार्थ नायां लोट् इषुगमीत्यादिना छत्वम् समोगम्यृच्छेत्यादिना तङ् न भवति सकर्मकत्वात् विशेषतः स्त्रैणं स्त्रियै हितमर्हन्तं वा पूर्व्व वत्प्रत्ययः तरुणी युवती सती शुभे लक्ष्मि शोभतइति इगुपध लक्षणः कः ममापि तादृक्शोभर्त्तास्तीति चेदाह राघवः शोभ्यपा पीयानिति पापशब्दादिष्ठतोर्लुगिति ईयसुन् लुक मतुपः शोभ्य पापीयानिति मयूरव्यंसकादित्वात्सः देशान्तरं याता पापव

त्पर: अतएतमकिञ्चनन्दरिद्रं न विद्यते किञ्चन यस्येति सर्व्व नामाव्ययसंज्ञायाउपसर्जनप्रतिषेधइति वचनान्नाव्ययसंज्ञा तेन न विभक्तिलोप: जहीहि त्यज इत्यस्य जहातेश्चेति वा वचनादि कल्प: ॥ ८१ ॥

सङ्गेत्यादि ॥ हे पौंस्नि हे पुरुषयोग्ये पुरुषहिते वा हे शुभे कल्याणि तरुणी त्वं स्त्रैणं स्त्रीयोग्यं स्त्रीहितं वा युवानं मां सङ्गच्छ अङ्गीकुरु विधिनिमन्त्रणेत्यादिना प्रार्थनायां लो सदृशयोराव योर्योगउचितइति भाव: स्त्रीपुंसाभ्यां विकारसंघेत्यादिना स्त्रञ् ननपुंस्त्रियो: तरुणशब्दान्नदादित्वादीप् शोभतेइति शुभा इगु पधत्वात् ज्ञाप्रीकिर: क इति क: ममापि इहशोभनेति चेत् आह राघव: शोच्यपापीयान् देशान्तरं गत्वा पापवत्तर: पापवत् शब्दात् गुणादिष्ठेयसू इति ईयसु: लुङ्मदविनामिति वतोर्लुक् ओमस्य टिलोप: इति डित्त्वात् टेर्लोप: मयूरव्यंसकादित्वाद् न समास इति पर: स्वमते गमकत्वात् असमासत्वेऽपि न क्षति: तमकिञ्चनं दरिद्रं जहीहि त्यज किञ्चनेत्यव्ययेनापि समासे मयूरव्यंसकादि त्वेन निपातनात् वाच्यलिङ्गतेति पर: नञ् तत्पुरुषादर्शआदि त्वादद् इत्यन्ये न विद्यते किञ्चनमस्येति बहुव्रीहौ नाव्ययकार्य्य मिति केचित् स्वमते द्रविणे किञ्चनं क्लीवइति कोषाद्नव्ययेन कि ञ्चनशब्देन समास: वस्तुतोऽप्येवमकिञ्चनशब्दोनिर्धनवाची वाच्य लिङ्ग: तथाच कोष: नि:स्वाकिञ्चनदुर्व्विधाइति आद्योरित्यादि ना हाकरत्वं ॥ ८१ ॥ भ०

अश्नीत पिबतीयन्ती प्रसिता स्मरकर्म्मणि। वशेकृत्य दशग्रीवं मोदस्व वरमन्दिरे ॥ ९२॥

ज०म० अश्नी। अश्नीत पिबतेति मयूरव्यंसकादित्वात्सः तत्र ह्याख्यात माख्यातेन क्रियासातत्यइति पचते सततमश्नीतपिबतेत्येवभृत्य जनानादेष्टुमिच्छतीति सुपश्चात्मनः क्यच् अश्नीतपिबतीयन्ती प्रसि तास्मरकर्म्मणि आधिक्येन प्रवृत्ता कामव्यापारे प्रसितोत्सुका भ्यान्तृतीया चेति चकारात्सप्तमी वशेकृत्यानुवर्त्तिनन्दशग्रीवङ्कृ त्वा साचात्प्रभृतित्वाद्गतिसंज्ञा मोदस्व हर्षञ्जनय वरमन्दिरे श्रेष्ठगृहे स्थिता ॥ ९२॥

भ० अश्नीत्यादि। दशग्रीवं वशेकृत्य आयत्तीकृत्य वरमन्दिरे श्रेष्ठ गृहे त्वं मोदस्व हर्षं जनय वशेइति सप्तम्यन्तप्रतिरूपकोऽव्ययः इत्युपाणावित्यादिना साचादादित्वात् समासः कीदृशी अश्नीत पिबतेति भृत्यजनानादेष्टुमिच्छन्ती अश्नीतपिबतेति सततं नियोगो यस्यां क्रियायां सा अश्नीतपिबता ऐक्यं सोऽव्ययइति समासः तत्र हि सामान्यत्वात् पदमात्रस्यैव ग्रहणं तेन क्वचित् स्याद्य न्तस्य क्वचित्त्याद्यन्तस्य क्वचिदुभयस्य चैक्यमिति सर्व्वं त्याद्यन्त स्यान्यप्रत्ययान्तत्वाभावेऽपि समासे अन्यपदार्थत्वात्स्त्रीत्वं तेनाच क्रियायाविशेषणार्थत्वात् स्त्रियामतश्चाप् क्तेर्लुक्त्येचेत्यपं त्यादि क्तेरेव ग्रहणमभिधानात् तेन त्यादिक्तेर्न लुक् निपातनाद्रूप सिद्धिरिति परे अश्नीतपिबतामिच्छतीति क्यः स्मरकर्म्मणि काम चेष्टायां प्रसिता तत्परा प्रसितोत्सुकाभ्यां तात्पर्य्ये तृतीया

मन्यश्याविति मरः स्मरति विषयविवक्षा पिशमन्वते क्तः ॥ ९२ ॥

मास्म भूर्ग्राहिणी भीरु गन्तुमुत्साहिनी भव। उल्ला
सिनी च भूत्वा मे वचःसम्मर्द्दिनी भव ॥ ९३ ॥

मास्म। हे भीरु मास्म भूर्ग्राहिणी प्रतिकूला माभूः न यास्या अ०म०
मीत्यमुमर्थं गृह्णामीति कृत्वा स्मोत्तरे लङ्चेति चकारात् लुङ्
गन्तुमुत्साहिनी उद्युक्ता भव शकधृषेत्यादिना तुमुन् उत्साहि
नीति सहोपपदत्वात् ततस्त्वालङ्कृतशरीरत्वादुल्लासिनी शोभमा
ना भूत्वा नोऽस्माकं वचःसम्मर्द्दिनी स्तनाभ्यामुरस्थलस्य पीडिका
भव ग्रहोत्साहोल्लासवसमर्द्दानाङ्ग्राहादिषु पठितत्वात् कर्त्तरि
णिनिः सर्व्वेभ्योऽप्य ॥ ९३ ॥

मास्मत्यादि। हे भीरु ग्राहिणी प्रतिकूलार्थग्राहिणी त्वं मास्म भ०
भूः न भव गन्तुमुत्साहिनी उद्युक्ता भव उल्लासिनी गत्वालङ्कारा
दिभिः शोभमाना भूत्वा नोऽस्माकं वचःसम्मर्द्दिनी स्तनाभ्यामुर
स्थलस्य पीडिका भव सर्व्वत्र ग्रहादित्वाणिन् चकारः समुच्चये
अस्मद एकत्वे बहुत्वमभिधानात् गौरवव्यञ्जकं ॥ ९३ ॥

तां प्रातिकूलिकीं मत्वा जिघृक्षुर्भीमविग्रहः। बाहु
पपीडमाश्लिष्य जगाहे द्यां निशाचरः ॥ ९४ ॥

ताम्मा। यदैवमभिधीयमाना न प्रतिपन्ना तदा ताम्प्रातिकू अ०म०
लिकीम्प्रतिकूलवर्त्तिनीं मत्वा ज्ञात्वा ओजःसहोम्भसा वर्त्तत

इत्यधिकृत्य प्रतिकूलं वर्त्ततइत्यस्मिन्नर्थे तत्प्रत्यनुपूर्व्वेत्यादिना ठक् जिहीर्षुः हर्त्तुमिच्छुः भीमविग्रहः भीषणशरीरः हृष्टराक्षसशरीरदर्पः सुखेन ह्रियतइति वाहूपपीडमाश्लिष्य वाहुभिरुपपीड्य सप्तम्याञ्चोपपीडइति चकारात् तृतीयान्तउपपदे णमुल् जगाहे रथेनोत्पत्य द्यामाकाशन्निशाचरोगाहते स्म दिवशब्दसमानार्थो द्योशब्दश्चौणादिकः गमेर्डोइत्यत्र द्युतेश्चेति वचनात् श्रौतोऽम्शसोरित्यात्वं कालापैस्तु दिवशब्दादेव व्युत्पादयितुं सूत्रमवधीयते वाम्येति दिव अमि विकल्पेनाकारादेशइति ॥ ६४॥

भ० तामित्यादि। उक्तवाक्यानङ्गीकारात् तां सीतां प्रातिकूलिकीं प्रतिकूलवर्त्तिनीं मत्वा जिहीर्षुर्हर्त्तुमिच्छुर्निशाचरोरावणो भीमविग्रहोभयङ्करमूर्त्तिः सन् वाहूपपीडं वाहुभिरुपपीड्य आश्लिष्य तां गृहीत्वा द्यामाकाशं जगाहे गाहुविलोडे गतवानित्यर्थः तृतीयान्तादुपपीडेणमिति परः स्वमते वाहुभ्यामुपपीडः पीडनं यत्नेत्याश्लेषक्रियाविशेषणं उपपीडोघञन्तः द्यामिति द्योशब्दस्य दिवशब्दस्य वा अमि रूपं प्रतिकूलं यथा स्यात्तथा वर्त्ततइति क्रियाविशेषणस्य कर्म्मत्वात् ठगेकादिति ष्णिकः॥ ६४॥

त्रस्यन्तीं तां समादाय यातोरात्रिञ्चरालयं। तूष्णीं
भूय भयादासाञ्चक्रिरे मृगपक्षिणः॥ ६५॥

जं०म० त्रस्य। त्रस्यन्तीं च तां तद्रूपदर्शनात् समादाय गृहीत्वा यातो गच्छतोरावणात् यातेः शतरि पञ्चम्यां रूपम् किम्भूतो

रात्रिञ्चरालयं लङ्कां रात्रौ चरतीति चरेष्टः रात्रेः कृतिविभा
षेति मुम् तस्माद्रावणाद्यत् भयन्ततोभयात् तूष्णींभूय तूष्णीमि
भुवइति क्त्वा चेति समासे ल्यबादेशः आसाञ्चक्रिरे आसिताः दृया
यासस्रेत्याम् मृगपक्षिणः मृगाश्च पक्षिणश्च समानजातीयानामि
ति वचनादेकवद्भावोऽत्र न भवति ॥ ९५ ॥

त्रस्यन्तीमित्यादि। त्रस्यन्तीं बिभ्यतीं तां सीतां समादाय भ०
गृहीत्वा रात्रिञ्चरस्यालयं लङ्कां याती गच्छतोरावणाद्भयात्
मृगाश्च पक्षिणश्च तूष्णींभूय मौनिनोभूत्वा आसाञ्चक्रिरे स्थित
वन्तः आसङ्उपवेशे ब्रिंजादीत्याम् भस्कृन्वामः यातइति शचन्तं
रात्रौ चरतीति पचादित्वादम् रात्रेर्मन्वाकृति तूष्णीमित्यव्ययं
मौनार्थे वर्त्तते व्यस्यग्यनुकारइत्यादिना ऊर्यादित्वात् समासे
क्त्वायप् ॥ ९५ ॥

उच्चैरारट्यमानां तां कृपणां रामलक्ष्मणौ। जटा
युः प्राप पक्षीन्द्रः परुषं रावणं वदन् ॥ ९६ ॥

एते प्रकीर्णकाः।

उच्चैः। तां सीताञ्जटायुः पक्षीन्द्रः रावणम्परुषन्निष्ठरं वदन् ज०भ०
प्राप प्राप्तवान् कीदृशीं उच्चैरारट्यमानां हा राम हा लक्ष्मणेति
शब्दौ द्वौ उच्चैर्महता ध्वनिना पुनःपुनारटन्तीमित्यर्थः रटेः
शब्दकर्मकत्वात् क्रियासमभिहारे यङ् कृपणान्दीनाम् इति
प्रकीर्णकाण्डः प्रथमः समाप्तः ॥ ९६ ॥

उच्चैरित्यादि। उच्चैर्यथा स्यात्तथा रामलक्ष्मणौ रारट्यमानां भ०

हा राम हा लक्ष्मणइति पुनःपुनराह्वयमानां कृपणां दीनां सीतां जटायुः पक्षिराजः प्राप रावणं परुषं निष्ठुरं वदन् वदिर्द्विकर्मकः रथमध्ये मूषस्थेत्यादिना यक्। इति गौराङ्गमल्लीक पुत्रोभरतमल्लिकः। प्रकीर्णकाण्डव्याख्यानं मुग्धबोधमतेऽकरोत् ॥ ९६ ॥

## अतःपरं टाधिकारः ॥

द्विषन् वनेचराग्र्याणां त्वमादायचरोवने। अग्रेस रोजघन्यानां माभूः पूर्व्वसरोमम ॥ ९७ ॥

ज॰म॰ इतः परमधिकारकाण्डमुच्यते यत्र प्राधान्येनैकैकमधिकृत्य लक्षणप्रदर्शितम् तदधिकारकाण्डम् शेषलक्षणेषु प्रकीर्णकमेव द्रष्टव्यम् एवञ्च कृत्वा अन्तरान्तरा तत्सूचनार्थमप्रकीर्णकश्लोकाभिधानमत्र च काण्डे निर्द्दिष्टसंज्ञकाश्चत्वारः परिच्छेदाः तत्र प्रथमे आद्यं टप्रत्ययमधिकृत्योच्यते सर्गार्थस्य विवक्षितस्यापरिसमाप्तत्वात् तमेवाभिसंन्धायाह। द्विषन्नित्यादि। एवञ्च कृत्वा मिश्रकउच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात् परुषं वदन् कीदृशं हे द्विषन्माभूः पूर्व्वसरोममेति ममाग्रतोभूत्वा मागा इत्यर्थः पूर्व्वं सरतीति पूर्व्वे कर्त्तरीति टः यतस्त्वमग्रेसरोजघन्यानामग्रेसरतीति पुरोग्रतइत्यादिना टः अघन्यइति शास्त्रादिभ्योयइतीवार्थे यः पापानाम्प्रथमस्त्वम् कुतः आदायचरोवने आदाय चरतीति भिक्षासेनेत्यादिना वने चरन्तीति वनेचराः

अधिकरणे चरेष्टः तेषामग्र्याः प्रधानाखषयः तानादायचरसि भक्षयसि कर्म्मणि षष्ठी ॥ ९७॥

इतः प्रभृत्यधिकारकाण्डमुच्यते एकैकं विषयमाश्रित्य लक्षण प्रदर्शनं यत्र तदधिकारकाण्डं तत्रापि लक्षणान्तरसम्बन्धात् प्रकीर्णतास्तीति सूचनार्थं मध्ये मध्ये प्रकीर्णश्लोकाभिधानं विवक्षितस्य सर्गार्थस्यापरिसमाप्तत्वात् सर्गमध्ये काण्डान्तरारम्भेन द्वैधाय एवञ्चायं सर्गोमिश्रकउच्यते द्वयोरप्यत्र प्राधान्येन विवक्षितत्वात्। अथ टाधिकारः। द्विषन्नित्यादि। परुषं वदन्निति यदुक्तं तत्किमित्याह हे वनेचराग्र्याणां मुनीनां द्विषन् अचो त्वं मम पूर्व्वचरोऽग्रयायी माभूः यतस्त्वं जघन्यानां नीचानां अग्रेसरः प्रथमः वने आदाय गृहीत्वा अर्थात् सीतां चरसि गच्छसीति आदायचरः द्विषन्निति द्विषः अत्रौ शतृ रिति परः स्वमते द्विषच्छब्दः शत्रुवाचित्वे रूढएव विद्वेषार्थे तु कोपमवदिति शतृः उभयथा सम्बन्धे षष्ठी वने चरतीति पचादित्वादच् अभिधानात् सप्तम्यलुक् अग्रेभवोऽग्र्यः श्रेष्ठउच्यते रेफान्तपाठेऽग्रशब्दएव श्रेष्ठार्थः तथाच। अग्रमालम्बने प्रान्ते परिमाणे पलस्य च। प्रान्ते समन्तादधिके प्रधाने प्रथमार्धयोरिति विश्वः। दामागेहागित्यादौ यच्छ्ब्दग्रहणात् न दाज्ञस्त्वं चरैः पूर्व्ववदन् गमकत्वात् दृत्तार्थाः सिद्धसंघैरितिवत् क्रियायाः कारकापेक्षायामपि यवन्तेन समासः अविवक्षितकर्म्मत्वात् सापेक्षत्वाभावेन वा समासः असमासेऽपि न क्षतिः मयूरव्यंसकादित्वात् सापेक्षत्वेऽपि समासइति परः अग्रे इत्येकवचनान्तमव्ययं स्वकु

ष्ट्रइति टः जघनं पश्चाद्भागः तत्तुल्योजघन्यः विकारसंघेत्यादि
ना तुल्यार्थे ण्यः॥ ९७।

यशस्करसमाचारं ख्यातं भुवि दयाकरं। पितुर्व्वा
क्यंकरं रामं धिक्त्वां दुन्वन्तमत्रपं॥ ९८॥

ज०म० यश। रामन्दुन्वन्तमुपतापयन्तमत्रपन्निर्लज्जन्धिक् त्वां गर्हा
टुदुउपतापे इत्यस्य शैवादिकस्य शतरि हुश्नुवोःसार्व्वधातुक
इति यणादेशे रूपम् कीदृशं रामं यशस्करसमाचारं समा
चरणं समाचारः चरितं भावे घञ् यशस्करोतीति यशस्करः
कृञोहेत्वित्यादिना टः विसर्ज्जनीयस्य सः यशस्करणहेतुभूतः
समाचारोयस्य ख्यातम्भुवि प्रसिद्धन्दयाकरङ्करुणाकरणशीलं
ताच्छील्ये टः पितुर्वाक्यकरम्पितुर्वचनानुष्ठाने अनुकूलं आनुलो
म्ये टः॥ ९८॥

भ० यशस्कित्यादि। रामं दुन्वन्तं उपतापयन्तं अत्रपं परस्त्री
हरणेन निर्लज्जं त्वां धिक् धिक्समयेत्यादिना द्वी टुदुउपता
पे स्वादित्वात् शतरि नुःश्नुधोरिति वः रामं कीदृशं यशस्करः
समाचारोयस्य तं यशःकरोतीति सकुष्टइति टः अचढात् प
ञ्चिति सूत्रात् ढादित्यनुवर्त्तते सेतुकच्चेति वेः षः कृञोहेत्वादा
वर्थे टइति परः स्वमते यशस्करी विद्येति निर्द्दिशता विद्याया
यशस्करणे हेतुत्वात् हेत्वाद्यर्थः सूचितः अन्यथा विद्येति यश
सस्य वैयर्थ्यं स्यात् हेत्वाद्यर्थानुक्तावपि न क्षतिः सम्यगाचरणं

समाचारस्येष्टा सम्ऽलनटोऽचे इति सम् भुवि ख्यातं इत्याक रणशीलं पूर्ववत् परमते ताच्छीत्यार्थेऽपि पितुर्वाक्यानुष्ठाने ऽनुकूलं पूर्ववत् परमते ऽनुकूलार्थेऽपि वाक्यशब्देनाच तदभि धेयमुच्यते॥ ९८॥

अहमन्तकरोनूनं ध्वान्तस्येव दिवाकरः। तव राक्षस रामस्य नेयः कर्मकरोपमः॥ ९९॥

अहम्। हे राक्षस अहमेव नूनमवश्यमन्तकरः विनाशयिता कीदृशः रामस्य नेयोवश्यः अतोयत् कर्मकरोपमः भृतकतुल्यः कर्मणि भृताविति टः ध्वान्तस्येव दिवाकरः यथान्धकारस्या न्तकरो दिवाकरः सूर्य्यः तथा अन्तकरदिवाकरौ दिवाविभेति टप्रत्ययान्तौ एवमुक्त्वा सम्पपातेति सम्बन्धः॥ ९९॥ ज०म०

अहमित्यादि। हे राक्षस नूनं निश्चितं अहं तव अन्तकरः भ० नाशयिता अन्तं करोतीति टः यथा दिवाकरः सूर्य्यो ध्वान्तस्य अन्धकारस्य अन्तकरः दिवाशब्दोऽयमाधाररूपदिनवचनो ऽव्ययः तेन दिवा दिवसे प्राणिनश्चेष्टायुक्तान् करोतीति निशादि त्वात् इति परः स्वमते दिवाशब्दोऽयमव्ययः सत्तन्यन्तलं प्राणिकं तेन दिवा दिनं करोतीति पूर्ववत् वाक्यत्वाद्वा दिवा दिवसे करोरश्मिर्यस्य इति केचित् ध्वान्तमिति ध्वनेस्तमसि के चुसवाढ इत्यादिना निपातः अहं कीदृशः रामस्य नेयः वश्यः वश्यः प्रणे योनिभृत् इत्यमरः कर्मकरोपमः भृतकतुल्यः कर्म करोतीति टः कर्मशब्दात् भृतौ टइति परः॥ ९९॥

सतामसह्यङ्करं पक्षी वैरकारं नराशिनं। हन्तुं कल
हकारोऽसौ शब्दकारः पपात खं॥ १००॥

इति टाधिकारः॥

ज॰म॰ सता। एवमुक्त्वा असौ जटायुः पक्षी खमाकाशमपपात पतितः किमर्थं नराशनं राक्षसं हन्तुं हनिष्यामीति कीदृशं राक्षसं सता मरुष्करं धर्मे स्थितानाम्पीडाकरम् अरुःशब्दः पीडोपलक्षण परः द्विषाविभेति टः वैरकारं वैरकरणशीलं कलहकारः पक्षी कलहयितुमनुकूलः अनयोर्नशब्दश्लोकेति टे प्रतिषिद्धेऽणेव भव ति कर्म्मण्यणः प्राप्तिरस्तीति टाधिकारउदाहृतः कियत्खमपपात यावति दूरे शब्दपातस्तावत्खमिति टाधिकारः समाप्तः॥ १००॥

भ॰ सतामित्यादि। एवमुक्त्वा असौ पक्षी जटायुर्नराशिनं रा क्षसं हन्तुं खमाकाशं पपात जगाम कीदृशं राक्षसं सतां साधूनां अरुष्करं व्रणकरं पीडाकरमित्यर्थः पूर्ववत् टः निष्पतनञ्च इति वत् षत्वं वैरं विरोधं करोतीति वैरकारस्तं ढातृषस्थित्यस्य कुम्भ कारइत्युदाहरणेन कुम्भादेःकृञः षण् अन्यस्मात् सकुष्टइत्यस्य विषयइति सूचितं तेनात्र कुम्भादित्वात् षण् पक्षी कीदृशः कलह कारः कलहं करोतीति पूर्व्ववत् षण् एवं शब्दकारः शब्दपात मिति पाठे शब्दस्य पातोयत्रेति खविशेषणं यावद्दूरं शब्दगमनं तावद्दूरमित्यर्थः शब्दस्येव पातोगतिर्यत्रेति पतनक्रियाविशेषणं वा एतेन यथा शब्दस्य शीघ्रगमनं तथास्येति ध्वनितं इति। टाधि कारः॥ १००॥

## अतः परं प्रकीर्णकाः॥

धुन्वन् सर्व्वपथीनं खे वितानं पक्षयोरसौ। मांस शोणितसन्दर्शं तुण्डघातमयुध्यत ॥१०१॥

इतः प्रकीर्णकश्लोकानाह। धुन्वन्नित्यादि। असौ पक्षी अयुध्यत युध्यते स्म युधेर्दैवादिकस्य लङि रूपम् तुण्डघातमिति क्रियाविशेषणम् तुण्डेन चञ्च्वाघातो हननं यस्मिन् युद्ध इति करणे हन इति न णमुल् कषादिषु यथाविध्यनुप्रयोगात् अहिंसार्थत्वाच्च तदारम्भस्य यथा पादघातम्भूमिं हन्तीति हिंसार्थानाञ्च समानकर्म्मकाणामित्यनेनापि न भवति समानकर्म्मकताभावात् अकर्म्मकत्वाद्युधेः तेन भावे घञ् धुन्वन् कम्पयन् खे आकाशे पक्षयोर्वितानं सर्व्वपथीनं सर्व्वः पन्था इति पूर्व्वकालैकेत्यादिना सः ऋक्पूरिति समासान्तोऽकारः सर्व्वपथान् व्याप्नोतीति तत्सर्व्वादेरित्यादिना खः मांसशोणितसन्दर्शञ्चात्र्येन मांसं शोणितञ्च दृष्ट्वा कर्म्मणि दृशिविदोः साकल्य इति णमुल् अमैवाव्ययेनेति सः ॥१०१॥ ज०म०

अथ प्रकीर्णकाः। धुन्वन्नित्यादि। असौ जटायुः खे आकाशे पक्षयोर्व्वितानं विस्तारं धुन्वन् कम्पयन् मांसशोणितसन्दर्शं यथा स्यात् तुण्डघातं यथा स्यात् तथा अयुध्यत युधोऽकृद्धे मांसरक्तयोरर्थाद्रावणस्य सम्यग्दर्शनं यत्र तुण्डस्याघातो यत्र इति युद्धक्रियाविशेषणं दर्शघातौ घञन्तौ परे तु साकल्येन मांसं शोणितञ्च दृष्ट्वा रावणस्येत्यर्थात् दृशेर्णम् साकल्ये एवं तुण्डेन हत्वा तुण्डघातं तृतीयान्तादासन्तौ णम् तुण्डघातेन युद्धसम्भवादा भ०

सन्तिरच गम्यतइत्याद्धः विताने कीदृशं सर्व्वंस्यासौ पन्थाश्चेति सर्व्वपथः पथ्यपुरःसे इति अः सर्व्वपथं व्याप्नोतीति ढघेकादिति ईनः॥ १०१॥

न विभाय न जिह्राय न चक्लाम न विव्यथे। आप्लानोविध्यमानोऽपि रणान्निववृते न च॥ १०२॥

ज०म० नवि। आप्लानः पचो प्रहरन् आङोयमहनइति तङ् न विभाय न भीतः तस्मान्न जिह्राय न लज्जितः सम्यक्‌मया न हत इति न चक्लाम न क्लान्तः न विव्यथे व्यथोलिटीति सम्प्रसारणम् जितश्रमत्वात् विध्यमानोवा वाशब्दस्त्वार्थे परेण हन्यमानस्य न विव्यथे न पीडां भेजे बलाधिकत्वात् रणाच न निववृते न निवृत्तः अभग्नोत्साहत्वात्॥ १०२॥

भ० नवीत्यादि। असौ पक्षी आप्लानः प्रहरन् न विभाय न भीतः मया ताडितोऽपि न हतइति न जिह्राय न लज्जते स्म न चक्लाम नायमर्थोवभूव न विव्यथे न पीडितो भवति स्म विध्यमानः परेण ताड्यमानोऽपि रणात् न निववृते न निवृत्तः अभग्नोत्साहत्वात् सर्व्वत्र ठी व्यथेस्तु व्यथयवेति जिः आप्लानइति आत्मा कुठादइत्यादनयमइति मं किम्वा आप्लानः यत्तुर्हिंसनस्त्रतः प्रक्तिवयस्ताक्लीत्वे इति प्रानः॥ १०२॥

पिशाचमुखधौरेयं सच्छन्नकवचं रथं। युधि कद्रुयवंशीमं वभञ्ज ध्वजशालिनं॥ १०३॥

एते प्रकीर्णकाः।

पिशा। युधि सङ्ग्रामे पक्षी रथं बभञ्ज भग्नवान् तस्य पुष्पका ज०म०
दन्यत्वात् तथाहि कद्रथवत् कुत्सितरथमिव रथवदयोश्चेति
कदादेशः धुरं वहन्ति धौरेयाश्वाः धुरो यड्ढञौ पिशाच
स्येव मुखं येषान्ते धौरेयायत्र रथे तत्पिशाचमुखधौरेयं सच्छो
भनं शस्त्रकवचञ्च यस्मिन् तद्भीमभयानकन्तथा धुर्य्यत्वात् ध्वज
शालिनं ध्वजवन्तं शालिन्शब्दः किन्प्रत्ययान्तस्तदन्तमाह अन्य
स्त्वाह ध्वजेन शालितुं श्लाघयितुं शीलमस्येति णिनिः अनेकार्थ
त्वाद्धातूनामिति। एते प्रकीर्णकाः।॥ १०२॥

पिशाचेत्यादि। जटायुः युधि संग्रामे रावणस्य रथं बभञ्ज भ०
कद्रथवत् कुत्सितरथमिव कत्कचिरथवदिति कुशब्दस्य क
दादेशः कीदृशः पिशाचस्येव मुखं येषां तेऽश्वाधौरेयायत्र
धुरं वहतीत्यर्थे ढचेकादिति ण्येयः सत् शोभनं विद्यमानं वा
छत्रं कवचं वा यस्मिन् छत्रकवचाभ्यां सह रथं बभञ्जेत्यर्थोवा
भीमं भयानकं ध्वजशालिनं ध्वजयुक्तं शालिन्शब्दस्तद्वत्तायां
अस्त्यर्थे शालिन् प्रत्ययइति वृद्धाः ध्वजेन शलते शोभते शलादि
त्वाणिन् धातूनामनेकार्थत्वात् शालिरच दीप्त्यर्थइति केचित्
ध्वजेन शाडयितुं शीलं यस्येति उभयोरैक्यमिति स्मरणात् शाडृ
श्लाघायामित्यस्य रूपमित्यपरे शलहुकक्षपइत्यस्मात् कृयात्
कथनेइत्यस्माद्वा ञेणिनिति केचित्। इति प्रकीर्णकाः॥ १०२॥

## अतःपरं आमधिकारः ।

संत्रासयाञ्चकारारिं सुरान् पिप्राय पश्यतः। संत्याजयाञ्चकाराथ सीतां विंशतिबाहुना ॥ १०४ ॥

ज॰ इतःप्रभृत्याममधिकृत्याह सन्त्रा। अथैतस्मिन्युद्धप्रस्तावे स पक्षी सीतां विंशतिबाहुना रावणेन त्याजयाञ्चकार त्याजितवान् गत्यादिषु त्यजेरसङ्ग्रहात् तृतीयैवं भवति कस्मात्त्याजितवानित्याह सन्त्रासयाञ्चकारारिं यस्मादरिं रावणन्त्रासितवान् अकर्म्मकत्वात् त्रासेर्ण्यन्तावस्थायामरेः कर्म्मत्वम् आभ्यां हेतुमण्ण्यन्ताभ्याम् कास्प्रत्ययादित्यादिना आम् आमोऽमित्वमव्ययत्वात् आमइति लेर्लुक् अयामन्तेत्यादिना अयादेशः आमकारान्तस्य कृत्संज्ञायां प्रातिपदिकत्वे प्रथमैकवचनम् तस्यायादिति लुक् स्वरादिपु आमआमिति पठितत्वादव्ययत्वम् मन्तस्यानभिव्यक्तपदार्थत्वात् कृञ्चानुप्रयुज्यतइत्यादिना लिट्परस्य कृञोऽनुप्रयोगः कर्त्रभिप्रायाभावाभावेऽनुप्रयोगे तङ् न भवति सुरांश्च पश्यतोयुद्धञ्जटायुः पिप्राय प्रीणितवान् शत्रुत्रासनं सीतात्याजनञ्च देवानाम्प्रीतेः कारणम् ॥ १०४ ॥

भ॰ अथामधिकारः। संत्रेत्यादि स पक्षी अरिं रावणं सम्यक् त्रासयाञ्चकार अतएव पश्यतोयुद्धमवलोकयतः सुरान् देवान् पिप्राय प्रीणितवान् अथ त्रासानन्तरं विंशतिबाहुना रावणेन सीतां संत्याजयाञ्चकार त्यजेर्णौऽणौञ्जेरित्यस्य विषयाभावात् प्रयोज्यकर्त्तरि तृतीया त्यजेरकर्म्मकत्वात् प्रयोज्यकर्त्तुः कर्म्मत्वं उभयत्र प्रत्ययान्तत्वात् णिजादीत्वाम् भस्कृञ्चामइति कृञो

ऽनुप्रयोगः मोर्मुरित्यनुस्वारः अपेअमनोरिति अः अत्र विरा मस्योकारात् अनुस्वारस्य वर्गान्तो वा भवतीति कालापाः पिप्रा येति अनेकाचधातोराम् नानेकाचइत्युपन्यस्तं विप्रतिवाऊना इति साभिप्रायपदेन द्रावणस्य बाधाधिक्यं जटायोर्वीर्य्याधिक्य च सूचितं ॥ १०४ ॥

अप्तीतो रावणः कासाञ्चक्रे शस्त्रैर्निराकुलः। भूय स्तं वेभिदाञ्चक्रे नखतुण्डायुधः खगः ॥ १०५ ॥

अमी। अधीतः परित्यक्तसीतो रावणः आकाशस्थः कासाञ्चक्रे कुत्सितमभिहितवान् एह्येहीति विहगाधिपेति कासृशब्दकुत्सा यामित्यनुदात्तेत्कासित्यादिना आम् शस्त्रैः इत्थम्भूते तृतीया निराकुलः पूर्व्वमाकुलमिः सीताग्रहणे व्याकुलत्वात् भूयः पुनरपि खगः पक्षी उपप्रकरणे अन्येष्वपि दृश्यत इति वचनात् गमेर्डः तन्नि यावरं वेभिदाञ्चक्रे अत्यर्थभिन्नवान् वेभिद्यतेर्यङन्तादाम् नख तुण्डान्येवायुधानि यस्य ॥ १०५ ॥ ज०म०

अप्तीत्यादि। अप्तीतस्यक्तसीतो रावणः आकुलः सन् शस्त्रैः कासाञ्चक्रे शुशुभे कासृशब्दे धातूनामनेकार्थत्वात् अत्र दीप्त्यर्थः दीप्त्यर्थोऽपि इन्त्यान्तकासृधातुरस्तीति केचित् यद्वा पक्षिणं प्रति एहि एहि खगाधम याह्यसीत्यादि कुत्सितशब्दं कृतवान् अस्मिन् पक्षे शस्त्रैरिति विशेषणे तृतीया दरिद्राकासका सेति पक्षे आम् पूर्व्वं सीताग्रहणे व्याकुलः सम्प्रत्यनाकुलः भूयः पुनरपि खगः पक्षी तं रावणं वेभिदाञ्चक्रे अत्यर्थं भिन्नवान् स म०

क्रीडन्त: सततुपञ्चप्रहरणः भिद्रेर्मूचस्ख्चप्रूशाटेत्यादिना यङ् प्रत्ययान्तत्वात् भ्जिआदीत्यादिना आम् यङोलुक् यङ्लुक्यलोपे परेणगुणी इति निषेधात् न गुणः भ्जिआदीत्यादौ आमिति विषये सप्तमी तेन यङ्लुकि परस्मैपदविषये ऽनुभयपदित्वात् अत्रा त्मनेपदवदनुप्रयोगः खे गच्छतीति इनजमादिति डः॥ १०५॥

हन्तुं क्रोधवशादीहाञ्चक्राते तौ परस्परं। न वा पलायाञ्चक्रे विईयाञ्चक्रे न राक्षसः॥ १०६॥

ज०म० हन्तुम्। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्पर मन्योन्यं हन्तुमीहाञ्चक्राते चेष्टाञ्चक्रतवन्तौ इजादेरित्यादिना आम् विः पक्षी जनिघसिभ्यामित्यधिकृत्य वेञोडिश्चेत्यौणादिक इक् नवा नैव वाशब्द एवार्थे पलायाञ्चक्रे पलायितः उपसर्ग स्यायताविति लत्वम् राक्षसस्य न दयाञ्चक्रे न दयते स्म पक्षि णमुक्त्वाहं कथं व्यापादयामीति उभयत्रापि दयायासश्चेत्याम् ॥ १०६॥

भ० हन्तुमित्यादि। तौ पक्षिरावणौ क्रोधवशात् क्रोधाधीनतया परस्परमन्योन्यं हन्तुमीहाञ्चक्राते ईह चेष्टे परस्परं व्यतिलुन क्षीत्युदाहरता व्यतीहारे परस्परशब्दोमनीषादित्वान्निपा तितइति सूचितं विः पक्षी न पलायते स्म राक्षसोऽपि हन्तुं न दयां कृतवान् सर्व्वत्र भ्जिआदीत्याम् पलायाञ्चक्रइति परापूर्व्वस्या यधातोरूपं रेफस्य लत्वं मनीषादित्वात् मांमाङ्मङ् नह्निनान वाइत्येते प्रतिषेधार्थाः एवार्थे अत्र वाशब्दइत्यन्ये॥ १०६॥

उपासाञ्चक्रिरे द्रष्टुं देवगन्धर्व्वकिन्नराः। छलेन पक्षौ लोलूयाञ्चक्रे क्रव्यात् पतत्त्रिणः॥१०७॥

उपा। देवगन्धर्व्वकिन्नराद्रष्टुं युद्धमिच्छामइति उपासाञ्चक्रिरे उपगताः पूर्व्ववदाम् क्रव्यात् रावणः क्रव्यम्मांसमत्तीति क्रव्यात् अदोऽनन्नइति विट् पतत्त्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं लूनवान् यङ्प्रत्ययान्तत्वादाम् छलेन मायया प्रसह्य जेतुम् अशक्यतइति भयेनेति पाठान्तरम्॥१०७॥ ज०म०

उपेत्यादि। देवागन्धर्व्वाः किन्नराश्च द्रष्टुं अर्थात् युद्धं उपासाञ्चक्रिरे उपगताः आसङ्उपवेशे व्विजादीत्याम् दीव्यतीति देवः पचादित्वादच् गानं धर्म्मोऽस्येति गन्धर्व्वा मनीषादिः नराकृतित्वात् कुत्सितोनरः किन्नरः ईषदर्थे किंशब्दइत्यन्ये क्रव्याद्रावणः छलेन कपटेन पतत्त्रिणः पक्षिणः पक्षौ लोलूयाञ्चक्रे अत्यर्थं चिच्छेद त्यान्तत्वादाम् क्रव्यं मांसमत्तीति क्विप् ॥१०७॥ भ०

प्रलुठितमवनौ विलोक्य कृत्तं दशवदनः खचरोत्तमं प्रहृष्यन्। रथवरमधिरुह्य भीमधुर्य्यं स्वपुरमगात् परिगृह्य रामकान्तां॥१०८॥

इति भट्टिकाव्ये पञ्चमः सर्गः॥

प्रलुठितमित्यादि। खचराः पक्षिणः खे चरन्तीति अधिकरणे ज०म०

वरेष्ठः तेषामुत्तमं जटायुं छत्तं छिन्नं लूनपक्षत्वात् अवनौ भुवि प्रलुठितं विलोक्य अहृष्यन् हर्षं प्राप्नुवन् निष्कम्पोविघ्नकारीति दशाननोरथवरं स्मरणात् प्राप्तं पुष्पकाख्यमारुह्य भीमधुर्य्यं रामकान्तां सीतां तथैव परिगृह्य स्वपुरमगात् गतवान्॥ १०८॥

इति जयमंगलाख्यायां पंचमः सर्गः॥

भ॰ विलुठितमित्यादि। छत्तं छिन्नं लूनपक्षत्वात् अवनौ भूमौ विलुठितं पतितं खचरोत्तमं जटायुं विलोक्य अहृष्यन् हृष्टाभवन् रावणोरथवरं अधिरुह्य रामकान्तां सीतां परिगृह्य स्वपुरं लङ्कां अगात् गतः रथानां वरः श्रेष्ठः पुष्पकाख्यः स्मरणादुपागतः तं कीदृशं भीमाधूर्य्याश्वायत्र धुरं वहतीति ढघेकाविति यः॥ १०८॥

इति गौराङ्गमल्लिकात्मजश्रीभरतमल्लिकविरचितायां मुग्धबोधिन्यां भट्टिटीकायां सीताहरणोनाम मिश्रकः पञ्चमः सर्गः॥

तोपाञ्चकार कामाग्निर्दशवक्तमहर्न्निशं। विदाञ्चकार वैदेहीं रामादन्यनिरुत्सुकां॥ १॥

ज॰म॰ अत्राधिकारस्यापरिसमाप्तत्वात्तमेव विवृत्याह॥ तोषाञ्चकारेत्यादि अथ शब्दोवक्ष्यमाणद्वितीयश्लोके यः सोऽत्र द्रष्टव्यः अथ तस्मिन् सीतापरिग्रहे जाते कामाग्निः कामोऽग्निरिव दशवक्तं दशाननमोषाञ्चकार ददाह उषदाहे उषविदेत्याम् अहर्निशं अहश्च निशा च सर्व्वोद्वन्दोविभाषैकवद्भवतीत्येकवद्भावादत्यन्तसंयोगे द्वितीया अह्नोनकारस्य रोऽसुपीति रत्वं कस्माद्दाह

इत्याह रावणो वैदेहीमन्यनिरुत्सुकां रामादन्यस्मिन् सर्व्वच नि रभिलाषां विदाञ्चकार अगुणत्वं विहिंसयेति विदेरगुणत्वात् गुणाभावः॥ १॥

ओषामित्यादि। अत्रापि स एवाधिकारः अपरिसमाप्तत्वात् भ० कामोऽग्निरिव दशवक्त्रं रावणं अहर्निशं ओषाञ्चकार उषदाहे दरिद्राकासकासेति पक्षे आम् अहश्च निशा च इति समाहार द्वन्द्वः सदाख्यादीति द्वौ दशवक्त्रपदन्यासेन विंशत्या नेत्रैरेकदैव सीतासौन्दर्य्यातिशयविलोकनात् कामपीडानिर्भरत्वं द्योत्यते वैदेहीं रामादन्यस्मिन् सर्व्वच निरुत्सुकां निरभिलाषां विदाञ्च कार ज्ञातवान् काम्याच्यामिति वेत्तेर्ङाम् क्ङित्वान्न गुणः॥ १॥

प्रजागराञ्चकारारेरीहासु निशमादरात्। प्रविभया ञ्चकारासौ काकुत्स्थादभिशङ्कितः॥ २॥

प्रजागराञ्चकारेत्यादि। अरे रामस्य ईहासु चेष्टासु गुरोश्च ज०भ० इत्यकारः आदरादादरेण प्रजागराञ्चकार जागरितवान् शत्रुचिकीर्षितज्ञानपरोऽभूदित्यर्थः पूर्व्ववदाम् अनिशमिति नि शाक्रियाविच्छेदोनास्ति यस्मिन् प्रजागरणे इति निशेति क्रियाविच्छे दोपलक्षणं प्रायेण हि निशायामपि क्रियाणां प्रवर्त्तनं किमिति जागरितवानित्याह काकुत्स्थादसौ प्रविभयाञ्चकार प्रभीतवान् भीह्रीत्यादिनाम् श्लुवत् कार्य्ये धातोर्गुणायादेशौ अभिशङ्कितः किमियं करिष्यतीति॥ २॥

भ० प्रजेत्यादि। असौ रावणोऽरे रामस्य ईहासु चेष्टितेषु अनिशं निरन्तरं प्रजागराञ्चकार सावधानो बभूव आदरात् आदरं कृत्वा यवर्थे पञ्चमी हेतौ वा काकुत्स्थात् प्रविभयाञ्चकार अति भीतः ञिभीलिभीत्यां पञ्चाम्वाभीत्रीति पञ्चाम् श्लावृले ह्लादीरे दिः पुर्ण्यूकुदति गुणः स्वकृञ्चामदति कृञनुप्रयोगः अतिशङ्कितः किमयं करिष्यतीति नानाविकल्पव्याकुलः॥२॥

न जिह्रयाञ्चकाराथ सीतामभ्यर्थ्य तर्ज्जितः। नाप्यूर्ज्जां बिभरामास वैदेह्यां प्रसितोभृशं॥३॥

ज०म० न जिह्रयाञ्चकारेत्यादि। सीतामभ्यर्थ्य याचित्वा न जिह्रयाञ्चकार न लज्जितः तर्ज्जितः भर्त्सितोऽपि तयैवेत्यर्थात् नाप्यूर्ज्जां बलं बिभरामास धारितवान् कृञिति प्रत्याहारग्रहणाद्भृञोऽनुप्रयोगः ह्रीधातोर्गुणायादेशौ डुभृञ्धारणपोषणयोः उभयत्रापि पूर्ववदाम् सुबन्त कथं न धारितवान् इत्याह वैदेह्यां प्रसितः प्रसक्तः भृशमत्यर्थं॥३॥

भ० नजीत्यादि। अथ सीतायाअन्यनिरत्सुकलज्जागनकारं सीतामभ्यर्थ्य बहुधा अनुनीय तया तर्जितोभर्त्सितोऽपि रावणो न जिह्रयाञ्चकार ह्रीलिंलज्जे ऊर्ज्जां बलमपि न बिभरामास भृञिभृतिपुष्ट्योः उभयत्र पूर्ववत्पञ्चाम् पृभ्रादेर्ङिः श्लोरेदति भृधातोः श्लोर्ङिः आमोऽनुप्रयोगअस्तेर्भूर्न भवतीति परः क्षमते भस्त्रम्यामदत्यत्र प्रत्ययार्थे इत्यस्य यदर्थं नलस्तेः यद्वा व्याकरणा

ारसम्बादात् अस्तेरेवानुप्रयोगः अतभादेशस्यास्तेरनुप्रयोग स्य वैयर्थ्ये भुवोऽनुप्रयोगस्तोक्तत्वात् तेनामोऽनुप्रयोगे भूररेद्व्त्य स्य न विषयइति बोध्यं ऊर्ज्जः सेमृक्ताात्वरोरिति अप्रत्ययः स्त्री त्वञ्च ऊर्ज्जमिति पाठे क्विप् कुतइत्याह वैदेह्या प्रषितश्चासक्तः तच्चिन्तया बलक्षयात् ॥ ३ ॥

विदांकुर्व्वन्तु रामस्य वृत्तमित्यवदत् स्वकान्। रक्षांसि रक्षितुं सीतामाशिषञ्च प्रयत्नवान् ॥ ४ ॥

विदाङ्कुर्व्वन्त्वित्यादि। स्वकानात्मीयान् शुकसारणादीन् अव जं० म० दइुक्तवान् किमित्याह रामस्य वृत्तमनुष्ठितं किन्तस्येहा गन्तुमु द्यमोऽस्ति न वेति विदाङ्कुर्व्वन्तु विदांकुर्व्वन्त्वित्यन्यतरस्यामिति निपातितं सीतां रक्षितुं रक्षांसि आशिषदादिष्टवान् शासेः मर्त्ती त्यङ् शासइदङ्हलोरिति शासेरुपधायाइत्वं शासिवसीति षत्वं प्रयत्नवान् प्रयत्नपरः। आमधिकारोगतः ॥ ४ ॥

विदामित्यादि। रामस्य वृत्तं चेष्टितं भवन्तोविदांकुर्व्वन्तु भ० जानन्तु इति स्वकान् आत्मीयान् दूतान् रावणोऽवदत् कान्ता चांग्यान्तुकन्विति वेत्तेर्डाम् ग्यां क्कनुप्रयोगएव प्रयत्नवान् सन् सीतां रक्षितुं रक्षांसि आशिषत् आदिष्टवान् चकारः समुच्चये शासुअनुशिष्टौ शासुशिषुदिति ङः शासुङिङ्कुमङ्गे इति इत्वं शिसातक्तइति षत्वं। इत्यामधिकारः ॥ ४ ॥

अथ प्रकीर्णकाः।

रामोऽपि हतमारीचो निवर्त्स्यन् खरनादिनः। क्रोष्टून् समशृणोत् क्रूरान् रसतोऽशुभशंसिनः॥ ५॥

जं०म० अथ प्रकीर्णश्लोकानाह। रामइत्यादि। हतमारीचो रामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् वृतादिलचणइटि प्राप्ते न वृद्भ्यइतीण् निषेधः क्रोष्टून् शृगालान् रसतः शब्दायमानान् अशृणोत् संश्रुतवान् सकर्म्मकत्वात् समोगमीत्यात्मनेपदं न भवति लङि रूपं क्रूरान् भीषणान् यतः खरनादिनः खरवन्नदन्ति कर्त्तरीति णिनिः अशुभशंसिनः अनिष्टसूचनशीलान्॥ ५॥

भ० अथ प्रकीर्णकाः। रामइत्यादि। हतोमारीचोयेन सरामोऽपि निवर्त्स्यन् प्रत्यागमिष्यन् रसतः शब्दं कुर्व्वतः क्रोष्टून् शृगालान् समशृणोत् क्रोष्टूनां शब्दं शृणोतीत्यर्थः रसतइति तद्विशेषणात् तथाचोक्तं सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति यद्यपि शब्दएव श्रूयते नतु शृगालः तथापि शृगालस्यायं शब्दइति ज्ञाने शृगालोऽपि विषयइति तस्यापि ज्ञानकर्म्मत्वमविवादं औपचारिकोऽयं प्रयोगइत्यन्ये अनेकार्थत्वात् शृणोतिरिह दर्शनार्थइति केचित् वृद्भ्योनेम्यस्यनोरिति वृतेरिम्निषेधः पे तत्तएव पं खरनादिनौगर्द्दभवत् नदतः ग्रहादित्वात् णिन् कर्त्तर्य्युपमानउपपदे णिनिति परः अतएवाशुभशंसिनः अशुभं शंसितुं सूचयितुं शीलं येषामिति ताच्छील्ये णिन्निति परः खमते ग्रहादित्वात् अतएव क्रूरान् भयदान्। अपि सम्भावनाप्रश्नशब्दगर्हासमुच्चये। तथा युक्तपदार्थेषु कामचारक्रियासु चेति विश्वः॥ ५॥

आशङ्कमानोवैदेहीं खादितां निहतां मृतां। सश
त्रुघ्नस्य सोदर्य्यं दूरादायान्तमैक्षत ॥ ६ ॥

आशङ्कमानइत्यादि। तथाविधाशुभश्रवणादाशङ्कमानोवि जं०म०
तर्कयन् वैदेहीं किं खादितां निशाचरादिना ततः निहतां त्यक्त
प्राणां अहो स्वयमेवायुःक्षयान्मृतां वा सरामः सशत्रुघ्नस्य सोदर्य्यं
भ्रातरं सोदराद्यः आयान्तमागच्छन्तमारादैक्षत दृष्टवान् ईक्षे
र्लुङि ॥ ६ ॥

आशङ्केत्यादि। अमङ्गलश्रवणात् वैदेहीं राक्षसादिभिर्भ भ०
क्षितां शृगालादिभिर्वा निहतां स्वयमेवायुःक्षयात् मृतां वा
आशङ्कमानस्तर्कयन् रामः सशत्रुघ्नस्य सोदर्य्यं लक्ष्मणं आयान्तं
आराद्दूरादैक्षत ईक्षेर्लुङ् समानउदरे स्थितः सोदर्य्यः ढघेका
दिति यः रूपनामगोत्रेत्यादिना पक्षे समानस्य सः कनिष्ठभ्रातृ
सम्बन्धोक्तत्वेन लक्ष्मणस्यापकर्षः सूचितः स्त्रीवचनेन त्यक्तधैर्य्य
त्वात् आराद्दूरसमीपयोः ॥ ६ ॥

सीतां सौमित्रिणा त्यक्तां सध्रीचीं त्रस्तुमेकिकां।
विज्ञायामंस्त काकुत्स्थः क्षये क्षेमं सुदुर्लभं ॥ ७ ॥

एते प्रकीर्णकाः।

सीतामित्यादि। सौमित्रेरेकाकिनोदृष्टत्वाद्वियतमनेन जं०म०
त्यक्तेति तां विज्ञाय ज्ञात्वा काकुत्स्थोरामः क्षये गृहे क्षीयतेऽस्मि
न्निति अधिकरणेऽप् क्षेमं कल्याणं सुदुर्लभं सुदुःखेन लभ्यतइति
ईषदित्यादिना खल् अमंस्त ज्ञातवान् कथं क्षये क्षेमं सुदुर्लभ

जिति आह सध्रीचीं सहचारिणीं न कचिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति ऋत्विगादिना क्विन् सहस्य सध्रिरित्यञ्चतौ वप्रत्यये सहस्य सध्यादेशः अञ्चतेश्चोपसंख्यानमिति ङीप् अचइत्यकारलोपः चाविति दीर्घः कुतः चलं चलनशीलां क्रियाशब्दत्वादूङ् न भवति एकिकां लक्षणेन त्यक्तत्वात् एकादाकिनिच्चासहाये इति चकारात्कन् प्रत्ययस्यादितीत्वं। एते प्रकीर्णकाः॥ ७॥

भ० सीतामित्यादि। सौमित्रिणा त्यक्तां अतएव एकिकां सीतां विज्ञाय काकुत्स्थः क्षये निवासे क्षेमं कुशलं सुदुर्लभं अमंस्त एकाकिनोलक्ष्मणस्यागमनात् तद्योगशानेऽपि कुतः क्षेमं सुदुर्लभमित्याह चलुमिति तां कीदृशीं चलं त्रासशीलां चिपत्रसेति क्नुः तथा च त्रासा मृतेति सम्भाव्यते अतएव सध्रीचीं सदा सहचरीं न कचिदेकाकिनीं तिष्ठन्तीं सहाञ्चतीति क्विपिसहसन्त्रिरः सध्रिसमितिरीति सहस्य सध्रिः अत्राञ्चतेर्गत्यर्थत्वात् नेदित्पूजार्थाञ्चोरित्यस्य विषयाभावात् अनिदितां हल इत्युपधालोपे अचःक्विन्नन्ताद् इति ईप् अचोऽल्लोपेऽर्थस्येति अकारलोपे निमित्ताभावात् इत्व निवृत्तौ इकारस्य दीर्घः एकादाकिनच्चासहाये इति परः स्मन्ते विकारयंचेत्यादिना असहाये स्वार्थे वा कः स्त्रियामाप् काश्यगामीरके इति इत्वं क्षीयतेऽस्मिन्निति अन् क्षिनिवासगत्योः क्षये ऽपचयकाले इत्यर्थोवा। क्षयोरोगान्तरे वेश्मकल्पान्तापचयेष्वपीति विश्वः। एते प्रकीर्णकाः॥ ७॥

अतःपरं दुहादिः।

सोऽपृच्छल्लक्ष्मणं सीतां याचमानः शिवं सुरान्।
रामं यथास्थितं सर्व्वं भ्राता ब्रूतेस्म विक्लवः॥ ८॥

अतोद्विकर्म्माधिकारः। सोऽपृच्छदित्यादि अकथितं चेत्यत्र दुह्याचीत्यादिश्लोकस्थान् धातून् प्रयुङ्क्ते कविः तत्र रामोऽपृच्छत् सीतामिति प्रधानं कर्म्म लक्ष्मणमित्यकथितं कर्म्म याचमानः प्रार्थयमानः शिवं कल्याणं अर्थात्सीतायाः शिवं प्रधानं कर्म्म सुरान् देवान् इत्यकथितं कर्म्म भ्राता लक्ष्मणः सर्व्वं यथावत् स्थितं ब्रूतेस्म उक्तवान् सर्व्वमिति प्रधानं कर्म्म राममित्यकथितं॥ ८॥ ज०म०

अथ द्विकर्म्मकप्रकरणं। सइत्यादि। सरामः सीतां लक्ष्मणं अपृच्छत् दुहादेः कर्म्म हेतुः कर्म्मेति परः स्वमते याच्ञार्थत्वादीनां स्वभावाद्विकर्म्मकत्वमुक्तं कर्म्मद्वयन्तु तात्पर्य्यलभ्यमेव सीतामिति प्रधानं कर्म्म लक्ष्मणस्य हेतुत्वमर्थाल्लभ्यत एव तेनात्र न लक्ष्मणमिति कीदृशो रामः सुरान् शिवं याचमानः दातुं प्रेरयन् अर्थात् सीतायाः शिवमिति प्रधानं कर्म्म भ्राता लक्ष्मणो विक्लवो विह्वलः सन् सर्व्वं यथास्थितं सीताप्रेरणादिकं रामं उक्तवान् वचनेन बोधितवान् राममिति हेतुकर्म्म॥ ८॥ भ०

सन्दृश्य शरणं शून्यं भिक्षमाणो वनं प्रियां। प्राणाम् दुहन्निवात्मानं शोकं चित्तमवारुधत्॥ ९॥

ज०म० संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य दृष्ट्वा शोकं चित्तमवारुधत् चित्तं शोकं प्रावेशयत् कीदृशः प्रियां जानकीं वनं भिक्षमाणः प्राणान् दुहन्निव त्यजन्निव प्राणानिति प्रधानं कर्म आत्मानमित्यकथितं आत्मनः प्राणान् त्यजन्निव ॥ ९ ॥

भ० संदृश्येत्यादि। रामः शरणं गृहं शून्यं संदृश्य शोकं चित्तमवारुधत् शोकमन्तः स्थापयित्वा चित्तमपावृणोत् शोकं प्रावेशयदिति वार्थः रुधिरौञ् आवृतौ द्विरित्वात् शासुलिदुदिति पक्षे ङः कीदृशः प्रियां सीतां वनं भिक्षमाणः दातुं प्रेरयन् प्रियामिति प्रधानं कर्म आत्मानं प्राणान् दुहन्निव मोचयन्निव आत्मानमिति कर्म हेतुः ॥ ९ ॥

गता स्यादवचिन्वाना कुसुमान्याश्रमद्रुमान्। आं यत्र तापसान् धर्मं सुतीक्ष्णः शास्ति तत्र सा ॥ १० ॥

इति दुहादिर्द्विकर्म्मकः।

ज०म० गतेत्यादि। यत्र यस्मिंस्तपोवने सुतीक्ष्णोनाम ऋषिः धर्मं शास्ति शिक्षयति धर्ममिति प्रधानं कर्म तापसानित्यकथितं तत्र तपोवने गता स्यात् सम्भावने लिङ् आकारोनिपातः स्मरणे किं कुर्व्वती कुसुमान्यवचिन्वाना कुसुमानीति प्रधानं कर्म आश्रमद्रुमानित्यकथितं अवचिन्वानेति चिनोतेः कर्त्रभिप्राये तङ्। दुहादिदशकोगतः। ॥ १० ॥

भ० गतेत्यादि। वक्ष्येवं विललाप सदृति वक्ष्यमाणश्लोकेनान्वयः यत्र सुतीक्ष्णोमुनिस्तापसान् धर्मं शास्ति तत्र सा गता स्यात् सम्भावने लिङ् लोपोऽव्ययोरिति अस्तेरकारलोपः किं कुर्व्वती

आश्रमद्रुमान् कुसुमानि अवचिन्वाना द्रुमान् विघट्टयन्तो पुष्पा ण्यादाना आ इत्यव्ययशब्दः स्मरणार्थे प्रयुज्यते यदुक्तं मर्य्यादाद्यामभिविधौ क्रियायोगेषदर्थयोः। यश्राकारः सङ्क्तिप्रोक्तो वाक्यस्मरणयोरङ्किदिति। आमिति क्वचित् पाठः सोऽपि स्मरणार्थ एव। इति द्विकर्म्मकाः॥ १०॥

## अतः परं प्रकीर्णकाः।

आः कष्टं बत ही चित्रं हूं मातर्दैवतानि धिक्।
हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः॥ ११॥

प्रकीर्णकानाह। आः कष्टमित्यादि। शोकेनाक्रान्तमना विलप जं॰म॰ न्नाह आः पीडायां पितृवियोगपीडितः आः इत्याह अस्मद्वियोगेन पिता प्राणांस्त्यक्तवानित्यभिप्रायःकष्टमित्याह कष्टं कृच्छ्रं भर्तृमरणादस्मद्वियोगाच्च मातुः कावस्थेत्यभिप्रायेणाह बत इति बत शब्दः खेदे सौमित्रिरपि तया सीतया अन्यादृशः सम्भावितइति विस्मितोऽहीत्याह हिशब्दो विस्मये यदि नाम स्त्रिया मूर्खतया तथाभिहितं सौमित्रिणा विदुषा कथं तादृशः शापो दत्तइत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्य्ये यदेवंविधोऽपि स्खलतीति सर्व्वमेव दुर्जातं कैकेयीप्रभवमिति क्रुध्यन् हूं मातरित्याह हूंशब्दः क्रोधे अथवा सर्व्वमेतत् दैवचेष्टितं न ममानुष्ठितमित्यभिप्रायेणाह धिग्दैवतानीति धिक् कुत्सायां अविज्ञाय चक्षुषा प्राणांस्त्यक्तवन्तं पितरं पुनरहं द्रष्टास्मीत्यभिप्रायेणाह हा पितः अत्र द्रष्ट

ब्योऽसीति हा शोके हे सीते क्व गतासीति भूशब्दादप्राणिजातेरि
त्यादिनोङ् उवर्णान्तमात्रस्य विधानादूङ्भीरुः उपसर्जनत्वञ्च
पुनः स्त्रियामूङ् अन्तादिवचेति पूर्व्वं प्रत्ययवत्त्वात् प्रातिपदि
कत्वं अतः सम्बुद्धौ ह्रस्वत्वं विलल।प सएवं कृत्वा वक्कनेकप्रकारं
विलापं कृतवान्॥ ११॥

भ० अथ प्रकीर्णकाः। आदित्यादि। सीतावियोगेन पूर्व्वदुःखस्मर
णात् पितृवियोगपीडितः प्राह आदिति आत् स्यात् कोपपीडयोः
मद्वियोगेन पिता प्राणान् जहावित्यभिप्रायेणाह कष्टमिति कष्टं
कृच्छ्रं पतिमरणान्मद्वियोगाच्च मातुः कावस्था इत्यत आह वतेति
खेदद्योतकोऽयं वतशब्दः लक्ष्मणोऽपि सीतया अन्यथा सम्भावि
तइति विस्मितः प्राह हीति ही विस्मयविषादयोः यद्यपि स्त्रीला
म्बौर्ख्येण तया तथाभिहितं तथापि लक्ष्मणेन तादृशः शापादा
तुमनुचितइत्यभिप्रायेणाह चित्रमिति चित्रमाश्चर्य्यं सर्व्वमिदं
कैकयीप्रभवमिति रोषादाह हूं मातरिति हूंशब्दः क्रोधे भर्त्सने
वा तथाविधायामातुरपीदृशोऽकस्मात् मतिविपर्य्ययोदैवकृतए
वेत्यतआह दैवतानि धिगिति धिक्शब्दोनिन्दाभर्त्सनयोः अविशे
षज्ञत्वादिति भावः पितुर्व्वाक्यादीदृशं दुःखमनुभवन्नहं पित्रा न
ज्ञायते नवा पितृदर्शनेन विना ममैतद्दुःखं व्यपगमिष्यतीत्याह·
हा पितरिति हा विषादशुगर्त्तिषु धिक्समयेत्यादिसूत्रस्य षष्ठ्य.
पवादत्वाभावाच्च तद्विषयः सामान्येन हाशब्दं प्रयुज्य पश्चात् पितृ
सम्बोधनमतोन द्वितीयेति दुर्गः वस्तुतस्तु हाशब्दवाच्यं दुःखं
स्वविषयमेव पितृशब्देन तस्य सम्बन्धाभावः कथं द्वितीयया भवि
तव्यं एतत् सकलदुःखं यत्सङ्गत्या विस्मर्त्तव्यं सापि नास्तीत्याश

येनाह ह सुभ्रु क्वासीति कोपेऽपि भ्रूपारुष्यं नास्तीति सुभ्रुपदस्याभिप्रायः एवं स्मृत्वा सरामोवक्ष्यप्रकारं विलापं कृतवान् शोभने भ्रुवौ यस्याः तस्याः सम्बोधनं सुभ्रूरिति ह्रस्वः ॥ ११ ॥

इहासिष्टाशयिष्टेह सा सखेलमितोऽगमत्। अग्लासीत् संस्मरन्नित्थं मैथिल्याभरताग्रजः ॥ १२ ॥

इहेत्यादि। इह प्रदेशे आसिष्ट उपविष्टा इदमोहः इदम इश् इह अशयिष्ट शयितवती आसेः शीङश्च लुङ् सखेलं सलीलं इतः प्रदेशादगमत् गतवती इत्यमेवंप्रकारं मैथिल्याः स्मरन् अधीगर्थेति कर्म्मणि षष्ठी भरताग्रजोरामोऽग्लासीत् ग्लानिङ्कृतः ग्लायतेर्लुङ् यमरमेति सगिटौ ॥ १२ ॥ ज०भ०

इहेत्यादि। अत्र प्रदेशे सा सीता आसिष्ट शिलासङ्कुउपवेशे अत्राशयिष्ट उभयत्र टीमं इतः सकाशात् सखेलं सलीलं अगमत् खदित्वात् ङः इत्यमेवंप्रकारेण मैथिल्याः संस्मरन् भरताग्रजोरामोऽग्लासीत् यमरमेति इमसनौ मैथिल्यादिति ढेचषीति कर्म्मणि षष्ठी ढघेक्तीत्यादिना शतुर्योगे षष्ठ्याः प्रतिषेधेऽपि नञानिर्द्दिष्टस्यानित्यत्वादौ कर्म्मणि षष्ठी सम्बन्धविवक्षया स्मृत्यर्थयोगे कर्म्मणि वा षष्ठीति परः इह इत्यत्र कुतः ककुहेत्यादिना निपातितं ॥ १२ ॥ भ०

इदं नक्तान्तनं दाम पौष्पमेतद्दिवातनं। शुचेवोदध्य शाखायां प्रग्लायति तया विना ॥ १३ ॥

ज॰म॰ इदमित्यादि। नक्तंतनं निशाभवं इदं दाम पुष्पमाला पुनर्हि ह्यातनं दिवसभवं साथमित्यादिना ट्युट्युलौतुट् च पौष्यं पुष्पाणा मिति तस्येदमित्यण् मुधैव शोकेनैव सम्पदादिः शाखायामुद्बध्य आत्मानमित्यर्थात् प्रग्लायति ग्लानिं गच्छति ग्लायतेः शित्याया देशः शाखायां प्रलम्बमानं ग्लानिं गच्छन्तं वोच्छेदमुत्प्रेचितं कुतः शोकात्तया विना सीताविच्छेदेन॥१३॥

भ॰ इदमित्यादि। इदं नक्तन्तनं रात्रिभवं पौष्यं पुष्पसम्बन्धि दाम माला इदञ्च दिवाभवं दाम तया विना मुधा शोकेन शाखायां उद्बध्य अर्थादात्मानं प्रग्लायति ग्लानिं प्रयाति शाखास्थितां ग्लानमालां वोच्छेदमुत्प्रेचितं इत्येवं विललापेति व्यवहितश्लोकेनान्वयः स्मरन्नेवं मुमोह स्मरति वच्यमाणनवमश्लोकेन वा एवमुत्तरेष्वपि बोध्यं त्यचाद्यचिरेत्यादिना नक्तंदिवाशब्दाभ्यां अथयाभ्यां तनट्॥१३॥

ऐशिष्महि मुदः सुप्तां यां मृताशङ्कया वयं। अकाले दुर्म्मरमहो यज्जीवामस्तया विना॥१४॥

ज॰म॰ ऐश्विष्महीत्यादि। यां वयमैशिष्महि ईशितवन्तः ईशेः सेटो लुङ् मुदः सुप्तां अविच्छिन्ननिद्रत्वात् मृताशङ्कयेति अनिष्टशंकित्वात् प्रियजनहृदयस्य इदानीं तया विना अहो वयं यज्जीवाम तदकाले दुर्म्मरमिति विललाप जीवितस्यापूर्णकाले दुःखेन मरणमिति खल्॥१४॥

ऐक्षीत्यादि। वयं सुभ्रूं यां प्रियां हृता नवेत्याशङ्कया मुहु भ०
र्वारंवारं ऐक्षिष्महि ईक्षिष्यामहि अनिष्टशंसीनि बन्धुहृदया
नीति हृतामशङ्किष्म एतेनानुरागातिशयः सूचितः अहो आश्चर्यं
यत्तया विनापि वयं जीवामस्तदस्मादकाले जीवनस्यापूर्णकाले
दुःखेन म्रियते ईषद्दुःसोरिति भावे खल् ॥ १४ ॥

अक्षेमः परिहासोऽयं परीक्षां मा कृथा मम। मत्तो मान्तर्द्धिथाः सीते मा रंस्था जीवितेन नः॥ १५ ॥

एते प्रकीर्णकाः।

अक्षेम इत्यादि। परिहसनं परिहासः क्रीडा अयमक्षेमो न भ०म०
कल्याणकरः मम परीक्षां किं मामपश्यन् दुःखमस्ति नवेति मा
कृथाः उश्चेति कित्त्वाद्गुणाभावः ह्रस्वादिति सिचो लोपः तस्माद्धे
सीते मान्तर्द्धिथाः अन्तर्हिता मा भूः अन्तर्द्धावित्यपादानसंज्ञायां
पञ्चम्यास्तसिः प्रत्ययोत्तरपदयोश्चेति मदादेशः लुङि स्थाघ्वो
रिच्चेति सिचः कित्त्वमित्त्वञ्च ह्रस्वादिति सिचो लोपः नोऽस्माकं
जीवितेन मा रंस्थाः क्रीडां मा कार्षीः रमेरात्मनेपदित्वात्तङ्।
एते प्रकीर्णकाः ॥ १५ ॥

अक्षेम इत्यादि। कदाचित् परिहासेनान्तर्हिता सा भवेदि भ०
त्याशङ्क्योत्तरमिदं अयमन्तर्द्धानरूपः परिहासोऽक्षेमः अशुभः
तवादर्शनेन मम दुःखमस्ति नवेत्येवं मत्परीक्षां त्वं मा कृथाः
कृञस्थाविदगुकुर्मठीस्वनिमिति सेः कित्त्वान्न गुणः ह्रस्वादिति
सिचो लोपः मत्तः मत्सकाशात् मा अन्तर्द्धिथाः मत्कर्तृकदर्शनाभावे

च्छया व्यवहिता मा भूः धात्रस्यासि स्यादोर्ङिरिति ङिरगुणत्वञ्च पूर्व्ववत्सिलोपः यतोऽग्रायेति यतोऽन्तर्द्धिरदपादानं सर्व्वत्र हेतु माह हे सीते नोऽस्माकं जीवितेन मा रंस्थाः क्रीडां न कुरु तवाद दर्शनेन प्राणायास्यन्तीति भावः। इति प्रकीर्णकाः॥ १५॥

## अतः परं सिजधिकारः।

अहं न्यवधिषं भीमं राक्षसं क्रूरविक्रमं। मा घुक्षः पत्युरात्मानं मा न श्लिक्षः प्रियं प्रिये॥ १६॥

ज०म० सिचं सापवादमधिकृत्याह। अहमित्यादि। यतोऽहं राक्षसं मारीचं क्रूरविक्रमं भीमं भयानकं न्यवधिषं निहतवानस्मि हन्तेर्लुङि चेति वधादेशः अदन्तत्वाद्वृद्ध्यभावः तस्मान्मा घुक्षः न गोपय पत्युरात्मानं अन्तर्द्धावित्यपादानत्वं ख्यत्यात्यरस्येत्युत्वं गुहेः सलदृगुपधादनिटः क्सः होढः भभावकत्वषत्वानि सिपश्च विसर्ज्जनीयः मा न श्लिक्षः मा न परिरप्साः अपितु श्लिष्य मां हे प्रिये श्लिष आलिङ्गने क्सः॥ १६॥

भ० अथ सापवादसिजधिकारः। स्वमते स्वधिकारः। अहमित्यादि। भीमं भीषणमूर्त्तिं क्रूरविक्रममसह्यपराक्रमं राक्षसं मारीचं अहं न्यवधिषं हतवान् हनलोगतौवधे अमि व्यासिः ह नवधष्टीति वधादेशः हमादेःसेमृद्त्यादौ वधवर्ज्जनात् सेमत्व सूचनात् प्रकृत्यन्तरत्वाद्वा इम् पत्युर्भर्त्तः सकाशात् आत्मानं त्वं मा घुक्षः न गोपय गुहञ्‌संवृतौ उदित्वादेमूदिति इमोऽभावपक्षे हसषोऽनिमिजूरुदति सक् होढः झभान्तस्येति घः षढोः कः

क्लिलादिति षः हे प्रिये प्रियं मां मा न श्लिक्षः अपितु अवश्यमेव प्रियमालिङ्गय द्वौ निषेधौ सातिशयं प्रकृतमर्थं गमयतद्दति न्या यात् श्लिषोऽश्लेषे आलिङ्गनेऽर्थे पूर्व्ववत् सक्॥ १६॥

मांस्म द्राचीर्मृषा दोषं भक्तां मां मातिचिक्लिशः। शै लं न्वशिश्रियदा मा नदीं नु प्रत्यदुद्रुवत्॥ १७॥

मास्मेत्यादि। मृषा दोषं व्यलीकं दोषं मा द्राचीः मयीत्य र्थात् स्मोत्तरे लङ्चेति चकारालुङ् सत्द्गुपधेति क्सस्य न दृश इति निषेधः इरितोवेत्यङ्भावे सिच् सृजिदृशोरित्यम् हलन्तल चणा वृद्धिः अश्चेत्यादिना षत्वं यतोऽहं भक्तस्ततोमां भक्तां माति चिक्लिशः नातिक्लेशय क्लिशेर्णन्तात् णिपि णिश्रीत्यादिना चङ्वा णिलोपः द्विर्व्वचनादिः पुनर्व्विकल्पयन्नाह मयि दोषदर्शनात् मत्प्रतिकूलवर्त्तिनी सती शैलं नु पर्व्वतं किमप्यशिश्रियदाश्रिता ततोनदीं प्रत्यदुद्रुवत् प्रतिगतेत्यर्थः नुशब्दोवितर्के चङ्॥ १७॥ ज०म०

मास्मद्दत्यादि। मृषा दोषं मास्म द्राचीः अर्थान्मयि दोषद र्शनाद्वा अन्तर्हितेत्याशङ्क्य इदमुक्तं दृईशोप्रेचे मास्मेन योग्या विति टी सन्निधौ दृशेर्व्वर्ज्जनात् इरित्वात् ङः विकल्पपचे च्यांसिः वद्धोऽकिदिति रत्वं अनिमित्वाद्गवदेति त्रिः शक्राजेति षङ् भक्तां अनुरक्तां मां त्वं मातिचिक्लिशः नातिपीडय क्लिशेर्ज्जिःप्रेरणे ञिश्रीत्यङ्द्वित्वं गुणः ञ्यङुङःख्ः ञेर्लोपः निकटे यदि तिष्ठेत्त दा मद्दचनादागच्छेदित्यतोऽन्यद्विकल्पयन्नाह वामेति मय्यपि दोषदर्शनात् प्रतिकूला सती शैलं किं अशिश्रियत् आश्रिता भ०

उत नद्यौ प्रत्यद्रुद्रुवत् प्रतिगता अभिसेवने द्रुगतौ अनयोरश्चि
श्रुध्योरिति ऋयुवौ गुप्रब्दोवितर्के॥ १७॥

ऐ वाचं देहि धैर्य्यं नस्तव हेतोरसुस्रुवत्। त्वं नो
मतिमिवाधासीर्नष्टा प्राणानिवादधः॥ १८॥

ज०म० ऐवाचमित्यादि। ऐशब्दोनिपातोऽभिमुखीकरणे वर्त्तते वाचं
देहि प्रार्थनायां लोट् घ्वसोरेद्धावित्येत्वं किमितिचेदाह धैर्य्यं
नोऽस्माकं धीरता तव हेतोरसुस्रुवत् गलितं नष्टा अदर्शनं गता
सती त्वंनोऽस्माकं मतिं बुद्धिमधासीरिव बुद्धेरपाटवात् विभाषा
धेटश्व्योरिति यदा न चङ् तदा यमरमेति सगिटौ प्राणानद
धः पीतवती कायस्याचेष्टत्वात् चङि रूपमालोपः॥ १८॥

भ० ऐवाचमित्यादि। ऐ सीते वाचं देहि प्रार्थनायां मी देशब्दोधो
देधेटौ तव हेतोः नोऽस्माकं धैर्य्यं असुस्रुवत् स्रुतं पूर्व्ववत् अङ्
त्वं नोऽस्माकं मतिं बुद्धिं अधासीरिव पीतवतीव बुद्धेरपाटवात्
कार्य्यान्तरासंक्रमाचेतमिचेयं नष्टा अदर्शनं गता सती प्राणानपि
त्वं अदधरव पीतवतीव देहस्य निश्चेष्टत्वात् धेट्पाने पूर्व्वेण
विभाषितोऽङ् एचोमित्या उसेपीत्यालोपः अङोऽभावपक्षे
ध्वांचि: यमरमेति इमवनौ यमसाजञ्मधीमदति बेर्लोपः भूत्वा
पिवदेनदति सेर्लुकि माशि धेमाह्वायामदति पचे तदभावः
नशअदर्शने क्तः मुपूरधेमुर्चानमदति क्षतस नस्य चसुक्तन
लोपोऽणावित्यनेन लोपः अश्रुणजेति चङ् ऐ शब्दोऽयमव्ययो

ऽभिमुखीकरणे आह्वाने वा। एऐशब्दौ तु हेहैवत् स्मृत्यामन्त्रण हूतिष्विति विश्वः॥१८॥

रुदतोऽभिश्वियच्चक्षुरास्यं चेतोस्तवाश्वयीत्। म्रिये ऽहं मां निरास्थश्चेन्मा न वोचश्चिकीर्षितं॥१९॥

रुदतइत्यादि। तवार्थे त्वां पश्यामीति रुदतोमम चक्षुरभिश्वि यत् उच्छूनं आस्यं मुखं चाश्वयीत् विभाषाधेट्श्वयोरिति चङ् सिचौ चङीयङ् ह्यन्तेति न वृद्धिः इट् इटईटीति सिचोलोपः गुणायादेशौ मां निरास्थश्चेद्यदि मम दर्शनं निरस्तवती त्वं तदा म्रियेऽहं म्रियतेर्लुङ्लिङोश्चेति चकाराक्ङित्यात्मनेपदं रिङ्शय गिति रिङ् अतोयत्त्वया चिकीर्षितं कर्त्तुमिष्टं तन्मा न वोचः मा मा भाषिष्ठाः अपितु ब्रूहि अस्यतिवक्तीत्यङ् वचउम्॥१९॥ जं॰म॰

रुदेत्यादि। तवादर्शनाद्रुदतो मम चक्षुरभिश्वियत् उच्छून मतिरोदनात् आस्यमपि अश्वयीत् जिश्वीत्यादिना श्वेर्विभाषि तोऽङ् अङोऽभावपक्षे श्वांसिः नेमेकाजादित्यादौ अश्विजागुरि त्युक्तेर्गुणः त्वं चेत् यदि मां निरास्थः अदर्शनेन निरस्तवती तदा अहं म्रिये भविष्यत्सामीप्ये वर्त्तमानत्वविवक्षा मृङ्प्राणत्यागे तु दादित्वात् शः मृङ्ष्टीक्षोमं च्वङि शयग्लीपे अभ्योरितीयः असु क्षेपणे वक्तव्यस्येति ङः वच्यस्श्विपतामिति अस्थः चिकीर्षितं कर्त्तु मिष्टं त्वं मा न वोचः अवश्यं ब्रूहि वचेर्भुञ्जोवा वचोऽरेदृति वचादेशः पूर्ववत् ङः वोचादेशश्च॥१९॥ भ॰

लक्ष्मणाचक्ष्व यद्याख्यत्सा किञ्चित्कोपकारणं।
दोषे प्रतिसमाधानमज्ञाते क्रियतां कथं॥ २०॥

ज०म० लक्ष्मणेत्यादि। हे लक्ष्मण यदि सा किञ्चित्कोपकारणमाख्य दुक्तवती इदन्तेनाप्रियमाचरितं पूर्व्ववदङ् तदाचक्ष्व कथय अज्ञाते दोषे प्रतिसमाधानं कथं क्रियतां नैवेति भावकर्म्मणि लोट् रिङ्कित्यादिना रिङ्॥ २०॥

भ० लक्ष्मेत्यादि। हे लक्ष्मण यदि सा सीता किञ्चित्कोपकारणं आख्यत् कथितवती तदा त्वं आचक्ष्व कथय चचिङः प्रार्थनायां गीस्व अदादित्वात अपोलुक् स्थादेःसोलोपइति ककारलोपः षढोःकःसे क्षिलादिति षः ख्याप्रकथने चचिङः ख्याञ् वा वक्तय स्येति ङः उस्येचीत्यालोपः अज्ञाते दोषे प्रतिसमाधानं तदपमा र्ज्जनार्थं कर्म्म कथं मया क्रियतां कर्त्तव्यं रतनोर्यगिणाविति यकि कृते घौऽज्य्यरइति सामान्यविधिं वाधित्वा ऋद्विःअयग्ढी पइति विशेषविधिः रित्वेऽपि पूर्व्ववाधितत्वात् विकृतत्वाद्वा न तेन दीर्घः किम्वा यङ्ग्यक्येचर्द्दीरित्यत्र दीर्घकरणेन ऋद्विःअयग्ढी पइत्यनेन कृतरेर्दीर्घोनस्यादिति ज्ञापितं यङ्ग्यक्ये घौऽज्य्य रइत्यनेन चौ अस्वावीर्घावित्यनेन चेष्टसिद्धेः॥ २०॥

इह सा व्यलिपद्गन्धैः स्नान्तीहाभ्यषिचज्जलैः। इहा ह्वं द्रष्टुमाक्रं तां स्मरन्नेवं मुमोह सः॥ २१॥

इहेत्यादि। इह प्रदेशे सा सीता गन्धैर्व्यलिपत्समालिप्तवती जं०म० मामात्मानञ्चेत्यर्थात् इह स्नान्ती क्रीडापूर्व्वकमभ्यषिञ्चत् हस्त यन्त्रमुक्तसलिलेन मामभिमुखं सिक्तवतीत्यर्थः षलं इह द्रष्टुं तामाह्वं आह्वतवान् लिपिसिचिह्वश्चेति श्चेरङ् एवं स्मरन् मुमोह मोहं गतवान्॥ २१॥

इहेत्यादि। इह स्थाने सा सीता गन्धैर्व्यलिपत् मामात्मानञ्चे भ० त्यर्थात् गन्धयन्तीति गन्धाश्चन्दनादयः ञिलिपोश्लेपे इह स्नान्ती सती सा जलैः क्रीडापूर्व्वकं अभ्यषिचत् अर्थान्मां षिचप शौञ्चरणे गीकःस्तुस्तुभेत्यादिना अम्व्यवधानेऽपि षलं इह द्रष्टुं तामहं आह्वं आह्वतवान् ह्वञ्स्पर्द्धे सर्व्वत्र वक्ष्येत्यादिना ङः सरामएवं स्मरन् मुमोह मोहं गतः स्नांन्तीति आदीपोरिति विभाषितनुम्॥ २१॥

तस्यालिपत शोकाग्निः स्वान्तं काष्ठमिव ज्वलन्।
अलिप्तेवानिलः शीतोवने तं न त्वजिह्लदत्॥ २२॥

तस्येत्यादि। तस्य रामस्य स्वान्तं मनः क्षुब्धस्वान्तेत्यादिना जं०म० निपातितं शोकाग्निः शोकोऽग्निरिव अलिपत दीपितवान् परस्मै पदेषु लिपीत्यादिना नित्ये प्राप्ते आत्मनेपदेष्वन्यतरस्यामिति विकल्पेनाङ् स्वरितञितइति क्रियाफलविवक्षायामात्मनेपदं काष्ठमिव स्वान्तं ज्वलन् अतिवर्त्तमानः अनिलोवायुः शीतोऽपि सन् वने तं राममलिप्तेव दीपितवानिव अङ्भावपक्षे ह्लोह्लली

ति सिचोलोपः नतु नैवाजिह्लदत् ह्लादितवान् शोकाग्नेर्दृद्धुतत्वात् ह्लदेर्ण्यन्ताल्लिङ्श्रीति चङ्॥ २२॥

तस्येत्यादि। शोकएवाग्निर्ज्वलन् वर्द्धमानः तस्य रामस्य स्वान्तं मनः काष्ठमिवचिन्तया नीरसत्वात् अलिपत ददाह यद्यपि लेपश्चन्दनादिनोपदेहस्तथाप्यग्निना लेपोदाहएव पर्य्यवस्यति धातूनामनेकार्थत्वाद्वा शीतोऽपि अनिलः वने तं रामं अलिङ्गिव स्पृष्टवानिव माद्येन सम्यगस्पर्शनात् किम्वा वह्निना अलिप्त ददाह अतएव न अजिह्लदत् नानन्दयत् शोकाग्नेर्वर्द्धमानत्वात् दह्यस्येत्यादिना आत्मनेपदे लिपादेर्ङोविभाषितः पचे वासिः झम स्वादिति सिलोपः ह्लादीङ्मोदने ण्यन्ताल्लुङः स्वः खेः सन्वत्॥२२॥

स्नानभ्यषिचताम्भोऽसौ रुदन् दयितया विना।
तथाभ्यषिक्त वारीणि पितृभ्यः शोकमूर्च्छितः॥ २३॥

ज॰म॰ स्नानित्यादि। असौ रामोदयितया विना शोकमूर्च्छितः शोकेन मोहं नीतः स्नातुमारब्धः मूर्च्छेस्तुमस्यन्तस्य रूपं स्नाशाचे क्तः प्रत्ययः रुदन्नम्भः सलिलं अभ्यषिचत क्षिप्तवान् शिरस्यञ्जलिना अथ स्नातः पितृभ्योवारीणि अभ्यषिक्त दत्तवान् सिचेः पूर्व्ववद्विभाषाऽङ् सिचिरिहोत्सर्गे वर्त्तते ततस्तार्थाभ्यस्तत्वात्सलिलस्य कर्म्मत्वं॥ २३॥

भ॰ स्नानेत्यादि। दयितया विना शोकेन मूर्च्छितोऽपि असौ रामो रुदन् स्नान् स्नानं कुर्व्वन् अम्भोऽभ्यषिचत मन्त्रैः संस्कृतवान् स्वशिरसि अञ्जलिना क्षिप्तवानित्यर्थोवा तथा स्नातः पितृभ्योवारीणि

अभ्यषिक्त दत्तवान् पित्रर्थं चिप्तवान् वा धातूनामनेकार्थत्वात् षिचेः संस्कारचेपदानवाचकत्वं तेन जलस्य कर्मत्वं अभ्युक्षणे कारणत्वं यथा जलेन सिञ्चतीति पूर्व्ववत् ङः गीकद्दति षत्वं मूर्च्छासंमोहे उच्छ्रये त्यन्तात् क्तः केवलात्तु क्तक्तवत्वोरादितद्दम् न स्यात् मूर्च्छा जाताऽस्येति इताऽस्यजातद्दति इतोवा॥ २३॥

तथार्त्तोऽपि क्रियां धर्म्म्यां सकालेनामुचत् क्वचित्।
महतां हि क्रिया नित्या छिद्रे नैवावसीदति॥ २४॥

तथेत्यादि। सरामस्तेन प्रकारेणार्त्तोऽपि क्वचिदपि धर्म्म्यां क्रियां काले नामुचत् न त्यक्तवान् अस्मादेव यतोमहतां सत्यपि छिद्रे व्यसने नित्या क्रिया नावसीदति आङ्पूर्व्वाद्र्त्तेऋणोतेर्वा निष्ठायां ऋतिधातौ वृद्धिः मुचेः ऌदनुबन्धत्वादङ् सञ्ज्ञः अष्विङि यकौ॥ २४॥ ज०म०

तथेत्यादि। तथा तेन प्रकारेण आर्त्तोऽपि व्याकुलोऽपि सरामः क्वचिदपि काले धर्म्म्यां धर्म्मादनपेतां क्रियां नामुचत् न त्यक्तवान् मुच्लृ अपञ्जौमोचे ऌदित्वात् ङः आङ्पूर्व्वाद्र्त्तेः क्तः गेर्धौरनेधिणद्दति भिः हि यस्मात् महतां छिद्रे व्यसने सत्यपि नित्या क्रिया नैवावसीदति नापगच्छति क्रियेति कुःप्रसेति प्रः स्त्रीलत्ववृद्धिःअुध्धोरितीयः यदकरणे प्रत्यवायः सा नित्या॥ २४॥ भ०

आक्रास्त समुद्रः क्रूरान् मुद्गराक्रत राचसान्।
एत सीताद्रुहः संख्ये प्रत्यर्थयत राघवं॥ २५॥

ज०म० आक्रास्तेत्यादि। पुनः पुनरभिभवितुं क्रूरानाक्रास्त आक्र तवान् तथा राक्षसानाक्रत पूर्व्ववत् विकल्पः स्वङ्गायामाङ इत्या त्मनेपदं कथमाक्रतवानित्याह हे सीताद्रुहः सीताहिंसकाः क्रूरा राक्षसावा एत आगच्छत आङ्पूर्व्वादिणोलोट् संख्ये संग्रामे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिन्शब्दात्तत्करोती त्यर्थे णिच् तदंताल्लोटः परस्मैपदं अर्थयाञ्चोयामित्यस्य तु स्वा थिकण्यन्तस्य सर्व्वदात्मनेपदित्वात् प्रत्यर्थयध्वमिति वा स्यात् ॥२५॥

भ० आक्रेत्यादि। सरामोमुहुर्व्वारंवारं क्रूरान् आक्रास्त अर्थात् युद्धाय राक्षसानपि आक्रत स्वङ्गायामाङ् इति मं पूर्व्ववत् ङसो कथमाक्रत इत्याह हे सीताद्रुहः सीताहिंसकाः यूयं एत आगच्छत आङ्पूर्व्वादिणोगी मंख्ये युद्धे राघवं प्रत्यर्थयत प्रत्यर्थिनं कुरुत प्रत्यर्थिशब्दात् लेःकृत्याख्यानेञिरिति कृतौ ञिः ञीमंस्येति ञित्वे टेर्लोपः अर्थकङ् याचनइत्यस्य वा रूपं कचिदात्मनेपदिनोऽपि परस्मैपदितेति न्यायात् केचित्तु चुर्व्वाञिर्व्वेति ञेरभावपक्षे ञित्वाम्मं ञौतूभयपदमेवेत्याहुः ॥२५॥

स्वपोषमपुषद्युष्मान् या पक्षिमृगशावकाः। अद्यु तच्चेन्दुना सार्द्धं तां प्रब्रूत गता यतः ॥२६॥

ज०म० स्वपोषमित्यादि। हे मृगपक्षिणां शावकाः पोताः या सीता युष्मान् स्वपोषमपुषत् पुष्टवती स्वेपुषइति णमुल् यथाविध्यनु

प्रयोगः तां प्रब्रूत कथयत यतोयत्न आद्यादित्वात्तसिः गता सत्यु
द्युतत् द्योततेस्म सार्द्धमिन्दुना चन्द्रमसा तुल्यत्वात् ॥ २६ ॥

स्वपोषेत्यादि ॥ एवंप्रकारेण मृगादीनप्याक्राक्तेति सम्बन्धः भ०
हे पक्षिणां मृगाणाञ्च शावकाः शिशवो या सीता युष्मान् स्वपोषं
अपुषत् स्वेन आत्मना धनेन वा पुष्टवती अभिधानात् स्वपूर्व्वात्
पुषेर्णम् तदनुप्रयोगश्च या इन्दुना सार्द्धं अद्युतत् तस्याद्योतनेन
इन्दोः स्वभावेन गुणीभूतत्वात् ततोऽप्युत्कर्षः सूच्यते सार्द्धंशब्देन
समानत्वं वा लक्ष्यते उभयत्र शासुलिद्युत्पुषादेरिति ङः पे ङ
विधानादेव द्युतेः पं उक्तञ्च अतएव पं तां प्रब्रूत वदत त्वरित्त्व
यास्त्वय्येव कथनं किमर्थं इत्याशङ्कायामाह गतेति यस्माद्ग
ता अन्यत्र मां त्यक्त्वेत्यर्थात् केचित्तु यतोयत्न गता तं देशञ्च ब्रूते
त्यध्याहरन्ति केचित्तु या यतोयत्नान् अपुषत् इन्दुना सार्द्धं साम्यं
गता या अद्युतच्च यतोऽङ्यत्ने इत्यस्य क्किपीत्याहुः केचित्तु
हे पक्षिमृगशावकाः गतायतः सन्तः तां प्रब्रूत गतं गमनं भावे
क्तः न यतन्ते इति अयतः कर्त्तरि क्किप् गताय अयतोऽयत्न
वन्तः स्थिराः सन्तइत्यर्थइत्याहुः गताय नास्ति यत् यत्नो येषां
तादृशाः सन्तइत्यन्ये ॥ २६ ॥

गिरिमन्वैद्धपद्मामोलिप्सुर्ज्जनकसम्भवां । तस्मिन्ना
योधनं वृत्तं लक्ष्मणायाशिषन्महत् ॥ २७ ॥

गिरिमित्यादि । गिरिं लक्षीकृत्य गतः स्वदित्वादङ् किमर्थं ज०म०

लुब्धुमिच्छुः सनिमीमेत्यादिना इस् अत्र लोपइत्यभ्यासलोपः खरिचेति चत्वं जनकसम्भवां सम्भवत्यस्मादिति सम्भवः ऋदोरप् जनकः सम्भवोयस्यास्तां सीतां अस्मिन् गिरौ आयोधनं युद्धं महदतिशयत्वात् वृत्तं लक्ष्मणायाशिषत्कथितवान् क्रियायोगे चतुर्थी सर्त्तीत्यादिनाऽङ् शासइदङ्हलोरितीत्वं शासिवसीति षत्वं कथमकथयदित्याह ॥ २७ ॥

भ॰ गिरीत्यादि। जनकसम्भवां सीतांलब्धुमिच्छ रामोगिरिमनुलचीकृत्य असृपत् सृप्लृगतौ लृदित्वात्ङः लभेः सनिमिमीमा देत्यादिना अकारस्य इस् खिलोपश्च स्यादेः सोलोपश्च झषभ्भषे रिति षः सम्भवत्यस्मात् सम्भवः जनकः सम्भवो यस्याः जनकात्सम्भवनं यस्याइति वा तस्मिन् गिरौ वृत्तं महदायोधनं युद्धं लक्ष्मणायाशिषत् उक्तवान् तादर्थ्ये चतुर्थी यदभिप्रेत्य धात्वर्थे स्तत्र चतुर्थीति परः शासुअनुशिष्टौ शासुलिद्युदिति ङः शासु ङिङ्क्षुस्ङेइति इत्वं क्तिलादिति षत्वं॥ २७॥

सीतां जिघांसू सौमित्रे राक्षसावारतां ध्रुवं। इदं शोणितमभ्यग्रं संप्रहारेऽच्युतत्तयोः॥ २८॥

ज॰म॰ सीतामित्यादि। इत्येवं लक्ष्मणायाशिषदिति श्लोकचतुष्टयं यावत् सम्बध्यते हे सौमित्रे सीतां हन्तुमिच्छन्तौ राक्षसावारतांमागताविति, ध्रुवं निश्चितं उत्प्रेचायामित्यन्ये आङ्पूर्व्वादर्त्तेरादादिकादेवाङ् पुषादिसूत्रे शास्तिसाहचर्य्येण तस्यैव ग्रहणात् अहशोङीति गुणः आङ्विनाप्यडागमे कृते रूपमिदं हन्तेः सनि

अन्भ्रूनगमांसनीति दीर्घः अभ्यासाच्चेति घत्वं कुतोज्ञातमि त्याह इदमभ्यग्रं शोणितं तयोः संप्रहारे युद्धे अच्युतत् गलितं च्युतिरक्षरणे अकर्मकोऽत्र इरनुबन्धत्वादिरितीवेत्यङ् भीतां भक्षयितुं तयोरेव विवादोवृत्तइति भावः॥ २८॥

सीतामित्यादि। इत्थेवं लक्ष्मणायाभिषदिति श्लोकचतुष्ट भ॰ येषु सम्बध्यते हे सौमित्रे ध्रुवं निश्चिते उत्प्रेक्षे वा सीतां हन्तुमिच्छू राक्षसावारतां आङ्पूर्व्वात् ऋलिगत्यांइत्यस्मात् ऋप्रापणे चे त्यस्माद्वा वक्ष्यस्येत्यादिना पक्षे ङः ऋदृशोऽङिगुणः इति गुणः आङा विनापि रूपमेतत् हन्तेः सनिग्रहोऽज्झनिगमामिति दीर्घः खेर्घोषः कुतोज्ञातमित्याह तयोरेव संप्रहारे युद्धे इदं अभ्यग्रं अभिनवं शोणितं अच्युतत् गलितं च्युतिर्क्षरणेऽकर्म्मकः इरित्वात् शासु लिद्युदित्यादिना पक्षे ङः सीतामत्तुं तयोरेव विरोधोजातइति भावः॥ २८॥

इदं कवचमच्योतीत् साश्वोऽयं चर्णितोरथः। एह्य मुं गिरिमन्वेष्टुमवगाहावहे द्रुतं॥ २९॥

इदमित्यादि। इदं कवचमच्योतीत् भ्रष्टं अङभावे सिजेव भ जं॰म॰ वति अयं रथः साश्वश्चर्णितश्चास्ते यतश्चैवं तस्मादेहि आगच्छ द्रुतं किं पश्चाद्विलम्बसे अमुं गिरिमवगाहावहे विलोडयावः किमर्थं अन्वेष्टुं सीतामित्यर्थात् एतत्सम्प पर्व्वतसमीपे कथ्यते॥ २९॥

इदमित्यादि॥ कवचमिदं अच्योतीत् भ्रष्टं इरित्त्वात् ङाभाव भ॰ पक्षे च्यांसिः अश्वेन सह चूर्णितोऽयं रथश्चास्ते यतएवं तस्मात्

द्रुतं शीघ्रं एहि आगच्छ आङ्पूर्व्वस्येणोरूपं अन्वेष्टुमथात् सीतां अमुं गिरिं आवां अवगाहावहे सर्व्वतः पर्य्यटावः॥ २९॥

मन्युर्म्मन्ये ममास्तम्भीद्विषादोऽस्तभदुद्यतिं। अजारीदिव च प्रज्ञा बलं शोकात्तथाजरत्॥ ३०॥

ज०म० मन्युरित्यादि। मन्युर्मम शोकः मन्ये इत्यहं सशोकः सुहृज्जनेऽस्तम्भीत् स्तब्धवान् विषाद उद्यतिमस्तभत्. अत्र पक्षे अनुनासिक लोपः प्रज्ञा च तत्र विवेकिनी बुद्धिः अजारीत् विवेकवैकल्यात् जीर्णेव तथाशब्दः समुच्चये बलं शोकादजरत् जीर्णं स्वकार्य्याकरणात् ऋदृशोऽङीति गुणः जृस्तम्भित्यादिना सिजङौ॥ ३०॥

भ० मन्युरित्यादि। हे सौमित्रे मन्युः शोकोमम मन्ये स्कन्धमूर्त्तिशिरादयमस्तम्भीत् शोकजन्यवायुना मन्यास्तम्भोनाम व्याधिर्जातइत्यर्थः मन्युशोकौ तु शुक् स्त्रियां पश्चाद्ग्रीवाशिरामन्येति चामरः विषाद उत्साहविपर्य्यय उद्यतिं उद्यममस्तभत् स्तम्भुधातुः सौत्रिकः शासलिदृदिति वाङ् हसुनङ् लोपः ङाभावपक्षे वांसिः उत्पूर्व्वाद्यमेः क्तौ वनतनाद्यनिमामिति मलोपः मम प्रज्ञा बुद्धिश्चाजारीत् कर्त्तव्यमूढलाज्जीर्णेव तथा मम बलं शोकात् अजरत् कार्य्याक्षमलाज्जीर्णमिव पूर्व्ववदाङ् हृशोर्णुद्धिति गुणः पक्षे सिः अजवदेति त्रिः तथेति समुच्चयाभ्युपगमसादृश्येष्विति हद्धाः॥ ३०॥

गृध्रस्येद्धाश्वतां पक्षौ कृत्तौ वीक्षस्व लक्ष्मण। जिघांसोर्नूनमापादि ध्वंसोऽयं तां निशाचरात्॥ ३१॥

गृध्रस्येत्यादि। हे लक्ष्मण इह प्रदेशे गृध्रस्य पक्षौ कृत्तौ छिन्नौ अश्वतां शूनौ पूर्ववदङि श्वयतेरः इति वीक्षस्व नूनमवश्यं सीतां जिघत्सोरत्तुमिच्छोर्गृध्रस्य अदेर्लुङ्सनोर्घस्लृ निशाचरादयं ध्वंसः पक्षच्छेद आपादि उत्पन्नः कर्त्तरि लुङ् चिण्तेपद इति लेश्चिणादेशः तशब्दस्य चिणो लुक्॥ ३१॥ अ० म०

गृध्रेत्यादि। हे लक्ष्मण इह स्थाने गृध्रस्य कृत्तौ छिन्नौ पक्षौ अश्वतां वायुना मांसादिपरिणामेन वा वृद्धिं गतौ इति वीक्षस्व पश्य टुओश्विगतिवृद्ध्योः पूर्व्वेण वा ङः वच्यस्विपतामिति स्वः नूनं निश्चितं तां सीतां जिघांसोर्गृध्रस्य अयं ध्वंसः पक्षच्छेदः निशाचरादापादि उत्पन्नः पदस्तनीण्वेदिति कर्त्तरि इण् इणस्तनलोपः जिघत्सोरिति पाठे अत्तुं भोक्तुमिच्छोः घस्लृ इः स निति अदेर्घस्लृः सत्यरे॥ ३१॥ भ०

क्रुद्धोऽदीपि रघुव्याघ्रो रक्तनेत्रोऽजनि क्षणात्। अबोधि दुःस्थं त्रैलोक्यं दीप्तैरापूरि भानुवत्॥ ३२॥

क्रुद्ध इत्यादि। तदेवं रघुव्याघ्रो रामः क्रुद्धोऽदीपि दीप्तवान् क्षणाच्च रक्तनेत्रोऽजनि जातः जनिवध्योश्चेति न वृद्धिः त्रैलोक्यं निहन्मि यस्मिन् हन्यमानेऽपि सीताकृतोऽपि नश्यन्ति इत्यभिप्रायेण दुःस्थमबोधि बुध्यते स्म किम्बा रामस्य दाराच्छियको अ० म०

महाव्येषु का कथा इति दुःखं त्रैलोक्यमबोधि दीप्तैस्तेजोभिर्ह तुभिरापूरि वर्द्धते स्म भानुवदादित्यवत् दीप्तैरिति भावे निष्ठा सर्व्वत्र कर्त्तरि लुङ् दीपजनेत्यादिना चिण्॥ २२॥

भ० क्रुद्ध इत्यादि। लक्ष्मणायैवमुक्त्वा रघुव्याघ्रो रामः क्रुद्धः सन् अदीपि जज्वाल घृणाच रक्तनेत्रोऽजनि जातः त्रैलोक्यमेतं दुःखं अबोधि ज्ञातवान् शत्रुमलब्ध्वा तन्नाशाय त्रैलोक्यमपि नाशयिष्यामीत्याशयः येनाहमपि दुःखः कृतस्तेन सुतरां जग दुःखमिति वा दीप्तैस्तेजोभिर्हेतुभिरापूरि वर्द्धते स्म भानुरिव दीपेर्भावे क्तः, सर्व्वत्र पदस्तनोस्वेत्यादिना कर्त्तरि पाचिक इण् इणस्तनलोपः जनवधःसेम इत्यादिना जनेर्ह्रस्वः॥ २२॥

अतायस्योत्तमं सत्वमप्यायि कृतकृत्यवत्। उपा चायिष्ट सामर्थ्यं तस्य संरम्भिणोमहत्॥ २३॥

ज०म० अतायीत्यादि। अस्य रामस्य उत्तमं सत्वमभिप्रायः शोकव्य सनयोरविकारत्वात् अतायि सन्ततं नान्तरा विच्छिद्यते स्म अप्या यि वृंहितं कृतकृत्यवत् समाप्तक्रियवत् हस्ततलस्थं शत्रुवधं मन्य मानस्य उभयत्रापि पूर्व्ववच्चिण् तस्य रामस्य संरम्भिणः शत्रुवि षये क्षुभितचित्तस्य सामर्थ्यं बलमुपाचायिष्ट स्वयमेवोपचीयते स्म चिनोतेरयः कर्म्मकर्त्तरीति चिण् पक्षे चिखदिट्चेति॥ २३॥

म० अतेत्यादि। अस्य रामस्य सत्वं व्यवसायः स्वभावोवा अतायि सततं बभूव नान्तरा विहन्यते स्म उत्तमं व्यसनेऽपि अविकृतं ता पृक्पातमसन्तयोः अप्यायि वर्द्धते स्म कृतकृत्यवत् समाप्तक्रिय इव

क्रोधोत्साहाधिक्यात् विहितोवैरिवधइत्यध्यवसायात् ध्याधीङ् वृद्धो उभयत्र पूर्व्ववद्वा इण् संरम्भिणः शत्रुविषये क्रुद्धस्य तस्य रामस्य सामर्थ्यं महदुपाचायिष्ट स्वयमेवोपचीयते स्म घनग्रह इत्रचइति चिनोतेः सेर्म्मिण् कर्म्मकर्त्तरि चायृङ्निशानेऽर्थे इत्य स्यानेकार्थत्वात् कर्त्तर्य्येवेदं रूपमित्यन्ये सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः। आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुष्विति विश्वः॥ ३३॥

अदीपीव विषादोऽस्य समरुद्धेव विक्रमः। सम भावि च कोपेन न्यश्वसीच्चायतं मुहुः॥ ३४॥

अदीपीत्यादि। अस्य रामस्य विषादः प्रागुत्पन्नोऽदीपीव स्वयं ज०म० चरितइव अथवा अदीपीव प्रपूर्य्यते स्मेव विक्रमः पुरुषकारः समरुद्धेव संरुध्यते स्म इव कर्म्मवदित्यादिना कर्म्मवद्भावेन प्राप्त स्य चिणो न रुधइति निषेधःतेन सिजेव भवति झलोझलीति सिचो लोपः झषस्तथोर्धोऽधः झलाञ्जश्झशीति धत्वजस्त्वे कोपेन च समभावि सम्भूतं चिण्भावकर्म्मणोरिति भावे चिण् त्रैलोक्यदौः स्थावबोधाज्जातखेदः सन् आयतं दीर्घं न्यश्वसीत् निश्वसितवान् ह्यन्तेति वृद्धिर्न भवति मुहुरिति सर्व्वत्र योज्यं॥ ३४॥

अदीपीत्यादि। अस्य रामस्य प्रागुत्पन्नोविषादः स्वयमेवा भ० दीप्ति इव क्रोधातिशयात् स्वयं चरितइव पूर्य्यते स्मेवेत्यन्ये वेपाज दुहइति कर्म्मकर्त्तरि वा इण् विक्रमोऽपि समरुद्धेव स्वयमेवान्तः प्रविष्टइव नतपरुधषदेति कर्म्मकर्त्तरि इण्निषेधः श्रमस्यादि

ति विलोपः अस्य कोपेन समभावि सम्भूतं रतनोर्यगिणाविति भावे इण् कोपात् मुहुर्व्वारंवारं आयतं दीर्घं यथा स्यात्तथा रामोऽन्यश्वसीत् ह्मयादेःश्वेमइत्यादौ श्वसवर्ज्जनात् न वृद्धिः। इति चिजधिकारः॥३४॥

## श्नम्प्रकरणं कथ्यते।

अथालम्ब्य धनूरामोजगर्ज्ज गजविक्रमः। रुणध्मि सवितुर्मार्गं भिनद्मि कुलपर्व्वतान्॥३५॥

ज०म० इतःप्रभृति श्नम्विकरणमधिकृत्याह। अथेत्यादि। अथानन्तरं रामोधनुरालम्ब्य गृहीत्वा जगर्ज्ज विस्फुर्ज्जितवान् धनूराम इति ढ्रलोपइति दीर्घः गजगतिः सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि शरैरित्यर्थात् तथा भिनद्मि विदारयामि कुलपर्व्वतान्॥३५॥

भ० अथ श्नम्व्धाधिकारः। स च रुधादिभ्यः श्नम्। अथेत्यादि। अनन्तरं गजपराक्रमोरामोधनुरालम्ब्य गृहीत्वा जगर्ज्ज सिंहनादं चकार किं कृत्वा जगर्ज्जेत्याह अहं सवितुः सूर्य्यस्य मार्गं पन्थानं रुणध्मि आवृणोमि अर्थात् शरैः मृदुत्वादेव ममेदृशं कर्म्म संवृत्तं इदानीं महता दण्डभयादन्योऽपि सीतां दास्यति नच पुनरेवं कोऽपि करिष्यतीति भावः अतएव न तृणेढ्मीति लोकोऽयमिति वक्ष्यति कुलपर्व्वतान् पृथिव्याश्च वलम्बकान् पर्व्वतानपि अहं भिनद्मि विदारयामि रुधिरौङ्‌आवृतौ भिधा भिदिर्भिदि द्विधाकरणेति श्नमेव श्नमादिवत् प्रकृतिप्रत्य

ययोः साहाय्यकारित्वान्न श्रप् दिवसुतुदरुधक्र्यादेरिति षष्ठ्येकवचनान्तं पदं तेन दिवादिप्रभृतीनां सम्बन्धे श्यनादयोऽपरे निर्दिष्टा इत्यर्थः ते कुत्र भवन्तीत्याशङ्क्य वृत्तावुक्तं एभ्य इति तेन सूत्रे षष्ठीनिर्देशात् रुधादेः श्नम् मित्त्वादन्त्याचः ऽन्तरः एभ्य इति वृत्तौ पञ्चमीनिर्देशादन्ये प्रकृतेरुत्तर इति बोध्यं न च सूत्रे पञ्चमीनिर्देशेऽपि मित्वात् श्नम् रुधादेरन्त्यादचः परे भवितुमर्हति मित इत्यस्य षष्ठ्यन्त एव विषयत्वात् शासुलिङ्व्युषादेरिति पञ्चम्यन्तत्वात् प्रकृतेः परोऽङः न तु ङित्वादन्त्यस्य स्थाने इत्यादिदर्शनात् षष्ठीनिर्देशेऽपि पञ्चम्यर्थोऽगम्यते तथाहि अनडुत्पुंपयोलक्ष्मीनावामेकत्ववाचिनां। नित्यं कः स्यादरूश्रीभ्यां वा स्याद्गित्ववरूत्वयोरिति। अन्यत्रापि नित्यात्वतां स्वरान्तानां स्रजिद्रश्योश्च वेट्थलि। इचि नित्यानिटःस्युस्सेद्व्येऽदांनित्यमिट् थलीति ॥ ३५ ॥

रिणच्मि जलधेस्तोयं विविनच्मि दिवः सुरान्।
चुणद्मि सर्पान् पाताले छिनद्मि क्षणदाचरान् ॥ ३६ ॥

रिणच्मीत्यादि। जलधेस्तोय रिणच्मि रिक्तीकरोमि रिचिर विरेचने दिवः स्वर्गात् सुरान्विविनच्मि पृथक्करोमि विचिर पृथग्भावे चुणद्मि चूर्णयामि सर्पान् पाताले चुदिर पेषणे श्नट् कुघाङिति णत्वं छिनद्मि क्षणदाचरान् राक्षसान् द्विधा करोमि छिदिर द्वैधीकरणे ॥ ३६ ॥ ज०म०

भ० रिणच्मीत्यादि। जलधेः समुद्रस्य तोयं रिणच्मि रिक्तौ करोमि रिचिर्र्धोविरेके रेफात् अणोपात्वं सुरान् दिवः स्वर्गात् विविनच्मि पृथक्करोमि विचिर्लिंधौञ् पृथक्ले विपूर्ब्बः सुरा योगात् सुराः अर्श्रआदित्वादः तदुक्तं सुरापरिग्रहाद्देवाः सुरा इत्यभिविश्रुतादति किम्वा सुरन्ति भान्ति ईश्रते वा इति सुरा सुरश्भैश्वर्योरित्यस्मात् क्षगृश्राप्रीजुकदति कः पाताले सर्पान् चुणद्मि चूर्णयामि अधौचुदिर्क्षुदि चुस्मेषणं षकारात्वलं पतन्ति लोकाअस्मिन्निति पातालं निपातनात् वणदाचरान् छिनद्मि दैधीकरोमि छिदिर्धौञ्छेदे॥ २६॥

यमं युनज्मि कालेन समिन्धानोऽस्त्रकौशलं।
क्षुण्णपेषं पिनष्म्युर्व्वीमखिन्दानः स्वतेजसा॥ २७॥

ज०म० यममित्यादि। यममपि कालेन तदधीनेन मृत्युना युनज्मि सम्बध्नामि अस्त्रकौशलं समिन्धानः समर्द्धयन् ञिइन्धीदीप्तौ आत्मनेपदिनोलटः शानच् आअलोपः अस्नोरलोपः उर्व्वीं क्षुण्णां कृत्वा चूर्णयामि पिषृसंचूर्णने क्षुण्णचूर्णरुचेषुपिषइति णमुल् अखिन्दानः स्वतेजसा दैन्यमप्रगन् अपरिश्राम्यन् खिद दैन्ये पूर्ब्ववल्लोपः॥ २७॥

भ० यममित्यादि॥ यममपि कालेन मृत्युना अहं युनज्मि इत्थी त्यर्थः युजिर्धाञ्युतौ अस्त्रकौशलं समिन्धानः वर्द्धयन् इन्धीञ् धक्तिद्युतौ शानः नशोमलोप्यइत्युक्लोपः नशोरेणाविति नस्य अकाररहितत्वं उर्व्वीं क्षुण्णपेषं पिनष्मि चूर्णयामि धौःपिषृ

चूर्णने शुष्कचूर्णत्वात् पिषोपम् गतार्थत्वे तदनुप्रयोगस्येति पर: स्वमते चणम्वित्यस्य योगविभागात् चैशुष्यचोमकवदिति शुषेः क्नस्य कः स्वतेजसा अखिन्दानः दैन्यमभजन् अपरिश्रा म्यन् वा खिदङ्श्थीदैन्यके नणोमेऽणौ ॥ ३७ ॥

भूतिं तृणह्मि यक्षाणां छिनद्मीन्द्रस्य विक्रमं। भनज्मि सर्व्वमर्य्यादास्तनच्मि व्योम विस्तृतं। ३८ ॥

भूतिमित्यादि। यक्षाणां भूतिं सम्पदं तृणह्मि उत्सादयामि उतृ दिरहिंसानादरयोः इन्द्रस्य विक्रमं छिनद्मि अपनयामि छिदि हिंसायां इदितोनुम् तस्य आन्नलोपः सर्व्वमर्य्यादाश्च व्यवस्थाः सर्व्वेषां भनज्मि मर्द्दयामि भञ्जोआमर्द्दने आन्नलोपः तनच्मि व्योम विस्तृतं संकोचयामि तृञ्चआच्छादने क्नान्तेन चौरादिकस्य रूपं तञ्चुसङ्कोचे आन्नलोपः कस्मादेवं प्रवृत्तस्त्वमिति चेदाह ॥ ३८ ॥ ज॰म॰

भूतिमित्यादि। यक्षाणां भूतिं सम्पदं तृणेह्मि नाशयामि तृहञ्धिनादरेच चकाराद्धिंसायां इन्द्रस्य विक्रमं छिनद्मि अपनयामि छिसधिकिहिंसे नणोमलोप्यइति इदित्वात् हातनुषो लोपः सर्व्वेषां मर्य्यादाव्यवस्थाभनज्मि निवर्त्तयामि भञ्जोधीमोटने व्योमआकाशस्य विस्तृतं विस्तारं तनच्मि सङ्कोचयामि तञ्चुधसंकुचि तनज्मीति पाठे तञ्जुधसङ्कोचे तृनञ्तृताविल्य स्याद्भावे क्नः व्योमविशेषणे विस्तृतमिति निरर्थकं स्यात् ॥ ३८ ॥ भ॰

न तृणेह्मीति लोकोऽयं मां विन्ते निष्पराक्रमं। एवं वदन् दाशरथिरपृणग्धनुषा शरं॥ ३९ ॥

ज०म० नत्वणेन्मीत्यादि। न त्वणेह्मि न मारयामि इति कृत्वा त्वहिंसि हिंसायां अम् त्वणद्दम् अयं लोको मां निष्पराक्रमं निर्व्वीर्य्यं विन्ते विचारयति विद्विचारणइत्यस्मादात्मनेपदिनः अम् अलोपः एवमुक्तेन प्रकारेण वदन् दाशरथिः धनुषा शरं। अपृणक् पृणक्ति स्म पृचीसंपर्के लङि अम् हल्ङ्यादिलोपः कुलं इति अम् विकरणनिदर्शनं॥ ३८॥

भ० नत्वणेह्मीत्यादि। कथमेवं प्रवृत्तिरित्याह अहं न त्वणेह्मि न हन्मि इति कृत्वा मनसीत्यर्थात् अयं लोकः मां निष्पराक्रमं विन्ते विचारयति तेन मे पल्यपहारो वृत्तइति भावः धौविदङ् मीमांसे नणोमेऽणौ त्वहधहिंसे त्वहइणपिद्भ्रसे इति नणइण् स्वकारात् णलं दाशरथीरामएवं वदन् धनुषा शरं अपृणक् युनक्ति स्म पृच्धीच्सम्पर्के हसङ्यादिसेरिति दिलोपः चकिति कङ् स्वतोणलं पृणाति हिनस्तीति शरोऽनन्तः तालव्यादिः दन्त्यादिरप्यस्ति चित्रपुङ्खः शरः सरइति त्रिकाण्डशेषः। इति नशब्दाधिकारः॥ ३८॥

## अथ प्रकीर्णकाः।

न्यवर्त्तयत्सुमित्राभूस्तं चिकीर्षुं जगत्त्रयं। ऐत्ते तामाश्रमादाराङ्गिरिकल्पं पतत्रिणं॥ ४०॥

ज०म० इतः प्रकीर्णकश्लोकानाह। न्यवर्त्तयदित्यादि। तं रामं जगत्त्रयं चिकीर्षुं कर्त्तुमिच्छं सुमित्राभूर्लक्ष्मणोन्यवर्त्तयत् निवर्त्तितवान् भ्रातः अलं कोपेन त्वया सार्द्धं कः संग्रामे युद्धं दातुं समर्थः

यदत्र युक्तं तत्प्रतिविधीयतामिति भवनं भूः सम्पदादित्वात् क्विप् सुमित्रायां भूर्यस्य ऐचेतां रामलक्ष्मणौ दृष्टवन्तौ लङि रूपं पक्षिणं गिरिकल्पं महाप्राणित्वात् आश्रमादारात् समीपे दूरान्तिकार्थैरिति पञ्चमी ॥ ४० ॥

अथ प्रकीर्णकाः। न्यवेत्यादि। इत्थं जगतः क्षयं कर्त्तुमिच्छन्तं तं रामं सुमित्राभूर्लक्ष्मणोन्यवर्त्तयत् निवारयामास अन्यापराधेनान्यदण्डानौचित्यात् सुमित्रा भूरुत्पत्तिस्थानं यस्य सुमित्रायां भूर्भवनं यस्येति वा सुमित्रायाभवतीति वा क्विवन्तमिदं रूपं अथ रामलक्ष्मणौ आश्रमादारात् समीपे गिरिकल्पं पर्व्वततुल्यं पतत्रिणं पक्षिणं ऐचेतां दृष्टवन्तौ अन्यारंभार्थारादिति पञ्चमी ॥ ४० ॥ भ०

तं सीताघातिनं मत्वा हन्तुं रामोऽभ्यधावत। मा वधिष्ठा जटायुं मां सीतां रामाहमैक्षिषि ॥ ४१ ॥

तमित्यादि। तं सीताघातिनं सीता हतानेनेति मत्वा रामो हनिष्यामीत्यभ्यधावत धावुगतिशुद्ध्योरित्यस्मात्लङि स्वरितेत्वादात्मनेपदं तं हन्तुमुद्यतं रामं जटायुराह मा वधिष्ठाइति हे राम मां जटायुं मा वधिष्ठाः मा वधीः वधबन्धने इत्यस्मादिने कार्थत्वादात्मनेपदिनः सेटोलुङि रूपं न हन्तेःसत्याङि आङो यमहनइत्यात्मनेपदं नास्ति अकर्म्मकादित्यनुवृत्तेः स्वनामपरिकीर्त्तनं तव पितुरहं सखेति ख्यापनार्थं सीतामैक्षिषि दृष्टवानहं लुङुत्तमैकवचने अतोमां मां वधिष्ठाः ॥ ४१ ॥ ज०म०

तमित्यादि। तं पक्षिणं सीताघातिनं सीतामयं हतवान् इति भ०

मत्वा हन्तुं रामोऽभ्यधावत वेगेन अभिमुखं गतवान् धावुश्रुगवे स्थजि उपाधिविवमुक्तेनमिति वक्ष्यमाणश्लोकेनान्वयात् मा बधिष्ठा इत्यादिपद्यार्द्धं हन्तुमुद्यतं रामं प्रति जटायुवाक्यमिति गम्यते हे राम जटायुं मां त्वं मा बधिष्ठाः मारय हन्तेस्त्वामस्यांसि: हन बधष्टोव्यलीति बधादेश: धात्वर्थत्वात् वधोरस्येतीम् आत्मने पदमिच्छन्ति परस्मैपदिनां क्वचिदिति परवाक्यात् स्मते वाङ् स्थात् आत्मनेपदं किम्वा आङ्पूर्व्वहन्ते: आत्माङ्कादृढाचाहन यमइति मं आत्माङ्कादित्यस्य क्वचिद्व्यभिचारात् तथा च गाण्डी वी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षइति किम्वा जटायुमिति नामकीर्त्तनेन तव पितुः सखा अहमिति ज्ञा पितं तेन च तव पितुः सख्यदार्ढ्येनाहं तव स्वाङ्गमिव मम हिंसया तव स्वाङ्गहिंसा व्यथेति आरोपितात्माङ्गत्वादात्माङ्कादित्या त्मनेपदं किम्वा आत्माङ्कादित्यत्र आत्मशब्देनात्मीयोऽपि लभ्यते किम्वा धातूनामनेकार्थत्वाद्धञ्निन्देच इत्यस्य रूपं किन्निजगुपइत्यादौ निन्दावधेःसन्विधानाद्वन न सन् जटा आयुर्यस्येति व्युत्पत्त्या तस्य च प्रवयसो जटायुषः स्वर्गिव: किमनु शोच्यतेऽधुनेति दर्शनाच जटायुमिति चिन्त्यमिति भ्रान्तावद न्ति यतो वाङ्स्थादिणधातोरुण्प्रत्यये आयुशब्दोऽयमुदन्तोऽपि दृश्यते यथा वायुना जगदायुनेति जटायुस्स जटायुरिति शब्द भेदः पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथः पश्यैते पुरतः पिशाचवदना: कङ्कालशेषा: कृताः। खड्गच्छिन्नजटायुपक्ष तिरितः सीतां चलन्तीं वहन्नन्तर्व्याकुलविद्युदम्बुदइव द्यामभ्युद स्थाद्ररिरित्येतत्पद्यमुनादिवृत्तावुद्धृतदत्तेन जटायुशब्दस्य स

क्रोदत्कालेन दैन्यज्ञापनायोदाहृतं अहं सीतामैथिपि दृष्ट वान् त्वां वि दूम् अतोऽपि मा वधिष्ठादिति भावः ॥ ४१ ॥

उपास्थितैवमुक्तो तं सखायं राघवः पितुः। पप्रच्छ जानकीवार्त्तां संग्रामञ्च पतत्त्रिणं। ततो रावणमा ख्याय द्विषन्तं पततां वरः ॥ ४२ ॥

उपास्थितइत्यादि। पक्षिणैवमुक्ते सति राघवस्तं रणभुक्तानुष्ठा नेन उपास्थित परिचितवान् संगतकरणआत्मनेपदं स्थाघ्वोरिच्चे तीत्वं ह्रस्वादंगादिति सिचोलोपः पितुः सखायं मम पितुः सखाय मिति कृत्वा सखिशब्दाद्वितीयैकवचने रूपं सख्युरसम्बुद्धाविति णित्वाद्वृद्धिरायादेशः पप्रछ पृष्टवान् तं पक्षिणं जटायुं किं जान कीवार्त्तां संग्रामञ्च ततउपस्थानानन्तरं रावणं द्विषन्तं शत्रुं आ ख्याय कथयित्वा रावणेन हृता सीतेति पततां पक्षिणां वरोजटा युर्ममारेति परेणान्वयः ॥ ४२ ॥ ज०म०

उपेत्यादि। पक्षिणा एवमुक्ते सति राघवस्तं पितुः सखायं उपास्थित आराधितवान् मैत्राध्वसङ्गइति मं स्थादेङ्गिष्ठीमेइति ङ्गिर्गुणाभावश्च ह्रस्वादिति सिलोपः ततउपस्थानानन्तरं द्विष न्तं शत्रुं रावणमाख्याय सीता तेन हृतेति कथयित्वा पततां पक्षि णां वरः श्रेष्ठोजटायुर्ममारेति वक्ष्यमाणश्लोकेन सम्बन्धः ॥ ४२ ॥ भ०

व्रणवेदनया ग्लायन्ममार गिरिकन्दरे। तस्याग्न्य म्बुक्रियां कृत्वा प्रतस्थाते पुनर्व्वनं ॥ ४३ ॥

व्रणेत्यादि। व्रणकृता वेदना पीडा मध्यपदलोपी समासः तया ज०म०

ग्लायन् ग्लानिं गच्छन् ग्रतर्थ्यायादेश: ममार मृत: स गिरिकन्द रे यं गिरिमभ्यसृपत् तस्य निम्नप्रदेशे कन्दं रातीति व्युत्पत्तिमा श्रं तस्य जटायोरग्न्यम्बुक्रियां दाहमुदकदानञ्च कृत्वा पुनर्भूयो वनमरण्यं प्रतस्थाते प्रस्थितौ समवप्रविभ्य इत्यात्मनेपदं ॥ ४२ ॥

भ० व्रणेत्यादि। व्रणेन या वेदना तया ग्लायन् ग्लानिं गच्छन् ममार अथ गिरिकन्दरे यं गिरिमभ्यसृपद्रामस्तस्य निम्न प्रदेशे गुहायां वा अग्निक्रियां दाहं अम्बुक्रियां तर्पणं च कृत्वा पुनर्व्वनं प्रतस्थाते अर्थाद्रामलक्ष्मणौ प्रतिज्ञानिर्णयेत्यादिना प्रश्लोकं स्रुकुष्टीश्लोकमिति नियमात् ठीपं। अथालब्धधनूराम इत्यादिपद्यार्द्धादनन्तरं सीताविरहदु:खार्त्त: कोपसंरक्तलो चनइति.यमं युनज्मि कालेनेत्यादिपद्यार्द्धानन्तरं विनज्मि धाम सर्व्वेषां दृणच्मि सकलं जगदिति एवं वदन् दाशरथिरित्यादि पद्यार्द्धादनन्तरं अगस्त्यानाय सन्नद्धस्तूणवत् स्वेन तेजसेति न्यवर्त्त यत् सुमित्राभूरित्यादिपद्यार्द्धानन्तरं तेज:स्वाचं विरुन्धानं दिध क्षन्तमिवानलमिति तं सीताघातिनं मत्वेत्यादिपद्यार्द्धानन्तरं प्रोवाच सतदापन्नो भयाद्रामेण तर्जितइति उपास्थितैवमुक्ते तमित्यादि पद्यार्द्धानन्तरं पप्रच्छ जानकीवार्त्तां संग्रामस्य पतत्रि णमिति तस्याग्न्यम्बुक्रियां कृत्वेत्यादि पद्यार्द्धानन्तरं विराधमीयि वांसौ तां विचिन्वानावितस्ततइति पद्यार्द्धं केनचित् क्वचित् पुस्त के प्रक्षिप्तं सर्व्वमिदं प्राचीनैरुपेक्षितत्वादमूलमेव तत्राप्यथालब्ध धनूरामइत्यादिपद्यार्द्धानन्तरं सीताविरहदु:खार्त्त: कोपसंरक्त लोचनइति पद्यार्द्धमतीवायुक्तं सम्बन्धाधिकारे सम्बन्धाभावात्॰ ॥ ४२ ॥

सत्वानजस्रं घोरेण बलापकर्षमश्नता। क्षुध्यता जगृहाते तौ रक्षसा दीर्घबाहुना॥ ४४॥

सत्वानित्यादि। तौ रामलक्ष्मणौ रक्षसा राक्षसेन जगृहाते गृहीतौ कर्म्मणि लिट् किं नाम्ना दीर्घबाहुना अन्वर्था चेयं संज्ञा एक एकेन बाहुना द्वितीयोद्वितीयेन क्षुध्यता बुभुक्षमाणेन घोरेण भीमेन सत्वान् अजस्रं सदा नञ्पूर्व्वाज्जसेर्नमि कम्पीति रः अश्नता भुञ्जानेन किं कृत्वा बलापकर्षं बलादाकृष्यैव पाकादिकमनपेक्ष्य अपादाने परीप्सायामिति णमुल्॥ ४४॥ ज०म०

सत्वानित्यादि। तौ रामलक्ष्मणौ दीर्घबाहुनाम्ना रक्षसा जगृहाते गृहीतौ कर्म्मणि ठो क्षुध्यता बुभुक्षुणा दिवादित्वात् श्यन् बलापकर्षं सत्वान् प्राणिनोऽजस्रं निरन्तरं अश्नता भक्षयता बलादपकृष्य त्वरया परिष्कारादिकमकृत्वैव परिप्सायाम् त्वरायां णमिति परः क्षमते बलेनापकर्षोऽपकर्षणं यत्रेति सत्वभक्षणक्रियाविशेषणं एतेन त्वरयापरिष्कारादिकं तदपि प्राप्तं परिष्कृतत्वादौ बलहेतुत्वस्य वैयर्थ्यात् चणमित्यस्य योगविभागाद्वा चणम् घोरेण भयदेन नञ्पूर्व्वाज्जसेर्हिंसदीपकम्पाजसेति रः॥ ४४॥ भ०

भुजौ चक्रततुस्तस्य निस्त्रिंशाभ्यां रघूत्तमौ। सच्छिन्नबाहुरपतद्दिक्कलो क्ष्लयन् भुवं॥ ४५॥

इति प्रकीर्णकाः।

ज॰म॰ भुजावित्यादि। रघूत्तमौ रामलक्ष्मणौ तस्य योजनबाहोः बाहू यथास्थानमागतौ चकृततुः छिन्नवन्तौ कृतीछेदने इत्यस्य रूपं काभ्यां निस्त्रिंशाभ्यां खड्गाभ्यां निर्गतस्त्रिंशताऽङ्गुलिभ्यइति वाक्ये डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानमिति त्रिंशच्छब्दाड्डच्विधिः निरादयइति समासः टिलोपः सच्छिन्नबाहुः कृत्त भुजः सन् अपतत् पतितः पतेर्लङि रूपं लृदित्वादङ् विक्लवो व्याकुलः भुवं भूमिं कलयन् कलचलने घटादित्वे ह्रस्वत्वं। इति प्रकीर्णकाः॥४५॥

भ॰ भुजावित्यादि। रघूत्तमौ निस्त्रिंशाभ्यां तस्य रचसोभुजौ खखग्रहणोद्यतौ चकृततुः कृतीश्छेदने त्रिंशतोऽङ्गुलीभ्योनिर्गतः निस्त्रिंशः निसःशतोडइति सूत्रे निसइति निर्द्देशात् निष्पतन्यइत्यादिवत् षापकप्राप्तस्य षत्वस्याभावः त्रिंशतोऽङ्गुलीभ्योऽधिकं परिमाणं खड्गस्योक्तं निस्त्रिंशः करखड्गयोरिति कोषः सच्छिन्नबाहुः सन् भुवं कलयन् कम्पयन् न्यपतत् कलचलनचाले ज्वलकलेत्यादिना अगोर्व्वा ह्रस्वः विक्लवोव्याकुलः। इति प्रकीर्णकाः॥४५॥

## अथकृत्याधिकारः।

प्रष्टव्यं पृच्छतस्तस्य कथनीयमवोचत्। आत्मानं वनवासञ्च जेयञ्चारिं रघूत्तमः॥४६॥

ज॰म॰ इतः परं कृत्याधिकारः। प्रष्टव्यमित्यादि। सयोजनबाहुः निहतोरामं पप्रच्छ कोभवान् कस्य पुत्रः कथं तव वनवासः कस्माचो

द्दिग्नः सन् भ्रमसीति प्रष्टव्यं प्रश्नार्हं पृच्छतस्तस्य तथ्यवक्तव्यानीयर
इति तव्यत् प्रत्ययेति पदं टवस्य रघूत्तमः इदानीं कथनीयं कथ
नार्हं तत्प्रश्नानुरूपं पूर्व्वेणानीयर अवीवचदकिस्स वचभाषणे
चौरादिकः स्वार्थिकोणिच् लुङ् चङ् णिलोपश्रुस्वः द्विर्व्वचनसन्व
द्भावेत्वदीर्घत्वेषु रूपं किन्तदित्याह आत्मानं राभोदाशरथि भ॰
रिति वनवासं पितुरादेशात् वनवासं जेयं चारिं यः कनकमृगच्छ
लेन रावणः सीतामपहृतवान् ॥ ४६ ॥

अथ कृत्याधिकारः। स्वमते त्वास्तव्यानीयथ्यण्क्यप्केलिमाः।
प्रष्टव्यमित्यादि। कस्त्वं कथमिहागतइत्यादि प्रश्नार्हं पृच्छत
स्तस्य राक्षसस्य सम्बन्धे रघूत्तमः कथनार्हं प्रश्नानुरूपं अवीवचत्
कथितवान् वच्कच्मन्त्रेम किलाचुरादिः ञिश्रीत्यङ् ञ्यस्यु
ङःस्वः खेःसन्वत् ञेर्लोपः किन्तदित्याह आत्मानं पित्रादिसम्ब
न्धेन वनवासं वनवासकारणमर्थात् जेयं जेतव्यमरिं शत्रुं रा
वणं शत्रुतावीजसहितमित्यर्थात् शकीशशीषे तव्ये शक्ताजिति
षङ् शतरि तु ग्ररस्वपायोरिति जिः कथत्कवाक्यप्रबन्धे हमा
लोपोऽस्त्यिथोरित्यकारलोपेऽपि स्थानिवद्भावाकञ्जित्यन्तोगुरु
तोरिति ञिः ञेर्लोपः ते त्याः शक्यार्हेति अर्ह इत्यर्थे सर्व्वत
त्यः॥ ४६ ॥

लभ्या कथन्नु वैदेही शक्योद्रष्टुं कथं रिपुः। सह्यः
कथं वियोगश्च गद्यमेतत्त्वया मम ॥ ४७ ॥

लभ्येत्यादि। कथं केन प्रकारेण उपायेन लभ्या वदेही प्राप्या अ॰म॰
पोरदुपधादिति यत् शत्रुः केन प्रकारेण द्रष्टुं शक्यः शकधृषेत्या

दिना तुमुन् वियोगश्चायं सीतायाः कथं केन प्रकारेण सह्यः सो ढव्यः सर्किसहोश्चेति यत् गद्यमेतत् कथनीयमेतत् गदमदेत्या दिना यत् ममेति शेषविवचायां षष्ठी त्वं पुनः कः इति पृष्टश्चाह ॥ ४७ ॥

भ० लभ्येत्यादि। इत्यपि अवीवचदिति सम्बन्धः नु प्रश्ने कथं वैदेही लभ्या रिपूरावणः कथं द्रष्टुं शक्यः अज्ञातदेशत्वात् कथं वियोगः सीतायाइत्यर्थात् सह्यः एतत्सर्व्वं त्वया मम सम्बन्धे गद्यं वाच्यं लभङ्ग्डाङश्शप्रौ शकयज्ञकिच्चनशक्तौ सहङमर्षे एभ्यः पूशक सहेत्यादिना यः गदभाषे इत्यस्मात् गदमदयमेति यः त्वयेति त्व्यभावकेति कर्त्तुः षष्ठी निवृत्तिपचे तृतीया ॥ ४७ ॥

अहं राम श्रियः पुत्रोमद्यपीतइव भ्रमन्। पापचर्य्योमुनेः शापाज्जातइत्यवदत्स तं ॥ ४८ ॥

ज०म० अहमित्यादि। हे राम अहं श्रियः पुत्रः मद्यपीतइव वाहिता ग्न्यादित्वाक्रिष्ठान्तस्य परनिपातः कार्य्याकार्य्यविवेकाभावात्पा पचर्य्योराक्षसः मुनेः स्थूलशिरसः शापाज्जातउत्पन्नः माद्यत्य नेनेति मद्यं चरितव्यं चर्य्यमेतौ पूर्व्ववद्यत्प्रत्ययान्तौ पापं चर्य्यं यस्येत्यवदत् सयोजनवाङ्स्तं रामं वाक्यार्थोऽच कर्म्म ॥ ४८ ॥

भ० अहमित्यादि। इति सयोजनवाङ्स्तं रामं अवदत् किम्मदि त्याह हे राम अहं श्रियोऽप्सरसः पुत्रः मद्यपीतः पीतमदिर इव भ्रमन् कार्य्याकार्य्यविवेकशून्यत्वात् क्षतापराधोमुनेः स्थूल शिरसः शापात् पापचर्य्यः पापहेतुकर्म्मा राक्षसोजातः एतत्

कथमं तत्राक्षे रामप्रीत्यर्थं मद्दोभिर्यज्ञिहर्षे मद्यतेऽनेनेति मद्यं अभिधानात् गदमदयमेत्यादिना ढभावे विहितेऽपि यः करणे पीतं मद्यं येनेति अन्याहितादित्वात् क्तान्तस्य वा परनिपात इति रः स्वमते गमकत्वात् पापं चर्य्यं चरणीयं यस्य गदमद यमचरेति यः ॥ ४८ ॥

प्रयातस्तव यस्यत्वं ग्रस्तपूतोऽब्रवीमि ते। रावणेन हृता सीता लङ्कां नीता सुरारिणा ॥ ४९ ॥

प्रयातइत्यादि। इदानीं तव यस्यत्वं वध्यत्वं प्रयातः यमेः पूर्व्ववत् यत् ग्रस्तपूतस्तव ग्रस्तेण पावितः सन् देवोभूतोऽब्रवीमिते तुभ्यं कथयामि युष्मद्स्तुर्य्येकवचनस्य तेमयावेकवचनइतिते आदेशः क्रियायोगे चतुर्थी कथनीयमाह रावणेन सुरारिणा हृता सीता लङ्कां नीता ॥ ४९ ॥ ज०म०

प्रयातइत्यादि। इदानीं तव यस्यत्वं वध्यत्वं प्रयातः प्राप्तः सन् भ० तव ग्रस्तेण पूतः पापान्निर्मुक्तः पूर्व्वदशां लब्धा ते तुभ्यमहं ब्रवीमीति तादर्थ्ये चौ यमेः पूर्व्वे ण यः पूक्लिशइदित इत्यनेन वेट्त्वात् नेड्वशीदिदेम इति पूतः क्तक्तवत्वोरनिमत्तं वचनीयमाह रावणेन सुरारिणा सीता हृता लङ्कां नीता प्रापिता च एतेन लङ्कायां रिपुर्द्रष्टव्यइति अक्तोद्रष्टुं रिपुः कथमित्यत्रोत्तरमुक्तं ॥ ४९ ॥

ऋष्यमूकेऽनवद्योऽस्ति पण्यभ्रातृवधः कपिः। सुग्रीवोनाम वर्य्योऽसौ भवता चारुविक्रमः॥ ५०॥

ज०म० वैदेही प्राप्या कथमिति यमुपेत्य पृष्टवान् तं कथयन्नाह ऋष्यमूकइत्यादि। ऋष्यमूकपर्व्वते सुग्रीवोनाम कपिः चारुविक्रमो महापराक्रमोऽस्ति असौ भवता वर्य्योवरणीयः प्रार्थनीयः वर ईप्सायामिति चौरादिकाद्यत् यद्वा अवद्यपण्येत्यच वृञो वर्य्येति स्त्रियामनिरोधे अनिरोध्या सततप्रवर्त्तनी वर्य्या प्रीतिर्यस्येत्यर्शआद्यच् भवता सहवर्य्यः प्रीतिमान् समानव्यसनत्वात् यतः पण्यभ्रातृवधः सः पण्योविक्रेतव्योभ्रातुर्वालिनोवधोयेन यद्येवं तदा कथं मया पापीयान् वर्य्यइत्यतआह अनवद्यः अगर्हणीयः दारापहारित्वेन आततायिनोभ्रातुर्वधेन निर्द्दोषत्वादिति भावः॥ ५०॥

म० ऋष्येत्यादि। लभ्या कथं नु वैदेहीत्यत्रोत्तरमिदं सुग्रीवोनाम कपिर्ऋष्यमूकनामपर्व्वते अस्ति असौ सुग्रीवोभवता वर्य्यः वरणीयः यतश्चारुविक्रमः अनुपकारकेण मया वृतोऽसौ मत्कार्य्यं कथं साधयिष्यतीत्याह पण्यभ्रातृवधः पण्योविक्रेतव्योभ्रातुर्व्वालिनोवधोयेन भवता वालिवधं कारयित्वा सीतोद्धारं करिष्यतीति भावः पण्यतुल्यत्वात्पण्यव्यपदेशः तर्हि पापात्मनस्तस्य वरणमनुचितं नच तद्वचनेऽपि विश्वासइत्यतआह अनवद्यः अनिन्द्यः दारापहारित्वेनाततायिनोभ्रातुर्वधे निर्दोषत्वात् मञ्पूर्व्वोवदिः पणऽच्यवद्यतौ स्तुतौ वृञगसम्भवौ एषां यान्तानां पण्यऽवद्यवर्य्येत्यादिना निपातनात् तथा रूपं केचित्तु वरत्वेऽपीत्यस्मात्तव्यानीययादिति ये वर्य्यइति रूपमित्याहुः ऋषयो

ऽमूका अध्ययनशीला यत्र स ऋष्यमूकः मूर्द्धन्यषकारवानयं ऋष्यो मृगविशेषो मूकोयत्रेति वा बलहृष्याहृष्यास्खलीति यमकात् तालव्यशकारवानिति केचित् केचित्तु ऋचोऽद्रिभेदे भमूके इति विश्वप्रकाशे एकदेशेनापि संज्ञा गम्यतइति न्यायात् ऋषमूकइत्येव संज्ञामाहुः नामेति प्रकाश्यसम्भावनाक्रोधाभ्युपगमेष्वव्ययं अन्यथा भेदके तृतीया स्यात् ॥ ५० ॥

तेन वत्स्येन हन्तासि त्वमर्थ्यं पुरुषाशिनां। राक्षसं क्रूरकर्माणं शक्रारिं दूरवासिनं ॥ ५१ ॥

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं हन्तासि निहनिष्यसि वत्स्येन वहत्यभिप्रेतमनेनेति वत्स्यं करणमिति यत् कीदृशमर्थ्यं स्वामिनं पुरुषाशिनां राक्षसानां अर्य्यःस्वामिवैश्ययोरिति यक्नि पात्यते क्रूरकर्माणं पापाचारं शक्रारिं रावणं यद्येवमहमेव हन्तुं समर्थइत्यभिप्रायेणाह दूरवासिनं समुद्रान्तरितवासित्वात् एकाकिना हन्तुं न शक्यतइति भावः ॥ ५१ ॥ ज० म०

तेनेत्यादि। तेन सुग्रीवेण त्वं राक्षसं रावणं हन्तासि त्वांरूपं वत्स्येन उह्यतेऽर्थोऽनेनेति वत्स्यस्तेन कीदृशं पुरुषाशिनां राक्षसानां अर्थ्यं स्वामिनं क्रूरकर्माणं पापाचारं शक्रस्यापि अरिं एतेन दुर्ज्जयत्वं दर्शितं दूरे वसन्तं एतेन समुद्रान्तरितत्वात् सहायं विना न हन्तुं शक्यतइति भावः वहेर्ञ्ञोप्रापणे स्त्रलिगत्वा अनयोः पूर्व्वेण निपातः ॥ ५१ ॥ भ०

आस्ते स्मरन् स कान्ताया हृतायावालिना कपिः।
वृषोयथोपसर्य्याया गोष्ठे गोदण्डताडितः ॥ ५२ ॥

ज॰म॰ यद्यनवद्यस्तदा कथमस्य पत्नीभ्रातृवधइत्याह आस्तेइत्यादि। वालिना हृतायाः कान्तायाः स्मरन्नास्ते कोऽन्यः सम्भवेत् यस्तं हत्वा त्वया मां योक्ष्यते अधीगिति कर्मणि षष्ठी कस्येव वृषो यथा उपसर्य्यायाआसन्नप्रसवायागोः स्मरन् गोष्ठे आस्ते उपसर्य्याकाल्याप्रजनइति निपातितं दण्डताडितः सन् दण्डस्थानी योऽत्र वाली ॥५२॥

भ॰ आस्तइत्यादि। तुल्ययोः सख्यमेवेत्यस्य सूचनाय पत्नीभ्रातृवधत्वादोषदर्शनाय वा इदमाह सकपिः सुग्रीवोवालिना हृतायाः कान्तायाः स्मरन् आस्ते कुतोमया सा लभ्यवेति कर्मणि षष्ठी यथा उपसर्य्यायाआसन्नगर्भग्रहणायागोः स्मरन् वृषोगोष्ठे गोस्थाने दण्डेन ताडितः सन् तिष्ठति तद्वत् दण्डतुल्योऽत्र वाली उपस्थियते वृषभेन गम्यते उपसर्य्या ऋतुमत्यां पण्यावद्येत्यादिना निपात्यते ॥ ५२ ॥

तेन सङ्गतमार्य्येण रामाजर्य्यं कुरु द्रुतं । लङ्कां प्राप्य ततः पापं दशग्रीवं हनिष्यसि ॥ ५३ ॥

ज॰म॰ तेनेत्यादि। हे राम तेन वानरेण संगतं सख्यं अजर्य्यं अनपायं नजोर्य्यतइत्यस्मिन् वाक्ये अजर्य्यं संगतमिति निपातितं आदौ विशेष्यत्वेनोपात्तं संगतं तद्विशेषणमजर्य्यं कुरु द्रुतं यावत्तस्यानेन

युष्मद्विधेन संगतं न भवति आर्य्येण सदाचारेण ऋच्छतेर्ण्यत् ततः सङ्गतात् लङ्कां प्राप्य गत्वा पापं पापीयांसं रावणं हनिष्यति ॥ ५३ ॥

तेनेत्यादि। हे राम तेन सुग्रीवेण सह द्रुतं शीघ्रं अजर्य्यं भ० मैत्रीं कुरु कीदृशं सङ्गतं समयक्रमेण उचितं सङ्गतपदस्य सख्य वाचित्वेऽजर्य्यस्य तथार्थत्वाद्वैयर्थ्यं स्यात् केचित्तु सुग्रीवेण सह सङ्गतं सख्यं कुरु कीदृशं अजर्य्यं अनपायं सङ्गतार्थस्यापि अजर्य्य शब्दस्योपचारादन्यत्र प्रवृत्तिरित्याहुः न जीर्य्यतीत्यजर्य्यं सङ्गतं पूर्व्वत्रन्निपातितं स्नेहोमैत्रीप्रीतिरजर्य्यसभाजनसङ्गतं प्रोक्तमिति हलायुधः आर्य्येण सदाचारेण ऋधातोर्ऋहल्योर्ण्यदिति ण्यति रूपं आरात् पापेभ्योदूरेयातीति आर्य्यइति केचित् सदा मनो षादिः द्रुतशब्देन यावद्भवद्विधेनान्येन सह तस्य सख्यं न जात मिति व्यज्यते ततः सङ्गतानन्तरं लङ्कां प्राप्य दशग्रीवं पापं त्वं हनिष्यसि स्वसङ्कुन इतीम् ॥ ५३ ॥

अनृतोद्यं न तत्रास्ति सत्यवद्यं ब्रवीम्यहं। मित्र भूयं गतस्तस्य रिपुहत्यां करिष्यसि ॥ ५४ ॥

ननु यावत्कार्य्यं न सिध्यति तावन्मांसङ्गच्छति कृतकृत्यस्तु नैवेत्य ज०म० तत्राह अनृतोद्यमित्यादि। सत्यमुद्यतइति कर्म्मणि यत् अहंसत्यं वचोब्रवीमीत्यर्थः अनृतोद्यं तत्र सुग्रीवे नास्ति अनृतमसत्यं उद्यं वचनं अनृतोद्यं भावे क्यप् यजादित्वात्संप्रसारणं उभयत्रापि

वद: सुपि क्यप् चेति चकाराद्यच यस्मादेवं तस्मान्मित्रभूयं मित्रभावं गत: भुवोभावे क्यप्. रिपुहत्यां शत्रुहत्यां करिष्यसि हनस्तचेति क्यप् तकारस्यान्तादेश: ॥ ५४ ॥

भ० अनृतोद्यमित्यादि। स्वकार्य्यं साधयित्वा यदि मामुपेक्षते तदा किं स्यादित्याह अहं सत्यवद्यं सत्यवचनं ब्रवीमि तत्र सुग्रीवेऽनृतोद्यं मिथ्यावचनं नास्ति वदेर्वाचि सेर्व्वद: क्यपयाविति क्यप् यह स्वपाद्योरिति जि: तस्मात्तस्य सुग्रीवस्य मित्रभूयं मित्रभावं गत: सन् रिपुहत्यां शत्रुवधं करिष्यसि भूहन:क्यप्भावेनतस्येति क्यप् नस्य तस्य लिङ्गभेदोऽभिधानात् ॥ ५४ ॥

आदृत्यस्तेन वृत्येन स्तुत्योजुष्येण सङ्गत:। इत्य: शिष्येण गुरुवद्गृध्यमर्थमवाप्स्यसि ॥ ५५ ॥

अ०म० आदृत्यइत्यादि। तेन संगत: सन् गृध्यमभिलषणीयमवाप्स्यसि ऋदुपधादिति क्यप् कीदृश: कीदृशेनेत्याह आदृत्य: आदरणीय: वृत्येन वरणीयेन स्तुत्य: स्तवार्ह: जुष्येण सेव्येन हनुमत्प्रभृतीनां कइव शिष्येण गुरुरिव यथोपाध्याय: शिष्येणैकार्थ: अनुगम्यस्तद्वदिति एतिस्तुशास्वित्यादिना क्यप् ह्रस्वान्तात्तुक् ॥ ५५ ॥

भ० आदृत्येत्यादि। न केवलं रिपुहननमन्यदप्यस्तीत्याह तेन शिष्येणेव गुरुरिव त्वं सङ्गत: सन् गृध्यमाकाङ्क्षणीयमर्थमवाप्स्यसि त्वं कीदृशस्तेन वा कीदृशेन आदृत्यआदरणीय: वृत्येन वर

ग्रीयेन स्तुत्यः स्तवार्हः जुष्येण सेवार्हेण जनानामर्थात् तेन तुल्य योरुभयोः सङ्गतं योग्यं इत्यः अनुगन्तव्यः अर्थात्तेन भवतोगुरुत्वेन तस्य शिष्यत्वेन मैत्रीकरणेऽपि न ते मानहानिरिति सूचितं हङ्ग्रादरे वृञ्वृतौष्टुञ्स्तुतौ ग्रङ्गोञ्जिजुषमुद्दिश्येवे दृणगतौ ग्रासुञ्ज्ञासने गृधिर्युलिप्से एभ्योहृभृजुषेत्यादिना क्यप् स्तस्य तन्पिति ॥ ५५ ॥

नाखेयः सागरोऽप्यन्यस्तस्य सङ्कृत्यशालिनः। मन्युस्तस्य त्वया मार्ग्योमृज्यः शोकस्य तेन ते ॥ ५६ ॥

नाखेयइत्यादि। तस्य सुग्रीवस्य सङ्कृत्यशालिनः हनुमदादिभृत्ययुक्तस्य भृञोऽसंज्ञायामिति क्यप् अन्योद्वितीयः सागरोऽपि नाखेयोन खननीयः अपितु खननीयएव अपिशब्दः सम्भावनायां तस्य कारणं सङ्कृत्यशालित्वं ईषत्खनइति क्यवोकारो तस्य शरीरस्य मन्युस्त्वया मार्ग्योऽपनेयः ते तव तेन च शोकोमृज्यः मृजे र्विभाषेति यद्विकल्पे क्यत् ॥ ५६ ॥ ज०म०

नाखेयइत्यादि। हनूमदादिसङ्कृत्यशालिनस्तस्य सुग्रीवस्य अन्योऽपि सागरोन अखेयः अपि तु शक्यखननएव एतेन तन्मैत्र्यं बङ्गसहायत्वं समुद्रलङ्घनमपि सुकरमिति सूचितं खनुङ्विदारे खनाद्येरेये इति टेरेत्वं तस्मात् प्रथमं त्वया तस्य मन्युर्दैन्यं मार्ग्योमार्ज्जनीयः पश्चात्तव शोकस्तेन मृज्यः अपनेयः एतेन सद्यः कथं वियोगश्चेत्यत्रोत्तरं दत्तं सुग्रीवेणाचिरादेव वियोगा भ०

पनयात् अपिशब्दः सम्भावनयां मृजलूषशङ्खो ष्टवृषमृजेति वा क्यप् पत्ते हस्ययामेरिति ण्यत् चजोःकगोघितीति गत्वं मृजे ऽकङ्गितीति त्रिः ॥ ५६ ॥

सराजसूययाजोव तेजसा सूर्य्यसन्निभः । अमृषो द्यं वदन् रुच्योजगाहे द्यां निशाचरः ॥ ५७ ॥

ज॰म॰ सइत्यादि। सनिशाचरोद्यामाकाशं जगाहे गतः राजसूययाजीव राज्ञा सूयते राजा वा अनेन सूतइति राजसूयः क्रतुः तेनेष्टवान् सराजसूययाजी करणे यजइति णिनिः तद्वदित्यर्थः रुच्यः प्रियोजातोरामस्येत्यर्थात् राजसूयइत्यादिना क्यवन्ताः राजसूयादयः ॥ ५७ ॥

भ॰ सराजेत्यादि। इत्येवममृषोद्यं सत्यवचनं वदन् सनिशाचरोयोजनवाञ्छ्यां स्वर्गं आकाशं वा जगाहे गतः राजसूयनाम यज्ञकर्त्तेव तेजसा सूर्य्यतुल्यः रुच्यः रामस्य रुचिविषयः प्रिय इति यावत् सुञ्जनसम्भाक्लेदपीडामन्थे राज्ञा सूयते सोमोऽत्रेति राजसूयः पाय्यधाय्येत्यादिना निपातितः राजसूयेन यजते राजसूययाजी यज्ञादित्वात् णिन् सरतीति सूर्य्योऽर्कः रोचते रुच्यः एतो सृस्यविनीयेत्यादिना निपातितो सूरएव सूर्य्यः स्वार्थेयइति गोयीचन्द्रः नञ्पूर्व्वमृषाशब्दाद्वदेर्नित्यं क्यप् मृषोद्यं नित्यमित्युक्तेः ॥ ५७ ॥

अक्लिष्टपच्याः पश्यन्तौ ततो दाशरथी लताः। रत्ना न्नपानकुप्यानामाटतुर्नष्टसंस्मृती ॥ ५८ ॥

अक्लिष्टपच्या इत्यादि। ततो निशाचरगमनानन्तरं दाशरथी रामलक्ष्मणावाटतुर्गतवन्तौ कीदृशौ नष्टा संस्मृतिर्ययाः केषां संस्मृतिः रत्नान्नपानकुप्यानां रत्नान्नपानानि प्रसिद्धानि कुप्यं स्वर्ण रजताभ्यामन्यत् वस्तु तत् क्यप् गकारस्य ककारः कर्म्मणि षष्ठी लताः पश्यन्तौ क्लिष्टे पच्यन्तेइति क्लिष्टपच्याः पूर्व्ववत् क्यप् पश्चान्नञ्समासः स्वयमेव पच्यन्ते यास्ताइत्यर्थः ॥ ५८ ॥ ज॰म॰

अक्लिष्टेत्यादि। ततस्तद्गमनानन्तरं लताः पश्यन्तौ दाशरथी रामलक्ष्मणौ आटतुः अटगतौ लताः कीदृशीः अक्लिष्टपच्याः क्लिष्टे चेत्रे स्वयमेव पच्यन्तइति क्लिष्टपच्याः पूर्व्वेण निपातः पश्चान्नञ्समासः कीदृशौ रत्नानां अन्नस्य पानस्य कुप्यानां ताम्रादीनाञ्च नष्टा सम्यक् स्मृतिर्ययोः गुणभूतापि क्रिया साधनसम्बन्धमनुभवतीति कर्म्मणि षष्ठी सम्बन्धविवक्षयेत्यन्ये कुप्यतइति कुप्यं स्वर्णरूप्याभ्यामन्यद्धनं पूर्व्ववन्निपातः ॥ ५८ ॥ भ॰

समुत्तरन्तावव्यथ्यौ नदान् भिद्योद्ध्यसन्निभान्। सिध्यतारामिव ख्यातां शबरीमापतुर्व्वने ॥ ५९ ॥

समुत्तरन्तावित्यादि। तौ तस्मिन् वने शबरीमापतुः प्राप्तवन्तौ अव्यथ्यौ न व्यथेते इति पूर्व्ववत् क्यप् परिश्रमवर्जितावित्यर्थः ज॰म॰

नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान् भिद्योद्ध्यौ नदवि शेषौ भिद्योद्ध्याविति पूर्व्ववत् निपातितं भिनत्ति कूलमिति भिद्यः उज्झत्युदकमिति उद्ध्यः उद्ग्रउत्सर्गे दकारात्परस्य धकारो निपात्यते तत्सदृशान् नदान् सिध्यताराभिव ख्यातां सिध्यन्त्यस्मि न्निति सिध्यः पुष्यसिध्यौनचत्रे इति निपातनात् पुष्याख्यां तारा मिव ख्यातां शबरीं ॥ ५८ ॥

भ० समुत्तरन्तावित्यादि। तौ वने शबरीमापतुः प्राप्तवन्तौ न व्यथेते अव्यथौ नदान् समुत्तरन्तौ कीदृशान् भिद्योद्ध्यसन्निभान् कूलं भिनत्तीति भिद्योनदः वार्य्युज्झतीति उद्ध्योनदः तयोस्तु ल्यान् शबरीं कीदृशीं सिध्यताराभिव कार्य्यसाधकत्वात् ख्यातां प्रसिद्धानुभवां कार्य्यं साधयतीति सिध्या सर्व्वत्र शृद्ध्यविनीयेत्या दिना निपातः ॥ ५८ ॥

वसानां वल्कले शुद्धे विपूयैः कृतमेखलां। श्यामा मञ्जनपिण्डाभां दण्डिनीमजिनास्तरां ॥ ६० ॥

ज०म० वसानामित्यादि। वसानां परिदधानां वल्कले विपूयैर्मुञ्जैः कृतमेखलां कृतकटिसूत्रां यद्यपि विपूर्व्वस्य पवतेर्विपूयइत्यादि ना मुञ्जे निपातितं तथापि मुञ्जानामनुपहतत्वं ज्ञापयितुं विपू यैरिति विशेषणं पवित्रैरित्यर्थः मुञ्जशब्दस्तदानीं सामान्यमाह विपूयैरित्युक्ते मुञ्जैरित्युपादानमनर्थकं एवं कृत्वा पाठान्तरमु च्यते वसानां वल्कले शुद्धे विपूयैरिति श्यामां कृष्णां श्यायोम इति निष्ठायां अंजनपिण्डस्येवाभा यस्यामस्तीति तां कृष्णां

दण्डिनीं गृहीतदण्डां आसीर्ष्यतइति आस्तरः छदोरप् अजिनमास्तरउत्तरासंगोयस्यास्तामजिनास्तरां ॥ ६० ॥

वसानामित्यादि। इहा तामनुचद्रामइति हतीयश्लोकेनान्वयः शुद्धं वल्कलद्वयं वसानां वसलकस्तृतौ स्तृतिराच्छादनं विपूयैर्मुञ्जैः कृतमेखलां कृतकटीसूत्रां पूञ्शोधे पूर्व्वनिपातः शुद्धे इत्यत्र मुञ्जैरिति पाठे विपूयैरित्यस्य पवित्रैरित्यर्थः यद्यपि विपूयशब्दो मुञ्जे रूढस्तथाप्यन्वयवशात् पवित्रार्थः क्षामां व्रतेन क्षीणां वैशुध्यचोमकवदिति कस्य मः अञ्जनपिण्डवदाभा यस्यास्तां तद्वदाभातीति वा दण्डिनीं पालाशदण्डवतीं अजिनमास्तरः शयनी यस्याः आस्तरउत्तरासङ्गइति केचित् ॥ ६० ॥ भ०

प्रगृह्यपदवत् साध्वीं स्पष्टरूपामविक्रियां। अगृह्यां वीतकामत्वाद्देवगृह्यामनिन्दितां ॥६१ ॥

प्रगृह्येत्यादि। अविक्रियामजातविकारां अतएव स्पष्टरूपां एवञ्च साध्वीं साधुचरितां कमिव प्रगृह्यपदवत् यस्य पदस्य प्रगृह्यसंज्ञा तत्पदं प्रगृह्यं प्रत्यपिभ्यांग्रहेरित्यनुवृत्तौ पदास्वैरित्यादिना प्रपूर्व्वाद्ग्रहेः पदेऽभिधेये क्यप् यथा तत्पदमविकाररूपत्वात् स्पष्टं साधु च अतप्रगृह्या अचीति प्रकृतिभावेन स्वरसन्ध्यभावादित्यर्थः कथमजातविक्रियेति चेदाह अगृह्यां ग्रहेः स्वैरविषये क्यप् अगृह्यामस्वैरिणीमस्वतन्त्रा न भवतीत्यर्थः कस्मात् वीतरागत्वात् वीतरागाप्यस्वतन्त्रा भवति देवगृह्याममरपक्षांपक्षविषये क्यप् एवं चानिन्दितामगर्हितां ॥ ६१ ॥ ज०म०

भ० प्रगृह्येत्यादि। नास्ति विक्रिया रागादिविकारो यस्यास्तामविक्रियां स्पष्टं अकौटिल्यं व्यक्तं रूपं स्वभावो यस्यास्तां स्पष्टरूपां साध्वीं साधुचरितां अतएव प्रगृह्यपदतुल्यां यत्र नाजोऽन्तोऽनाङिमुखेत्यादिना सन्धिनिषेधः क्रियते तत्र पाणिनिना प्रगृह्यसंज्ञा कृता गृह्यविनीयेत्यादिना पदादौ गृह्यं निपातितं पदादिविषयत्तूदाहरणेऽभिहितः तथाहि प्रगृह्यं पदमित्यादि तदपि पदं विकाररहितं अतएव स्पष्टरूपं दीर्घादिविकारे सत्येव रूपस्यान्यथाभावात् साधु च भवति अर्थप्रतिपादकत्वं धर्म्मजनकत्वं व्याकरणव्युत्पाद्यत्वं वा पदस्य साधुत्वं अविक्रियत्वे हेतुमाह अगृह्यां स्वतन्त्रां विगतकामत्वात् सरागा हि भोगार्थं परतन्त्रा भवति गृह्या परतन्त्रा पश्चान्नञ्समासः देवगृह्यां देववर्ग्यां देवपक्षपातिनीं अतएवानिन्दितां वीतकामत्वादित्यत्र पूर्व्वं स्त्रीत्वविवक्षया त्वप्रत्ययः स्त्रीत्वविवक्षा चेत् पुंवत्स्युक्तइति पुम्वद्भावः ॥ ६१ ॥

धर्म्मकृत्यरतां नित्यमवृष्यफलभोजनां। दृष्ट्वा ताममुचद्रामो युग्यायातइव श्रमं ॥ ६२ ॥

ज०म० धर्म्मकृत्यरतामित्यादि। पुण्यकर्म्मरतां नित्यं अवृष्यफलभोजनां वृष्याणीन्द्रियविकारनिमित्तानि फलानि भोजनं यस्याः पश्चान्नञ्समासः विभाषाकृवृषोरिति क्यप् दृष्ट्वा तां तथाविधां श्रमममुचत् मुक्तवान् तद्दर्शनाह्लादितत्वात् युग्यायातइव वाहनं प्राप्तइव क्यप् युग्यञ्च पत्रइति निपातितं ॥ ६२ ॥

धर्म्मेत्यादि। नित्यमविरतं धर्म्मस्य कृत्ये करणे रतां वृष्यं भ०
वैद्यशास्त्रोक्तवीर्य्यकरं विकारोत्पादकं तद्भिन्नं फलमेव भोजनं
यस्याः भुज्यतेऽनेनेति वेति घञ्जलनटोऽधेइति अनट् तेन भोजनं
यस्यादिति वा कृञ्जुदकृतौ वृषुसेचने आभ्यां कृवृषमृजेत्यादिना
वा क्यप् एवम्भूतां तां शवरीं दृष्ट्वा चित्तप्रसन्नतया रामः श्रमम
मुचत् त्यक्तवान् मुच्लृषपञ्चोमोचे लृदित्वात् ङः युग्येन वाहने
नाम्बादिना आगत इव गृह्यविनीयेत्यादिना युजः क्यपि युग्यं नि
पातितं॥ ६२॥

सतामूचेऽथ कच्चित्त्वममावास्यासमुन्नये। पितॄणां
कुरुषे कार्य्यमवाच्यैः स्वादुभिः फलैः॥ ६३॥

सइत्यादि। अथानन्तरं त्यक्तश्रमः स रामस्तां शवरीमूचे ज०भ०
उक्तवान् कच्चित् किं त्वं अमावास्यायाः संप्राप्तौ पितॄणां कार्य्यं तत्र
गीत्यर्थं ब्राह्मणभोजनं स्वादुभिर्मिष्टैः फलैः अवाच्यैरवचनीयैः
कुरुषे अमा सह वसतोऽस्यां चन्द्रार्काविति अमापूर्व्वकवसधातोः
क्यप्॥ ६३॥

सतामित्यादि। अथ श्रमत्यागानन्तरं स रामस्तां शवरीं भ०
ऊचे कथितवान् ब्रुञ्व्यक्तौ वचोऽरे कच्चिदिति कामप्रवेदने
ऽव्ययं त्वं फलैरमावास्यायास्तिथेः समुन्नये सम्प्राप्तौ पितॄणां सम्ब
न्धि कार्य्यं कुरुषे कीदृशैः फलैः अवाच्यैः अनिन्द्यैः स्वादुभिर्मिष्टैः
अमा सहार्थेऽव्ययं सहवसतोऽस्यां चन्द्रार्कावित्यमावास्या यदा

श्रमा नाम रवेरश्मिः सूर्य्यलोके प्रतिष्ठिता। तस्यां सोमोवसत्यस्मा ममावास्या प्रकीर्त्तिता। पाय्यधाय्येत्यादिना ण्यति निपातः अवृ षस्त्रजेत्यस्याप्रवृत्तिपक्षे हलोरित्यामेरिति ण्यत् वाच्यं वचनीयं नित्यमेव रूढं भुजवचेति ण्यति कत्वनिषेधः॥ ६३॥

अवश्यपाव्यं पवसे कच्चित्त्वं देवभाग्घविः। आसाव्यमध्वरे सोमं द्विजैः कच्चिन्नमस्यसि॥ ६४॥

ज०म० अवश्यपाव्यमित्यादि। देवभाक् देवान् भजतइति भजोण्विः तद्धविः कच्चित् किं पवसे पवित्रीकरोषि मन्त्रादिना झयोहोऽन्य तरस्यामिति हकारस्य पूर्व्वसवर्णः पूञ्पवनइति भौवादिकः की दृशमवश्यपाव्यमवश्यभावेन पावयितव्यमित्यर्थः ओरावश्यके ण्यत् मयूरव्यंसकादित्वात्समासः लुम्पेदवश्यमःकृत्येतुंकाममनसो रपीति मकारलोपः सोममौषधिविशेषं आसाव्यमभिषवार्हं अध्व रे यज्ञे द्विजैः सह कच्चित्त्वं नमस्यसि आसुयुवपीति यत्॥ ६४॥

भ० अवेत्यादि। कच्चित्त्वं देवभाग्घविर्द्रव्यं पवसे अग्निसंस्कारादिना पवित्रीकरोषि देवाय दातुमित्यर्थात् देवान् भजतइति ढाङ्क्ष वहसहोविण प्रहोस्यपादेति हस्य घत्वं र्घ्वः कीदृशं अवश्यपाव्यं अवश्यभावेन पवितुं पवित्रीकर्त्तुं योग्यं पूङ्ग्रीधेण्यणोरावश्यक इति ण्यण् ञित्यन्तेजुक्तोरिति त्रिः ओदौतोऽव्यत्तद्धयकाव्या इति अव्यद्भावात् अलायवायावइति आवादेशः क्रियाविशेष णस्य द्वितीयान्तत्वात् तत्पुरुषः समासः घादित्वमपूर्व्वदानांच

संज्ञा इति सामान्योक्तेः मयूरव्यंसकादित्वात् समासइति न्यासः सम् तुम्मनःकामेऽवश्यमित्यादिना मलोपः कच्चित् त्वं द्विजैः सार्द्धं सोमं लताविशेषं नमस्यसि नमःकरोषीति नमस्तपोवरिव इति क्यः सोमं किम्भूतं अध्वरे यागे आसाव्यं अभिषवनीयं सन्धा नाहे इसृष्यासोरिति ण्यण् द्विजैरासाव्यमिति वान्वयः॥ ६४॥

आचाम्यं सन्ध्ययोः कच्चित् सम्यक्तेन प्रहीयते।
कच्चिदग्निमिवानाय्यं काले संमन्यसेऽतिथिं॥ ६५॥

आचाम्यमित्यादि। प्रभातेऽपराह्णे च सन्ध्ययोर्यदाचाम्य ज०म० मुपस्पर्शनं पूर्व्ववत् ण्यत् कच्चित्सम्यक् यथावत्तव तत्र न प्रहीयते काले आतिथ्योक्तकाले कच्चित् संमन्यसे पूजयसि यथा अग्निं आनाय्यम् मन्यसे तद्वत् आनाय्योऽनित्यइति नयतेराङ्पूर्व्वस्य ण्यत् आयादेशौ निपात्येते॥ ६५॥

आचाम्यमित्यादि। कच्चित्ते तव सायं प्रातःसन्ध्ययोः सम्यगा भ० चाम्यं आचमनं स्वयमेव न प्रहीयते न भ्रश्यते कर्म्मकर्त्तरि प्रत्ययः पूश्कषश्चेत्यादौ चमादिवर्ज्जनात् इसन्तत्वाद्‌ण्यण् जनवधः सेमइत्यादौ आचमवर्ज्जनात्‌ वृद्धिः कच्चित् त्वं काले आतिथ्योचिते अतिथिं सम्मन्यसे पूजयसि यथा आनाय्यमग्निं दक्षिणाग्निं सम्मन्यसे तद्वत् आङ्पूर्व्वस्य णीञोण्यच्च पाय्यधाय्येत्यादिना निपातः॥ ६५॥

न प्रणाय्योजनः कश्चिन्निकाय्यं तेऽधितिष्ठति। देव कार्य्यविघाताय धर्म्मद्रोही महोदये॥ ६६॥

ज०म० नप्रणाय्यइत्यादि। महानुदयः स्वर्गापवर्गाणां यस्याः सा तथा हे महोदये देवकार्य्यविघाताय देवानहं हनिष्यामीति भाववचनाच्चेति भविष्यति घञ् तुमर्थाच्चभाववचनादिति चतुर्थी प्रणाय्योऽसम्मतो जनः प्रणाय्योऽसम्मताविति निपातितं कश्चित् निकाय्यं गृहं ते तव नाधितिष्ठते नाधिवसति पाय्येत्यादिना निवासे चिनोतेर्निपूर्व्वात् ण्यदायादेश्चो आदेः कुत्वञ्च अधिशीङ्स्थासांकर्म्मेति कर्म्म धर्म्मद्रोही धर्म्मद्रोहशीलः॥ ६६ ॥

भ० नेत्यादि। हे महोदये कश्चित् प्रणाय्योऽसम्मतोजनश्चौरादिस्ते तव निकाय्यं निवासं देवकार्य्यविघातार्थं नाधितिष्ठति धर्म्मद्रोही धर्म्मद्रोहशीलः धर्म्माय द्रुह्यतीति ग्रहादिलाणिन् धर्म्मद्रोहोऽस्यास्तीति वा प्रपूर्व्वणीञोण्यणि प्रणाय्यः निपूर्व्वचिनोतेर्ण्यणि निकाय्यः द्वौ पूर्व्वेण निपात्येते कर्म्मक्रियेत्यादिना निकाय्यस्याधारत्वे कर्म्मत्वं महानुदयः स्वर्गापवर्गफललक्षणज्ज्ञानमेव वा यस्यास्तस्याः सम्बोधनं महोदयः कान्यकुब्जेस्वाधिपत्यापवर्गयोरिति विश्वदर्शनात् ततोऽर्शआदित्वादद्इत्यन्ये विघातायेति हनो घञि खेर्हाघोऽञ्णिति चेति घः हनस्तङ्॥ ६६ ॥

कुण्डपाय्यवतां कच्चिदग्निचित्यावतां तथा। कथाभीरमसे नित्यमुपचाय्यवतां शुभे॥ ६७॥

इति कृत्याः।

कुण्डपाय्यवतामित्यादि। कुण्डेन पीयते ऽत्र क्रतौ कुण्डपाय्यः क्रतुः क्रतौ कुण्डपाय्यसंचाय्याविति निपातितं कश्चित्कथाभीरमसे इञ्लोपइति दीर्घः तथाग्निचित्यावतां आहिताग्निकानां कथाभी रमसे चित्याग्निचित्येचेति निपात्यतेऽग्निचयनमग्निचित्या भावे क्यप् तुक् तद्वतां तथोपचाय्यवतां उपचीयते इत्युपचाय्योऽग्निः अग्नौ परिचाय्येति निपातितः उपपूर्व्वाच्चिनोतेर्ण्यदायादेशौ तद्वतां कथाभीरमसे शुभे कच्चापि। इति कृत्याधिकारः॥६७॥ ज०म०

कुण्डेत्यादि। हे शुभे कच्चापि कश्चित् त्वं कुण्डपाय्यवतां तथा अग्निचित्यावतां तथा उपचाय्यवतां कथाभिर्नित्यं रमसे क्रीडसि कुण्डैः पीयतेऽत्र सोमइति कुण्डपाय्यः क्रतुविशेषः पाय्यधाय्ये त्यादिना निपातः संचीयते येषां इति सोऽत्यादयस्तत्कृत्यः अग्नेश्चयनं राशीभावइत्यग्निचित्या पूर्व्ववन्निपातः उपचीयतइत्युपचाय्यो ऽग्निः पूर्व्ववन्निपातः अग्निविशेषोपचाय्यविशेषाणां। इति कृत्याः॥६७॥ भ०

## अथ प्रकीर्णकाः।

वर्द्धते ते तपोभीरु व्यशेषाविघ्ननायकान्। अजै षीः कामसंमोहौ संप्राण्यापिनयेन वा॥६८॥

अतःपरं प्रकीर्णकाः। वर्द्धतइत्यादि हे भीरु कातरचित्ते तव तपोवर्द्धते तस्य च ये विघ्नास्तेषां ये नायकाः प्रणेतारस्तान् ज०म०

ज०म० व्यजेष्ठाः जितवत्यसि लुङि विपराभ्यांजेरित्यात्मनेपदं कामसम्मो हो कच्चिदजैषीः जितवत्यसि सिचि वृद्धिः विनयेन वा संप्राप्थाः संप्राप्तासि कर्म्मणि लुङ् झलोझलीति सिचोलोपः अत्रानुकामिति कच्चिदिति ग्राह्यं॥ ६८॥

अथ प्रकीर्णकाः।

भ० वर्द्धतइत्यादि कच्चिदित्यत्रानुषञ्जनीयं हे भीरु कच्चित्ते तव तपोवर्द्धते कच्चित् त्वं तपसो विघ्नानां नायकान् प्रणेतॄन् व्यजेष्ठा अभिभूतवत्यसि विपराजीति मं कच्चित् त्वं काममनङ्गविकारं सम्मोहमविद्याञ्च अजैषीः प्रजवद्देति ञिः कच्चिद्विनयेनापि त्वं समाप्थाः समाप्तासि कर्म्मणि ढी सम्बोधनमहिम्नार्थावगमात् कच्चिदित्यस्यानुषङ्गं केचिन्नेच्छन्ति॥ ६८॥

नायस्यसि तपस्यन्ती गुरून् सम्यगतूतुषः। यमा न्नोदविजिष्ठास्त्वं निजाय तपसेऽतुषः॥ ६९॥

ज०म० नायस्यसीत्यादि। तपस्यन्ती तपश्चरन्ती कच्चिन्नायस्यसि न खिद्यसे तपश्चरणशालीभूतेत्यर्थः कर्म्मणो रोमन्थेति क्यङ् तपसः परस्मैपदञ्च गुरून् आचार्य्यादीन् सम्यक् यथावदनुवृत्त्याऽतू तुषः तोषितवत्यसि तुषेर्ण्यन्तस्य लुङि रूपं चङि णिलोपादि यमा न्मृत्योर्नोदविजिष्ठाः नाभैषीः पुण्यकृतां नोमृत्युभयमित्यर्थः ओविजेरात्मनेपदं लुङि सिचइट् विजइति सिचोङित्वेन गुणः निजायात्मीयाय अतुषः तुष्टवत्यसि॥ ६९॥

नार्येत्यादि। अत्रापि कच्चिदनुषज्यते तपस्विनी तपःकुर्व्वती भ० त्वं कच्चिन्नायस्यसि न खिद्यसे अत्यन्ताभ्यासात् नमस्तपोवरिवदिति क्यः इयंस्तु यतने कच्चित्त्वं गुरूनाचार्य्यादीन् सम्यगद्भुतुषं तोषितवत्यसि तुषिस्थैभ्रितुष्टौ व्यन्तादङ् व्यस्तुङःस्वःस्वः सन्वदिति स्वेर्घः कच्चित्त्वं यमान्न उद्विजिष्ठाः नाभैषीः पुण्यवतां मृत्योर्भयं नास्तीति भावः यमइन्द्रियनिग्रहे वा कियत्कालं यमः कार्य्यइति भयं दूरीभूतमित्यर्थः विजक्तोभीभीकर्म्मे विजेर्नुर्नेमीत्यगुणत्वं कच्चित्त्वं निजाय स्वकीयाय तपसे अतुषः तुष्टासि अद्धावती अपिर्द्धिलंशङ्काशून्या वासीत्यर्थः पुषादित्वात् ङः ॥ ६९ ॥

अथार्घ्यं मधुपर्काद्यमुपनीयादरादसौ। अर्च्चयित्वा फलैरर्च्चौ सर्व्वत्राख्यदनामयं॥ ७०॥

इति प्रकीर्णकाः।

अर्थेत्यादि। अथानंतरमसौ शवरी अर्घ्यमर्घार्थं पादार्घाभ्या ज०म० चेति यत् मधुपर्काद्यं मधुपर्कमिश्रमुदकं मधुपर्कः तदाद्यं आदौ भवमाद्यं तदुपनीयादरात् फलैरर्च्चयित्वा अर्च्चौ अर्च्चनार्हौ एतत् रामलक्ष्मणौ सर्व्वलोकेषु अनामयं कल्याणं आख्यत्कथितवती अस्यतीत्यङ्। इति प्रकीर्णकाः॥ ७०॥

अर्थेत्यादि। एवं अस्मानन्तरं असौ शवरी मधुपर्केणाढ्यं भ० सहितं अर्घ्यमुपनीय अर्च्चौ अर्च्चार्हौ रामलक्ष्मणौ फलैरादरात् अर्च्चयित्वा सर्व्वत्र पूर्व्वपृष्टेष्वर्थेषु अनामयं कुशलं आख्यत उक्त

वती वत्सलस्वेति ङः मूर्ते पूजाविधावर्घः अर्घंशब्दात्तदर्थे विकारत्तंघेति यः मधुपर्काद्यमिति पाठे आदौ भवमाद्यः मधुपर्कश्चाद्यीयश्चेत्यर्घ्यविशेषणं यद्वा आदिरेवाद्यः अर्घ्यमधुपर्कादि पूजोपहारश्चोपनीयेत्यर्थः आमयशब्दोलक्षणया अनिष्टमात्रे प्रयुज्यते। इति प्रकीर्णकाः॥ ७०॥

## अतःपरं कृदधिकारः।

सख्यस्य तव सुग्रीवः कारकः कपिनन्दनः। द्रुतं
द्रष्टासि मैथिल्याः सैवमुक्त्वातिरोऽभवत्॥ ७१॥

ज०म० अथ कृदधिकारमाह। कृत्यानां तदन्तर्भावेऽपि भावकर्मणोः कृत्या इति विशेषप्रतिपादनार्थः पृथगधिकारः तत्रोपपदं सप्तमीस्थमित्यादिना एतदप्यधिक्रियते तान् इतोदर्शयन्नाह सख्यस्येत्यादि सा शबरी तिरोऽभवदन्तर्भूता एवमुक्त्वा किं तदित्याह तव सख्यस्य सखित्वस्य सख्युर्यः कर्मषष्ठी कारकः सुग्रीवः ण्वुल्तृचाविति ण्वुल् त्वया सह मैत्रीं करिष्यति कपिनन्दनः कपीनां नन्दयिता नन्द्यादिभ्यो ल्युः कृद्योगे षष्ठी भवतीति कर्मणि षट् ॥ ७१॥

भ० अथ कृदधिकारः। यद्यपि कृत्यानां कृत्त्वमस्ति तथापि भावकर्मणोस्तद्विधानमिति ख्यापनाय पृथक् प्रदर्श्य कर्त्तरि शेषानाह तत्र निरुपपदसोपपदयोर्निरुपपदं प्रयोगबाहुल्यादादौ दर्शयति सख्यस्येत्यादि। सा शबरी एवमुक्त्वा तिरोऽभवत् अन्त

हिंता किमादित्याह सुग्रीवस्वव सख्यस्य कारकः सख्यं करिष्यति सख्युर्भावः कर्म्म वा सख्यं विकारसंघेति यः इचेद्गतीत्यादिना कर्मणि षष्ठी कपीनां नन्दयिता कपेः पुत्रोवा ग्रहनन्दिपचादेरिति अनः ततोद्रुतं मैथिल्याद्रष्टाऽसि प्रेक्षकोभविष्यसि अस्तेर्भविष्यत्सामीप्ये की अभिधानात् असीति युष्मदर्थे अव्ययमिति वा हषकोधे इत्यादिषु कालस्यानिर्द्देशात् त्रिष्वपि कालेषु हणादयोभवन्तीति बोध्यं इश्चेर्वद्रोऽकिदिति रः॥ ७१॥

नन्दनानि मुनीन्द्राणां रमणानि वनौकसां। वनानि भेजतुर्व्वीरौ ततः पाम्पानि राघवौ॥ ७२॥

नन्दनानीत्यादि। ततस्तस्मादनन्तरं वीरौ राघवौ रामलक्ष्मणौ वनानि भेजतुः सेवितवन्तौ एत्वाभ्यासलोपौ इफलेत्यादिना पाम्पानीति पम्पाया अदूरं अदूरभवमेष्वण् मुनीन्द्राणां नन्दनानि प्रमोदकारीणि वनौकसां वनेचराणां उच्समवाये असादीणादिकोऽसुन् पृषादरादित्वाद्वर्णविपर्य्ययः तेषां रमणानि रतिजनकानि नन्द्यादित्वात् ल्युः कर्म्मणि षष्ठी॥ ७२॥ ज०म

नन्दनानीत्यादि। ततोऽनन्तरं राघवौ पाम्पानि वनानि भेजतुः सेवितवन्तौ जग्मतुरित्यर्थः भजञोभागसेवयोः तृफलभजत्रपेति अतएत्वं खिलोपश्च पम्पानामसरःसम्बन्धीनि पम्पाया अदूरभवानीत्यर्थे वा विकारसंघेत्यादिना ष्णः मुनीन्द्राणां नन्दनानि प्रमोदकानि वनौकसां वनवासिनां रमणानि क्रीडाजनकानि उभयत्र ग्रहनन्दिपचादेरिति अनः कर्म्मणि षष्ठी॥ ७२॥ भ०

भृङ्गालीकोकिलक्रुड्भिर्व्वाशनैः पश्य लक्ष्मण। रोच
नैर्भूषितां पम्पामस्माकं हृदयाविधं ॥ ७३ ॥

जा०म० भृङ्गालीत्यादि। हे लक्ष्मण पम्पां पश्य अस्माकं हृदयाविधं हृद
यं विध्यतीति ग्रहिज्यादिना संप्रसारणं नहिवृतीति दीर्घः भूषितां
कैर्भृङ्गालीभिः भ्रमरपंक्तिभिः कोकिलैः क्रुङ्भिश्च वाशनैः कूजद्भी
रोचनैः शोभनैः क्रुङिति ऋत्विगादिना क्विन् निपातनसामर्थ्याद
नुनासिकलोपाभावः संयोगाच्च लोपः क्विन्प्रत्ययश्चेति कुत्वं
॥ ७३ ॥

भ० भृङ्गेत्यादि। रामइत्युवाचेत्यर्थाद्गम्यते हे लक्ष्मण पम्पां
पश्य कीदृशीं भृङ्गालीभिर्भ्रमरपङ्क्तिभिः कोकिलैः क्रुङ्भिः क्रौ
ञ्चैश्च भूषितां क्रुञ्ठगत्यां ऋत्विगित्यादिना विच् चकारेत्त्वं क्विप्
संशयनिवारणार्थं नतु अव्ययार्थमिति बोध्यं विवितिपाठइत्येके
ऋत्विगित्यादौ क्रुञ्चः पृथक्पाठात् प्राक्कङ् सोर्नुः अपेत्तमनोरि
ति ङस्यान्तस्य लुप् कीदृशैः वाशनैः कूजद्भिः वाशृङशब्दे रोचनैः
शोभमानैः उभयत्र नन्द्यादित्वाद्नः पुनः किम्भूतां अस्माकं हृद
याविधं चेतः पीडयन्तीं हृदयं विध्यतीति क्विप् ग्रहस्वपाद्योरि
ति जिः वीरुद्रोधङ्क्काविति दीर्घनिर्द्देशात् क्वचित् क्विबन्ते पूर्व्वप
दस्य दीर्घत्वमिति दीर्घः आङ्पूर्व्वस्य रूपं वा ॥ ७३ ॥

परिभावीनि ताराणां पश्य मन्थीनि चेतसां। उद्भा
सीनि जलेजानि दुन्वन्त्यदयितं जनं ॥ ७४ ॥

परिभावीनीत्यादि। जलेजानि पद्मानि पश्य तत्पुरुषे क्रती त्यादिनाऽलुक् सप्तम्याः उद्भासीनि भासमानानि अतएव तारा णां परिभावीनि तिरस्कारीणि ततश्चेतसां मन्थीनि पीडाकारीणि अतोजनमदयितं प्रियारहितं दुन्वन्ति टुदुउपतापे सौवादिकः मन्थोद्भासपरिभूभ्यो ग्रहादित्वाणिनिः ॥ ७४ ॥ ज॰म॰

परीत्यादि। हे लक्ष्मण जलेजानि पद्मानि पश्य हनजनादि ति डः सरसिजमित्युदाहरणेन क्वचित् समासे सप्तम्या अलुगिति सूचितं तत्पुरुषेक्लतिवहुलं सप्तम्या अलुगिति परः कीदृशानि उद्भासीनि शोभमानानि अतएव ताराणां परिभावीनि तिरस्का रकाणि समानीत्यर्थोवा ढघेक्लत्यस्येति कर्म्मणि षष्ठी नोऽचोऽन्त रदुर्गेरित्यादौ भूवर्ज्जनात् न णत्वं किन्तु धुर्णोऽह्नाम्नइत्यादिना समासाद्विहितेन स्वादिना सहितत्वात् विकल्पेन णत्वं नोऽचोऽन्त रित्यादिना उपसर्गमात्राश्रयस्यैव णत्वनिषेधात् अतएव चेतसां मन्थीनि पीडकानि सर्व्वत्र ग्रहादित्वाणिन् अतएव अदयितं प्रि यारहितं मादृशं जनं दुन्वन्ति पीडयन्ति टुदुउपतापे स्वतरि स्वादित्वात् नुः ॥ ७४ ॥ भ॰

सर्व्वत्र दयिताधीनं सुव्यक्तं रामणीयकं। येन जातं प्रियापाये कद्वदं हंसकोकिलं ॥ ७५ ॥

सर्व्वत्रेत्यादि। हे लक्ष्मण सर्व्वत्र यत्किञ्चिद्रामणीयकं रमणी यस्य भावः योपधाद्वुञ् तत्सर्व्वं दयिताधीनं दयितायत्तं अखण्ड ज॰म॰

चेत्यादिना खः सुव्यक्तं स्पष्टं कुतः येन प्रियायाश्चभाव सति हंसकोकिलं हंसाश्च कोकिलाश्चेति प्रकृतित्वात् द्वन्द्वैकत्वं कदर्द कुत्सितप्रलपितं वदतीति पचाद्यच् कुत्सितं वदतीति रथवदयो श्चेति कोः कत् दयितायां सत्यां मधुरप्रलपितमिदमिति ॥ ७५ ॥

भ० सर्व्वेत्यादि। हे लक्ष्मण रामणीयकं यत्किञ्चित् रमणीयत्वं तत्सर्व्वञ्च दयिताधीनं प्रियानिमित्तकमिति सुव्यक्तं स्पष्टमेव कथमित्याह येन हेतुना प्रियायाश्चपाये विरहे सति हंसको किलमपि कदर्द कुत्सितवादिजातं यदा सीतासीत्तदा मधुरा लापीदमासीदिति भावः कुत्सितं वदतीति कत्कचत्रिरथवद इति कदादेशः रमणीयस्य भावइति विकारसंघेति कण् हंसाश्च कोकिलाश्चेति समाहारद्वन्द्वः ॥ ७५ ॥

पक्षिभिर्वितुदैर्यूनां शाखिभिः कुसुमोत्किरैः। अज्ञो येयस्य वा नास्ति प्रियाप्रम्लोभवेन्न सः ॥ ७६ ॥

ज०म० पक्षिभिरित्यादि। तुददिंशानादरयोरित्यस्मादिगुपधः कः यूनां वितुदैः हिंसकैः पक्षिभिः शाखिभिर्वृक्षैश्च शीतादिना दिनैः कुसुमोत्किरैः उत्किरन्तीत्युत्किराः पूर्व्ववत् कः कुसुमा नामुत्किराः कर्तृयोगलक्षणां षष्ठीं विधाय समासः तैर्हेतुभूतैः करणभूतैर्वा सप्रम्लान भवेत् प्रकर्षेण म्लायते प्रम्लः आतश्चोप सर्गेकः योऽज्ञः गुणदोषानभिज्ञः पूर्व्ववत्कः यस्य प्रियानास्ति तस्य प्रयोजनाभावः सर्व्वत्र विवेकित्वात् प्रीणातीति प्रियः इगुप धेति कः ॥ ७६ ॥

पचिभिरित्यादि। पचिभिः शाखिभिश्च सएव जनः प्रम्लोम्ना भ०
निमान्न भवति योऽजनोऽज्ञोगुणदोषानभिज्ञोभवति यस्य वा आन
तोऽपि प्रियोजनोनास्ति सर्व्वत्र विरक्तत्वात् नलस्मद्विधोऽभिज्ञः
प्रियानुरक्तस्चेति भावः पचिभिः शाखिभिश्च कीदृशैः यूनामर्थाद्वि
रहिणां विद्दैर्हिंसकैः शाखिभिः कीदृशैः कुसुमोत्किरैः पुष्पवि
क्षेपकैः इदुज्झधिर्नादरेष चकाराद्धिंसायां ककविक्षेपे शागवा
धने प्रोजप्रीतौ एभ्यः क्षगृशाप्रीजुकइति कः ठघेत्ततीति कर्म्मणि
षष्ठी प्रम्लायतीति प्रम्लः एचोऽभित्यादइत्यच अभितीति विषय
सप्तमी इनजनादिति ङः॥ ७६॥

ध्वनीनामुद्भ्रमैरेभिर्म्मधूनामुद्धयैर्भृशं। आजिघ्रैः
पुष्पगन्धानां पतङ्गैर्ग्लपिताश्वयं॥ ७७॥

ध्वनीनामित्यादि। पतङ्गैर्भ्रमरैर्ग्लपिताः पीडिताश्वयं ग्लाम्ना जं०म०
ग्लुवमांचेति मित्वात् ह्रस्वः पतेरङ्गच्पचिपोत्यौणादिकः ध्वनी
नामुद्भ्रमैः ध्वनीन् कुर्व्वद्भिः भाधातोः पाघ्रेति शः पाघ्राध्मेति धमा
देशः मधूनामुद्धयैःमधूनि पुनःपुनः पिबद्भिः धेट्पानइत्यस्माच्या
देशः आजिघ्रैः पुष्पगन्धानां पुष्पगन्धान् गृह्णद्भिः पाघ्राध्मेति शः
कृद्योगलक्षणा षष्ठी॥ ७७॥

ध्वनीनामित्यादि। एभिः पतङ्गैर्वयं ग्लपिताः पीडिताः विशे भ०
षेण मक्षिका भ्रमरैरिति गम्यते एभिरित्यङ्गुलीनिर्द्देशत्वेन वा
कीदृशैः ध्वनीनां गुञ्जितानां उद्भ्रमैः कारकैः मधूनां उद्धयैः पा

मकारिभिः पुष्पगन्धानां घ्राणिभिः षट्पदकारिभिः भृशमत्यर्थं मिति सर्व्वत्र क्रियाविशेषणं घ्राणध्माग्नियुतौ ध्वनौ अनेकार्थत्वा दत्र करोत्यर्थः धेटपाने घ्रागन्धपदणे एभ्योधेटदृशपाघ्राध्माः शइति शित्वात् खादानपाघ्रेत्यादिना धाधम घ्राजिघ्र पतङ्गः पक्षिसूर्य्ययोः पतोगच्छतीति शरूंजघोरङ्गमइत्यादिना खे निपा तः ध्यायतेर्ध्यंगास्य ध्वलक्षणछलध्वेति वा ह्रस्वः ॥ ७७ ॥

धारयैः कुसुमोर्म्मीणां पारयैर्बाधितुं जनान्। श्रा खिभिर्हा हताभूयोहृदयानामुदेजयैः॥ ७८॥

ज०म० धारयैरित्यादि। हा कष्टं श्राखिभिर्दुर्म्मैर्भूयोऽत्यर्थं वयं हताः कामशराणां धारणात् तदेवाह कुसुमानां ये उर्म्मयः भङ्गाः प्रकाशावा तान् धारयद्भिः उर्म्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाश योः। उत्कण्ठावस्त्रसंकोचवोधेषु च प्रकीर्त्तितइति विश्वः समूहे ऽपीति श्रतएव जनान् मद्विधान् बाधितुं पारयद्भिः यतो हृदया नामुदेजयैरुत्कण्ठाजनकैरिति भावः धृञ्धारणे पृपालनपूरण योः एजृकम्पने च एभ्योणिजन्तेभ्यः अनुपसर्गाल्लिम्पविन्देत्यादि ना शः उदेजीति सूत्रे निर्देशात् अनुपसर्गादिति न निषेधः॥ ७८॥

भ० धारयैरित्यादि। हा कष्टं श्राखिभिर्दूतैर्व्वयं भूयोऽत्यर्थं हताः कीदृशैः कुसुमानामुर्म्मयः प्रकाशाः संघावा तेषां धारयैः धारकैः श्रतएव जनान् बाधितुं पीडयितुं पारयैः पारयद्भिः यतो हृदयानामुदेजयैः उत्कम्पकैः धृञवस्थितौ पृलिपालनपूर

णयोः कृत्वानोणुदेत्यादिः दीर्घान्तः क्र्यादिकस्य एणकर्म्मे तत्पूर्व्वः एभ्यः प्रेरणान्यन्तेभ्यः साहिवातीत्यादिना अः पारत्कत्त्वत् इत्यस्य न ग्रहणं प्रेरणान्यन्तैः साहचर्यात् अनेरिति प्रतिषेधेऽपि उद्देनेः अः कन्तद्धितसमासानामभिधानं नियामकमित्युक्तेः उर्म्मिस्तरङ्गे पीडायां वेगे सङ्गप्रकाशयोः। उत्कण्ठावस्यसङ्कोचकोपयोरपि कीर्त्तितेति विश्वः क्रमूहिति जयमङ्गला ॥ ७८ ॥

दर्दैर्दुःखस्य माहम्या धायैरामोदमुत्तमं। लिम्पैरिव तनोर्व्वातैस्चेतयः स्यात्ज्वलोन कः ॥ ७९ ॥

दर्दैरित्यादि। वातैर्दर्दैः दुःखस्य दुःखं ददद्भिः केभ्योमाहम्यः अस्माद्वग्रेभ्योविरहिभ्यः त्यदादिषुद्दशइति क्विन् दृङ्कवतुश्चेत्याकारः धायैरामोदमुत्तमं आमोदं मिथाघ्राणेन हर्षं यावत् विरहिभ्योदत्तस्य दुःखस्य धायैः पोषकैरित्यर्थः उत्तममिति क्रियाविशेषणं उत्तममामोदं धायैः कुसुमानां परिमलं धारयद्भिरिति व्याख्याने अनित्यत्वात् कल्पयोगे कर्म्मणष्ठभावः लिम्पैरिव तनोः शरीरं लिम्पद्भिरिव वातैर्हेतुभिः कोनाम विरहाग्निना चस्चेतयमानः ज्वालाज्वलत्रग्निरिव न स्यात् किन्तु भवेदेवेति भावः दर्दैर्धायैरिति ह्याद्वधेति आकारान्तलक्षणे शे प्राप्ते ददातिदधात्योरिति णाणीभवतः शे आतोलोपः येतुपुक् लिम्पस्चेतयइति अनुपसर्गादिति अः ज्वलइति ज्वलिति कसन्तेभ्योणइति णस्य विकल्पपचाद्यच् ॥ ७९ ॥

दद्दैरित्यादि। कस्येतयस्येतनावान् अनोऽर्थादिरथो वातै हेतुभिर्व्वसीन स्यात् अग्निरिव न भवति वायुभिस्तेतःसन्नीपात् सर्व्वएव जनो दीप्तिमान्स्यादिति वा केवलं मद्विधानां विरहि णां कष्टमित्याह माद्दम्भ्योदुःखस्य दद्दैर्दाहभिः यतः उत्तममा मोदं पुष्पसम्बन्धिनं धार्य्यैर्धारयद्भिः कचिद्विशेषेऽपि सामान्य प्रवृत्तिरिति न्यायात् इषेद्दतीति कर्म्मणि षष्ठीं वाधित्वा कर्म्मक्रि येत्यादिना द्वितीया तनोर्दहस्य लिम्पैर्लेपकारिभिरिव दद दाने पचादित्वादन् अहमिव द्दश्यते दति तदादिभवत्समाने त्यादिना कर्म्मणि क्विप् श्रेत्रांदुधाञ्धारणे पुष्टौ दायंनक त्वात् श्वयव्यधेन तनदावद्दयदति नः यर्त्त्रिलृदिपाततः ञिलि पोम्रपन्तसेपे साहियातीत्यादिना शः मुचादित्वात् नुम् चितक कम्पाने इत्यस्मात् अभिधानात् शः धेटहग्रेत्यच योगविभाग इत्यन्ये साहियातीत्यादौ चेतीति लिपिकरप्रमादात् पतितमि त्यन्ये अज्वलज्वलनलिपोः दुनोभूज्वलेत्यस्याप्रवृत्तिपक्षे पचा दित्वादन्॥ ७८॥

अवश्यायकणास्रावावास्रास्मुक्ताफलत्विषः। कुर्व्व न्ति चित्तसंस्रावं चलत्पर्णाग्रसम्भृताः॥ ८०॥

अ०म० अवश्यायेत्यदि। अवश्यायतदत्यवश्यायः तस्य कणाविन्दवः आस्रवन्तीत्यास्रावाःचरन्तः श्याद्व्यधेति णः कर्त्तरि तयोर्विशेषण समासे राजदन्तादिति परनिपातः ते कुर्व्वन्ति चित्तसंस्रावं संस्रव

तीति संस्राव: पूर्व्ववत्। चित्तं संस्रावं चलत्कुर्व्वन्ति इत्यर्थ: पूर्व्व वत् समासपरनिपातौ कीदृशा: स्रुतत्पर्णाग्रसंस्थिता: अत एव चारु मुक्ताफलत्विष: दर्शनीयमुक्ताफलानुकारिण: सीताहारस्थमुक्ता फलानि स्मारयन्तीत्यर्थ: ॥ ८० ॥

अवेत्यादि। अवश्यायकणास्रावाश्चित्तसंस्रावं कुर्व्वन्ति अव भ॰ श्यायस्य नीहारस्य कणाविन्दव: आस्रवन्तीति आस्रावा: कर्म्म धारये गमकत्वात् विशेषणस्यापि परनिपात: स्रुगतौ दुनीभूञ्ज स्रेत्यादिना पचे ण: चित्तस्य तत् संस्रावं चलश्चेति पूर्व्ववत् कीदृ शा: चलतां पत्राणां अग्रेषु संभृता: चलन्तश्च ते पत्राग्रसंभृता श्चेति वा स्थूलीभूतागलिता इत्यर्थ: अत एव चारुण: शोभनस्य लिट् दीप्तिर्येषु ते तथा सीताहारस्थितानि मुक्ताफलानि स्मार यन्त इत्यर्थ: स्मृ आध्याने चङि यन्ङिलुक्त्वादिणत इति यन् ॥ ८० ॥

अवसायो भविष्यामि दुःखस्यास्य कदा न्वहं। न जी वस्यावहारो मां करोति सुखिनं यमः ॥ ८१ ॥

अवसाय इत्यादि। कदा नु काले अहं दुःखस्यानुभूयमानस्य ज॰म॰ अवसायोऽन्तकरो भविष्यामि येन जीवस्यावहारोऽवहर्त्ता यमो मां सुखिनं न करोति मारयतीत्यर्थ: अवस्यति इति अवसाय योऽन्तकर्म्मणि अवहरतीत्यवहार: श्याद्व्यधेति सर्व्वत्र ण: युक् ॥ ८१ ॥

अवेत्यादि। नु प्रश्ने वितर्के वा कदा अहं अस्य दुःखस्य अव भ॰ सायोऽन्तकरो भविष्यामि येन जीवस्यावहारोऽपकारको भूत्वा

अथापि यमोमां दुःखिनं न करोति विना मरणं न दुःखमपगमि ष्यतीत्यर्थः योयनाशे चञ् हत्यां आभ्यामेवपूर्वाभ्यां अयव्यधेन तनद्रावद्दत्तइति अः॥ ८१॥

दग्धोऽहं मधुनोलेहैर्दावैरुग्रैर्यथा गिरिः। नायः कोऽत्र स येन स्यां वताहं विगतज्वरः॥ ८२॥

ज॰म॰ दग्धोहमित्यादि। मधुनोलेहैर्भृंगैः अहं दग्धो ध्याद्वाधेति णः दावैर्वनाग्निभिरुग्रैः प्रचण्डैर्यथा गिरिर्दह्यते तद्वत् अत्र कोनायः नयतीति नायः उपायः ईप्सितप्रापकः उभयत्र दुन्योरिति णः येन नायेन विगतज्वरः विगतपीडः स्यामिति आशंसायांलिङ् वत खेदे॥ ८२॥

भ॰ दग्धइत्यादि। मधुनोलेहैर्मधुलिहद्भिर्भ्रमरैरहं दग्धो कर्म्मणि की यथा उग्रैः प्रचण्डैर्दावैर्वनाग्निभिर्गिरिर्दह्यते तद्वत् अत्र सको नायोऽभिमतप्रापकउपायः येनाहं विगतज्वरोविगतसन्तापः स्यां नु प्रश्ने वितर्केवा वत खेदे अतेःस्यांलोपोऽस्त्योरिति अका रलोपः लिहेःअस्त्रादे पचादित्वादन् टुदुउपतापे दुगतौ वा णीञ्प्रापणे दुनीभ्यमोति वैकल्पिकोणः दवोदावोवनारण्यव ह्नीइत्यमरः॥ ८२॥

समाविष्टं ग्रहेणेव ग्राहेणेवात्तमर्णवे। दृष्ट्वा गृहान् स्मरस्येव वनात्मान्मम मानसं॥ ८३॥

समाविष्टमित्यादि। वनान्तान् वनपर्य्यन्तान् स्मरस्य कामस्य गृहमिव उन्मादकत्वात् गेहे कदति ग्रहेः कः अर्द्धर्चादिपाठात् पुंलिंगता स्थितस्येत्यर्थात् योज्यं अन्यथा कथं समानकर्तृकत्वं मानसम्मेतः ज्योतिषि ग्रहः ग्राहेणेवात्तमर्णवे अर्णः यानीयं यत्रास्तीति केशादेोऽन्यतरस्यामिति तचार्णसेो लोपश्चेति भूमनि न्दाप्रशंसास्वित्यादौ वः सलोपश्चेति अर्णवे समुद्रे वर्त्तमानेन ग्राहेण कुंभीरादिना आत्तं गृहीतं आङ्पूर्व्वस्य दश्चोऽपवप सर्गात्तः॥ ८३॥ अ॰म॰

समेत्यादि। वनान्तान् वनस्वरूपान् तत्समीपदेशान् वा दृष्ट्वा स्थितस्य मम मानसं ग्रहेण सूर्य्यादिना समाविष्टमिव आसद्दीप्त तमिव इत्यर्थः उपहितत्वात् समुद्रे ग्राहेण कुम्भीरादिना आत्तं गृहीतमिव अतिगभीरशोकमग्नत्वेऽपि कामपीडितत्वात् स्थित स्येत्यध्याहारैककर्तृकत्वे पूर्व्वकाले क्त्वा वनान्तान् कीदृशान् स्मरस्य गृहानिव ग्रहेः सूर्य्यादौ अन् जलजन्तौ घञ् निलयेऽस्त्रि लिङ्गाभिधानात् गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालया इत्य मरः आङ्पूर्व्वदाञः क्तो द्यपचवेति पचे तादेशः अर्णाजलं विद्यते अस्येति केशादित्वात् वः मनोषादित्वात् सलोपः मनएव मानसं स्वार्थे ष्णः केचित्तु मनएव जानातीति व्यवहारात् मनसएव दर्शनकर्तृत्वं विवक्षितमित्युक्त्वा स्थितस्येति नाध्याहरन्ति अन्तः प्रान्तेऽन्तिके नाशे स्वरूपेऽपि मनोहर इति विश्वः॥ ८३॥ भ॰

वाताहतिचलच्छाखा नर्त्तकाइव शाखिनः। दुः सहाश्री परिच्छिन्नाः क्वणद्भिरलिगायकैः॥ ८४॥

वातेत्यादि। हा कष्टं एते शाखिनः नर्त्तकाइव शिल्पिनिष्वुन् दुःखहादुःखेन सह्यन्तइति ईषदित्यादिना खल् नर्त्तकैः साधर्म्य माह वाताहतिचलच्छाखावाताहतिभिः चलन्त्यः शाखावाहुल ताइव येषांते अलयोभ्रमरागाथकाइव गस्थकन् तैस्स परिचि प्ताः परिवेष्टिताइति ॥ ८४ ॥

भ॰ वातेत्यादि। एते शाखिनोदुःसहादुःखेन सह्यन्ते ईषद्दुःसो रिति खल् ही विषादे नर्त्तकाइव नृत्यन्तीति नृत्खनरञ्जइति ष्वकः नृतादेः शिल्पिनि कषइति परः खमते शिल्पिविशेषोऽर्थाङ्ग म्यते नर्त्तकसाधर्म्यमाह वाताहतिचलच्छाखाः वातस्याहतिभि सचला शाखा वाहुतुल्या येषां अलयोभ्रमराएव गाथकागा यनास्तैः परिचिप्ताः परिवेष्टिताः गायन्तीति गोणमट्थकाविति थकः गायतेरेतैा लोपे इति इत्त्वावुक्तत्वात् गैगाने इत्यस्यैव ग्रहणं नतु गाङः कणद्भिः शब्दायमानैः ॥ ८४ ॥

एकहायनसारङ्गगती रघुकुलोत्तमैा। लवकौ शत्रुशक्तीनामृश्यमूकमगच्छतां ॥ ८५ ॥

ज॰म॰ एकहायनेत्यादि। रघुकुलोत्तमैा रामलक्ष्मणैा ऋश्यमूकम गच्छतां गतवन्तौ लङि रूपं हायनः संवत्सरः सएकोयस्य सारं गस्य मृगस्य तस्येव गतिर्ययोः शीघ्रगामित्वात् हयत्रीहिकालयो रिति हाधातोर्ण्युट् आतोयुक् तैा शत्रुशक्तीनां लवकौ अपनेतारैा शुक्लः समभिहारइति वुन् तत्समभिहारग्रहणं साधुकारित्वो पलक्षणार्थं ॥ ८५ ॥

एकेत्यादि। एतद्वक्ष्यमाणमनरं रघुकुलस्य उत्तमौ श्रेष्ठौ राम लक्ष्मणौ ऋष्यमूकं पर्व्वतं अगच्छतां कीदृशौ एकहायनसारङ्ग गती एको हायनो वत्सरो वयो यस्य तादृशस्य सारङ्गस्य हरिण इव मृगस्येव वा गतिर्गमनं ययोः शीघ्रगामित्वात् अह्नातेर्णनटि हायनो निपातितः हा ङो कूपमित्यन्ये अनुमकौनां वयसो छेदको भुमातेः पुङ्गुरुस्त्रो ऽकः इत्यकः शाद्रे: साधुकारिण्यर्थेऽकइति परः सारङ्गस्रातके भृङ्गे कुरङ्गे च मतङ्गजे॥ ८५॥ भ०

तौ वालिप्रणिधी मत्वा सुग्रीवोऽचिन्तयत्कपिः। बन्धुना विगृहीतोऽहं भूयासं जीवकः कथं॥ ८६॥

तावित्यादि। तौ रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् चिन्तितवान् प्रणिधीयते नियुज्यते कार्य्येषु प्रणिधिः उपसर्गेघोःकिः बन्धुना भ्राचा विगृहीतो विरोधितः सन् कथं जीवको भूयासमिति चाशंसायां लिङ् जीवेराशिषिवुन्। इति निरुपपदरुदधिकारः॥ ८६॥ ज०भ०

तावित्यादि। रामलक्ष्मणौ वालिनः प्रणिधी चरौ मत्वा सुग्रीवः कपिरचिन्तयत् बन्धुना वालिना विगृहीतो विरोधितो ऽहं कथं जीवको भूयासं प्रणिधीयते कर्म्मणि प्रयुज्यतेऽस्मादिति दारंज्ञकत्वात् किर्दोऽन्यत्रैरित्यनेन भावविहितोऽपि किः इष्टो: कभावइत्युक्तेरत्र कर्म्मणि बोध्यः केचित्तु कभावेऽमोदृत्यस्मात् मण्डूकप्लुताधिकारादत्र कभावइत्यनुवर्त्तते वृत्तौ तु कारकानु भ०

पदेषोलिपिकरप्रमादात् इत्याहुः आशिषीति जीवतेरकः। इति निरुपपदाधिकारः॥ ८६॥

सप्रत्नुलावौ सम्यानौ राघवौ मलयं गिरिं। जगाम सपरीवारो व्योममायमिवोच्छ्रितं॥ ८७॥

ज०म० इतः प्रभृति तत्रोपपदं सप्तमीस्थमिति अस्योपपदस्थानेन कर्त्ता दर्शयन्नाह सइत्यादि। ससुग्रीवः सपरीवारः सपरिकरः उपसर्गस्येति दीर्घः कपीनाममनुष्यत्वात् मलयं गिरिं जगाम राघवौ प्रचुलावौ प्रचून् लुनातीति कर्मण्यण् प्रचूणामुन्मूलकाविति मन्वानोऽवगच्छन् मनुबोधनअस्मादात्मनेपदिनस्तनादिभ्यउः व्योममायमिवोच्छ्रितं व्योम आकाशं मिमीतइति क्वावामस्येत्यण् नभः परिच्छेत्तुमिवोच्छ्रितं कियत्प्रमाणमस्येति॥ ८७॥

भ० अथ सोपपदाधिकारः। यस्मात् पराद्धातोः प्रत्ययास्तदुपपदं सइत्यादि। ससुग्रीवो राघवौ प्रचुलावौ प्रचूणां च्छेदकौ मन्वानः परीवारैः परिजनैः सह मलयं गिरिं जगाम व्योममायं आकाशस्य परिमाणं कुर्व्वाणमिव उच्छ्रितं अतिदैर्घ्यादियमुक्ता प्रचून् लुनातीति व्योम मातीति च ढातण्यणत्रिल्कृदिति आतोयन् मनदङ्बोधे क्तित्वाशं दित्वात्तनादिः परिपूर्व्वात् वोघञ् परिरिकारस्य दीर्घत्वमभिधानात्॥ ८७॥

समर्द्दं मारुतिं दूतं विषमस्थः कपिद्विपं। शोकापनुदमव्यग्रं प्रायुङ्क्त कपिकुञ्जरः॥ ८८॥

शर्म्मदमित्यादि। कपिकुंजरः सुग्रीवः हनुमन्तं दूतं प्रायुङ्क्त जं०भ०
प्रस्थापितवान् वृन्दारकनागकुंजरैरित्यादिना कर्म्मधारयः सः
वृत्तान्तं ज्ञातुमित्यर्थात् प्रायुङ्क्त इति प्रोपाभ्यांयुजेरित्यात्मने
पदं रुधादित्वात् श्नम कपिकुंजरः किम्भूतः विषमे दुर्गपर्व्वते तिष्ठ
तीति विषमस्थः सुपिस्थइति कः मारुतिं कीदृशं शर्म्म कल्याणं
ददातीति शर्म्मदःआतोऽनुपसर्गेकइति कः श्रेष्ठत्वमाह कपिद्विपं
कपिश्रेष्ठं द्वाभ्यां पिवतीति द्विपः कपिरयं द्विपइव उपमितं व्या
घ्रेत्यादिना कर्म्मधारयः पुनः कीदृशं शोकापनुदं शोकमपनुदति
तुन्दशोकयोरिति कः अव्यग्रं सुस्थितमित्यर्थः॥ ८८॥

शर्म्मदमित्यादि। कपिकुञ्जरः सुग्रीवोमारुतिं हनूमन्तं दूतं भ०
प्रायुङ्क्त प्रस्थापितवान् वृत्तान्तं ज्ञातुमित्यर्थात् कीदृशः वि
षमस्थः विषमे कृच्छ्रे तिष्ठतीति स्थनजनादिति डः एवम्भूतोऽपि
महासत्वत्वादव्यग्रोऽव्याकुलः यद्वा विषमे दुर्गे स्थितः अतएव अ
व्यग्रः अक्षोभितमनाः कीदृशं मारुतिं शर्म्म ददातीति शर्म्मदं सुख
दायकं पूर्व्ववड्डः शर्म्मशातसुखानिचेत्यमरः कपिद्विपं कपिश्रेष्ठं
शोकमपनुदति शोकापनुदं कगृह्याप्रीजुकइति कः कपिर्द्विपइव
कपिः कुञ्जरइव गमकत्वात् विशेषणस्यापि परनिपातः द्वाभ्यां
पिवतीति द्विपः पूर्व्ववत् डः कुञ्जोदन्तोविद्यतेऽस्येति मध्वादित्वात्
रः गुञ्जकुञ्जे निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनामिति विश्वःमा
रुतस्यापत्यमिति वाक्याद्यतइति ष्णिः आञ्जनेयोहनूमान् स्याद्ध
नुमानपि मारुतिरिति कोषः अव्यग्रमिति क्वचित् पाठः तादृश
स्य दूतस्य योग्यत्वात् युजेर्घौ रुधादित्वात् श्नम् नशोघेऽणाविति
णादेशः॥ ८८॥

विश्वासप्रदवेशोऽसौ पथिप्रज्ञः समाहितः। चित्त संख्यो जिगीषूणामुत्पपात नभस्तलं॥ ८९ ॥

ज०म० विश्वासेत्यादि। असौ मारुतिर्नभस्तलमुत्पपात विश्वासं प्रददातीति विश्वासप्रदः प्रेदाज्ञ इति कः विश्वासप्रदोवेशोयस्य भिंचुवेषइत्यर्थः वेश्यतेऽआत्मानेनेति अकर्त्तरि चकारके घञ् विषया प्राविश्यस्वरूपं पन्थानं प्रजानातीति पथिप्रज्ञः समाहितः अभ्रान्तचित्तः इदं मया तत्र वक्तव्यमिति जिगीषूणां जेतुमिच्छतां चित्तसंख्यः चित्तं संख्याति परिच्छिनत्तीति समिख्यइति कः॥ ८९॥

भ० विश्वासेत्यादि। असौ मारुतिर्नभस्तलमुत्पपात कीदृशः विश्वासप्रदोवेशोयस्य यतथा भिचुवेशत्वात् प्राविश्यप्रवेशे घञि वेशः विषिर्लिङ्गोऽन्त्याप्राविश्यस्य मूर्द्धन्यान्तस्य रूपमित्यन्ये पन्थानं प्रजानाति इति इगुपधाप्रीति कः समाहितः अभ्रान्तचित्तः जिगीषूणां जेतुमिच्छूनां स्वपक्षाणां परपक्षाणाञ्च चित्तं संख्याति परिच्छिनत्तीति हनजनादिति डः संपूर्व्वस्य ख्याखख्याताविश्यस्य प्रयोगीनास्तीति ये वदन्ति तन्मते चचिङ्कोरूपं तदा चचिङः कशाञ्ख्याञरे इत्यत्र अरइति विषयसप्तमी॥ ८९॥

सुरापैरिव घूर्णद्भिः शाखिभिः पवनाहतैः। कामगाक्रुष्टैः प्रगीतं सामगैरिव॥ ९०॥

ज०म० सुरापैरित्यादि। मारुतिर्ऋष्यमूकमगात् शाखिभिरुपलक्षितं घूर्णद्भिः कम्पमानैः पवनाहतत्वात् अतएव सुरापैरिव मत्तैरिव

गापोष्टगित्यच सुराशीध्वोरिति टक् प्रगीतं प्रगीयतेऽनेनेति अधि करणे क्तः कैर्भृङ्गैः सामगैरिव सामवेदपाठकैरिव गायन्तीति टक्॥ ९० ॥

सुरापैरित्यादि। समाहृतिर्ऋष्यमूकमगात् कीदृशं शाखिभि भ० रुपलक्षितं कीदृशैः पवनेनाहतैः अतएव घूर्णद्भिः कम्पमानैः घूर्ण अभ्रमणे शतुः अतएव सुरापैर्मद्यपैरिव सुरां पिबन्तीति इग जनाद्दिति डः भृङ्गैः प्रगीतं नादितं गीयते यत्रेति औव्यगत्येति आधारे क्तः क्तस्योःकभावदत्युक्तेः अपवादेऽप्युत्सर्गप्रवृत्तिः क्वचि दिति न्यायात् कामुकसङ्गार्थकेन इत्यनेन षष्ठीप्राप्तौ साधनहेलि त्यादिना कर्त्तरि तृतीया भावक्तान्तादर्शआदित्वादति भृङ्गक र्तृकसङ्गीतयुक्तमिति वार्थः प्रकृष्टं गीतं यत्रेति वा सामगैरिव सामवेदं गायन्तीति इगपरगष्टक्॥ ९० ॥

तं मनोहरमागत्य गिरिं वर्म्महरौ कपिः। वीरौ सुखाहरोऽवोचद्भिक्षुर्भिक्षार्हविग्रहः॥ ९१ ॥

तमित्यादि। ऋष्यमूकं गिरिमागम्य कपिर्वीरौ रामलक्ष्मणौ ज०म० अवोचत् उक्तवान् कीदृशं मनोहरं रम्यत्वात् मनोहरतीति हर तेरनुद्यमनेऽच् वर्म्महरौ कवचं हर्त्तुं क्षमौ संभाव्यमानवयसावि त्यर्थः वयसिचेत्यच् सुखाहरः सुखाहरणशीलः आङिताच्छील्य इत्यच् भिक्षुः परिव्राट्वेशः न कपिरूपः यतीविश्वासप्रदवेश इत्युक्तं भिक्षार्हविग्रहः भिक्षायोग्यशरीरः कृशत्वादित्यर्थः भिक्षामर्हतीत्यच्॥ ९१ ॥

भ० तमित्यादि। तं ऋष्यमूकं गिरिं आगत्य आगम्य कपिर्हनूमान् वीरौ रामलक्ष्मणौ अवोचत् कथितवान् गिरिं कीदृशं रम्यत्वात् मनोहरं हरतीति हरः पचादित्वादच् मनसोहरः मनोहरः कीदृशौ तौ वर्म्महरौ कवचधरौ पूर्व्ववदच् कपिः कीदृशः सुखाहरः सुखकारी अर्थान्तयोः पूर्व्ववदच् परे तु अवहने कर्म्मणः परात् हृञोऽच् वयोबोधकवहने च आङ्पूर्व्वात्तु ताच्छील्य एवेत्याहुः तन्मते मनोहरतीति मनोहरस्तं वहने तु भारहारइत्यादि बोध्यं वर्म्म हर्त्तुं शमौ वर्म्महरौ अत्र सम्भाव्यमानं वयो गम्यते तरुणावित्यर्थः सुखमाहर्त्तुं शीलमस्य सुखाहरः भिक्षुर्यतिरूपः भिक्षणशीलोवा सन्भिक्षाशंसवः भिक्षार्हविग्रहः भिक्षायोग्यशरीरः भिक्षुकवेशपरिग्रहात् नतु वानरमूर्त्तिः विश्वासप्रदवेशइत्युक्तं भिक्षामर्हतीति भिक्षार्हः पचादित्वादच्॥ ९१॥

बलिनावमुमद्रीन्द्रं युवां सम्बेरमाविव। आचक्षाथामितः कस्माच्छङ्करेणापि दुर्गमं॥ ९२॥

ज०म० किमवोचदित्याह बलिनेत्यादि। युवां अमुं अद्रीन्द्रं कस्मात् कारणादितः प्राप्तौ इत्यागताविति वर्त्तमानसामीप्ये भूते लट् थस् एतदाचक्षाथां कथयतं लोटि रूपं बलिनौ बलवन्तौ यत् शंकरेणापि महादेवेनापि दुर्गमं दुःखेन गम्यते ताविव सम्बेरमाविव यथा मत्तद्विपौ प्राप्नुतस्तद्वत् संवकरणयोरित्यच् कर्त्तरि हस्तिन्यभिधेये हस्तिसूचकयोरिति वचनात् शंकरइति शमि धातोरित्यच्॥ ९२॥

बलीत्यादि। किमवोचदित्याह युवां अमुं अद्रीन्द्रं ऋष्यमूक भ०
कस्मात् कारणात् इथः प्राप्नुथः इणगतौ भूतसामीप्ये लौ अभि
धानात् एतत् युवामाचक्षाथां कथयतं प्रार्थनायां लो अद्रीन्द्रं
कीदृशं शङ्करेण महादेवेनापि दुर्गमं दुःखेन गम्यतइति ईषद्दुः
सुरिति खल् अतएवात्र गमनात् युवां बलिनौ बलमस्ति ययो
रिति नैकाजादिति इन् अत्रातिशयेन मत्वर्थो बोध्यः। तथा च
भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्ति विवक्षायां
भवन्ति मतुवादयइति स्मेरमाविव हस्तिनौ यथा प्राप्नुथ
स्तद्वत् स्मेरमतइति पचादित्वादन् अभिधानात् सप्तम्यलुक्
हस्तिन्येव रूढः शं कल्याणं करोतीति शङ्करः खकुष्टइति टः
अभिधानात् संज्ञा गम्यते॥ ९२॥

व्याप्तं गुहाशयैः क्रूरैः क्रव्याद्भिः सनिशाचरैः।
तुङ्गशैलतरुच्छन्नं मानुषाणामगोचरं॥ ९३॥

उत्क्रष्टाधिकारः।

व्याप्तमित्यादि। दुर्गमत्वदर्शनाय इदमुच्यते कीदृशमद्रीन्द्रं क०म०
क्रव्यमपक्कमांसं भक्षयद्भिः सिंहादिभिः सनिशाचरैः राक्षससहि
तैर्व्याप्तं क्रव्येचेति विट् गुहाशयैः गुहायां शेरते इति शीङोऽधि
करणेऽच् तुंगाः उच्चाः शैलाः शिलायां भवाये तरवस्तैश्छन्नं
व्याप्तं अतएव मानुषाणामगोचरं अगम्यं गोचरसंचरेत्यादिना
निपातितः॥ ९३॥

भ० व्याघ्रमित्यादि। दुर्गमलं दुर्गेयत्वात् अद्रीन्द्रं कीदृशं क्रव्याद्भिः किरातादिभिः सिंहादिभिर्व्याप्तं क्रव्यं मांसमदन्तीति क्विप् क्रव्य क्रव्यादः पक्के क्विप् अपक्केऽण्क्विपाविति परः स्मते पक्कापक्कवि शेषानुक्तौ न चातिरर्थागतिश्चलात् कीदृशः गुहाशयैः गुहायां शेरतइति पचादित्वादन् शीकोऽधिकरणाद्नेति परसूत्रं क्रूरै निर्दयैः कठिनैर्व्वा चनिशाचरैः राक्षसचरितैः पुनः कीदृशं तुङ्गै वातद्रूपं तुङ्गैः शैलैरभिश्च घनं सर्व्वतोव्याप्तं अतएव मानु षाणामगोचरं अगम्यं। द्विषन् वनेचराणामित्यारभ्य चरा देष्टइत्यादिप्रकरणस्य प्रागुक्तत्वात् अच तथागद्यतआह उक्त ष्टाधिकारइति ॥ ९३ ॥

सत्वमेजयसिंहाढ्यान् स्तनन्धयसमत्विषौ। कथं नाडिन्धमान्मार्गानागतौ विषमोपलान् ॥ ९४ ॥

ज०म० सत्वमित्यादि। युवामिमान् मार्गानागतौ सत्वमेजयसिंहाढ्यान् सत्वमेजयन्ति ये सिंहाः एजेः खश् अरुर्द्विषेति मुम् तैराढ्यान् व्याप्तान् सिंहग्रहणं तदङ्गिंस्तोपलक्षणार्थं हिनस्तीति सिंहः पृषो दरादित्वाद्वर्णविपर्य्ययः नाडिन्धमानिति उपनीचाधिरोहणान्मु ऊर्मुङ्रुर्निश्वासैर्नाडिन्धमन्तीति नाडीमुष्टोश्चेति खश् खित्यनव्यय स्येति ह्रस्वः विषमोपलान् उन्नतचापाणयुक्तान् स्तनन्धयसमत्वि षैः बालवत्सुकुमारौ सामर्थ्यं पुनर्युवयोरचिन्त्यं स्तनं धयतः पिबतः नासिकास्तनयोरिति खश् अरुर्द्विषदिति मुम् ॥ ९४ ॥

अथ खशाद्यधिकारः सत्वमित्यादि। युवां कथं इमान् मा र्गान् आगतौ एतत् मूतमिति वक्ष्यमाणश्लोकेनान्वयः कीदृशान्

सत्त्वमेजयसिंहाद्यान् सत्त्वान् प्राणिनएजयन्ति कम्पयन्ति भीषय न्तीति यावत् खशेजेरिति खश् खित्यव्याजिति मन् तादृशाये सिं हास्तैराद्यान् व्याघ्रान् हिनस्तीति सिंहः पृषोदरादित्वाद्‌न् निपात नात् वर्णविपर्य्ययः नाडिन्धमान् मुहुर्मुहुर्नाडीं नि:श्वासैर्धमन्ति उपतापयन्तीति नाडीमुष्टीस्तनेत्यादिना खश् ध्मादानपेत्या दिना धमादेशः पूर्व्वेण मन् ह्रस्वश्च विषमोपलान् उन्नतानत प्रस्तरयुक्तान् युवां कीदृशौ स्तनन्धयसमत्विषौ स्तनंधयति पिब तीति स्तनन्धयोबालकः पूर्व्ववत्खश् मन् च तेन समा त्विट् दीप्ति र्ययोः एतेन सौकुमार्य्यं दर्शितं स्तनन्धयशब्देनार्थात् तद्दीप्तिरुप लक्ष्यते दीप्तौ तत्समत्वमुचितं परम्परया धर्म्मिसाम्यं धर्म्मसाम्यं वा गम्यते॥ ८४॥

उत्तीर्णौ वा कथं भीमाः सरितः कूलमुद्वहाः। आ सादितौ कथं ब्रूतं न गजैः कूलमुद्रुजैः॥ ८५॥

उत्तीर्णावित्यादि। कथं वा केनोपायेन युवां सरितोनदीरु त्तीर्णौ भीमास्त्रासकरी यतः कूलमुद्वहाः कूलमापूर्य्य वहन्त्यः उदिकूलइति खश् गजैः कूलमुद्रुजैः कूलं भिन्दद्भिः कथं नासा दितौ न व्यापादितौ इति ब्रूतं कथयतं॥ ८५॥ ज०म०

उत्तीर्णावित्यादि। कथं वा युवां सरितोनदीरुत्तीर्णौ तर णमपि गतिः तेन गत्यर्थाढेत्यादिना कर्त्तरि क्तः कीदृशीः कूलमु द्वहाः कूलान्यापूर्य्य वहन्ति कूलं तीरमपि जलानि प्रापयन्ति वा भ०

अत एव भीमास्त्रासकरीः गजैर्हस्तिभिः कथं वा युवां माषादितौ न प्राप्तौ न मारिताविति भावः कर्म्मणि क्तः कीदृशैः कूलमुद्रुजैः मत्ततया कूलं भिन्दद्भिः एतद्युवां भूतं कथयतं उभयत्र कूला दुद्रुजुद्वह इति खश् खित्यव्याजिति मन् ॥ ९५ ॥

रामोऽवोचद्धनूमन्तमावामभ्रंलिहं गिरिं। ऐव विद्वन् पितुः कामात् पान्तावल्पंपचान्मुनीन् ॥ ९६ ॥

ज॰म॰ रामइत्यादि। हनुर्वदनैकदेशः सोऽस्यास्तीति निन्दायां मतुप् अन्येषामपि दृश्यतइति दीर्घः हनूमान् हनुमानपीति विश्वदर्शनात् वैरूप्यं तस्य किल जातमात्रस्य आदित्यरथं गृह्णतो हनुरयं भग्नमिति श्रूयते तं रामोऽवोचत् उक्तवान् तत् किमित्याह हे विद्वन् यद्यमुं गिरिमावामैव आगतौ तत् पितुः कामादभिप्रायात् आङ्पूर्व्वादिणोलङि रूपं अभ्रंलिहमुच्चैस्तरं अभ्रंलेढीति वहाभ्रेलिहइति खश् किं कुर्व्वाणौ पान्तौ रक्षन्तौ मुनीन् अल्पं पचान् अल्पसन्तुष्टान् अल्पं पचन्तीति मितनखेचेति मितेत्यर्थग्रहणात् खश् चकारस्यानुक्तसमुच्चयार्थत्वाद्वा ॥ ९६ ॥

भ॰ रामइत्यादि। रामोहनूमन्तं अवोचत् पर्व्वताघातभग्नत्वात् कुत्सिता हनूरस्यास्तीति निन्दायां मतुः हनूशब्दात् तन्वादेर्व्वा इति पाक्षिकऊप् ततोऽयुङ्रव्यादेरित्यस्य प्रत्युदाहरणे रव्यादौ तु हनुरिति कश्चित्पुस्तके दृश्यते तत्तु लिपिकरप्रमादा

दिति केचित् नाबश्यर्थे ऽपि चोऽर्थे इति केचित् हनूमान् हनुमानपीति विश्वदर्शनात्तैरित्थमेव किमुक्तवानित्याह हे विद्वन् आवां पितुः कामादभिलाषादमुं गिरिं ऐव आगतौ द्रष्टावेव अदादित्वात् शपोलुक् अभ्रंलिहमाकाशं लेढि प्राप्नोतीति वहभ्रेष्वजी त्यादिना अभिधानादनाबश्यपि खः खितीति मम् अभिधानात् गुणाभावः आवां कीदृशौ मुनीनां पान्तौ रक्षन्तौ पालरक्षणे शतुः कीदृशान् अल्पंपचान् स्वल्पसन्तुष्टान् दरिद्रान् वा घटीखारीत्यादौ मितनखमानादित्यत्रार्थस्यैव ग्रहणं तेनाल्पशब्दात् पचः खश् अल्पं यथा स्यात्तथा पचानिति केचित् मुनिरक्षणेन दुष्टहिंसाप्रवृत्तयोरावयोः कुतः सिंहादिभयं तादृशोऽस्य सरित्तरणमपि नाशक्यमिति पूर्व्वप्रश्नेषु सर्व्वत्रोत्तरं सूचितं॥ ९६॥

अमितस्पचमीशानं सर्व्वभोगीणमुत्तमं। आवयोः पितरं विद्धि ख्यातं दशरथं भुवि॥ ९७॥

कः पुनः पिता यदादेशादागतावित्यत आह। अमितम्पचमित्यादि। आवयोः पितरं दशरथनामानं भुवि विख्यातं विद्धि जानीहि उशत्रुभ्योहेर्धिः अमितंपचं महामन्त्रिणं पूर्व्ववत् खश् मुमच ततोनञ्समासः ईशानमीशनशीलं स्वामिनमित्यर्थः ताच्छील्येत्यादिना चालश् सर्व्वभोगीणं सर्व्वसलभोगाय हितं आत्मन्विश्वजनेति खः भोगशब्दोऽत्र शरीरवाची अट्कुप्वादिना णत्वं॥ ९७॥ ज०म०

अमितमित्यादि। कः पिता यदादेशादचागतावित्याह आव भ०

योः पितरं दशरथं विद्धि जानीहि ऊडमोरेधिः कीदृशं अमित मधं प्रचुरान्नप्रदं घटोखारीत्यादिना खश् पश्चान्नञ्समासः ईशा नं ऐश्वर्य्ययुक्तं ईशलङऐश्वर्य्ये शानः सर्व्वभोगाय सर्व्वशरीराय हितं भुज्यतेऽनेनेति भोगः शरीरं ततोविकारसंघेत्यादिना हि तार्थे ईनः प्रुषोऽदान्तेइत्यादावतड्डादित्यस्य योगविभागात् एलं उत्तमं श्रेष्ठं भुवि ख्यातं पृथिव्यां प्रसिद्धं सर्व्वशातत्वात् ॥८७॥

छलेन दयितारण्याद्रक्षसारुन्तुदेन नः। असूर्य्य म्पश्यया मूर्त्या हृता तां मृगयावहे॥ ८८॥

जं॰म॰ यदि पितुरादेशादागतौ किमत्र गमनेनान्वेषयथ इत्याह। छलेनेत्यादि। नोऽस्माकं दयिता अरण्याद्राक्षसेन हृता कीदृ शेन अरुन्तुदेन मर्म्मस्पृशा विध्वरुषोस्तुदइति खश् मुम् असूर्य्य म्पश्यया आदित्यगोप्यया मूर्त्या शरीरेणोपलक्षिता असूर्य्य ललाटयोरिति खश् तां हृतां मृगयावहे गवेषयावः मृगअन्वे षणे स्वार्थिकण्यन्तः युवयोः पौरुषान्वितत्वात् कथं हृतेत्याह छलेन छद्मना ॥८८॥

भ॰ छलेनेत्यादि। पितुराज्ञया दण्डकागमनेऽपि कथं अत्राग मनमित्याह अस्माकं दयिता अरण्याद्रक्षसा हृता कथं युव योरग्रे हृतेत्याह छलेन छद्मना नतु बलात् कीदृशेन रक्षसा अरुन्तुदेन मर्म्मस्पृशा घटोखारीत्यादिना खश् खित्यव्याजिति मम धातोः मोलोपः अभ्यहृवकले व्हलिवित्वा तां हृतां मृगया

यद्दे अन्वेषयाव: मृगतकड़मार्गणे मार्गणमन्वेषणं मूर्त्या शरीरेणोपलक्षिता विशेषणे तृतीया कीदृश्या असूर्य्यम्पश्यया सूर्य्यमपि न पश्यन्त्या अतिगोप्ययेत्यर्थ: पूर्व्वेण खश् स्थादानेत्यादिना दृशे: पश्यादेश: सूर्य्येण सह समासोगमकत्वात् ॥ ९८ ॥

प्रत्यूचे मारुतीराममस्ति वालीति वानर:। शमयेदपि संग्रामे योललाटन्तपं रविं ॥ ९९ ॥

त्वं पुन: कस्य वेत्यतआह। प्रत्यूचेइत्यादि। रामं मारुति: प्रत्यूचे प्रत्युक्तवान् अस्ति वालीतिनाम्ना कपीश्वर: य: संग्रामे युद्धे ललाटन्तपं सर्व्वेषामुपरि वर्त्तमानं पूर्व्ववत् खश् शमयेत् पराजयेदिति सम्भावने लिङ् वालिशब्दोनान्त: इदन्तस्य तथा च वाली वालिस्य कथ्यते इति शब्दभेद: ॥ ९९ ॥ ज॰म॰

प्रत्यूचइत्यादि। मारुतिर्हनूमान् रामं प्रत्यूचे किमत्यूचे इत्याह वालीति नाम्ना वानरोऽस्ति य: संग्रामे प्रवृत्ते रविं सूर्य्यमपि शमयेत् पराजयेत् शीघ्रासम्भावनेति खो कीदृशं रविं ललाटन्तपं सर्व्वेषामुपरिवर्त्तिनं मध्याह्नकालीनमपि प्रचण्डमपीत्यर्थ: यद्वा सूर्य्योऽपि चेत्तस्य ललाटं तपति तदा तमपि शमयेत् सुतरामेवान्यायकारिणमित्यर्थ: घटीखारीत्यादिना खश् ॥ ९९ ॥ भ॰

उग्रम्पश्येन सुग्रीवस्तेन भ्राता निराकृत:। तस्य मित्रीयतोदूत: संप्राप्तोऽस्मि वशम्वद: ॥ १०० ॥

उग्रम्पश्येनेत्यादि। तेन भ्रात्रा उग्रंपश्यता पापं विजानता उग्रंपश्येत्यादिना निपातितं यस्य सुग्रीवो निराकृतोऽभिभूतस्तस्य ज॰म॰

हि दूतः प्राप्तोऽस्मि वशम्वदः वशमनुकूलं वदतीति वशम्वदः प्रियवशेवदःखच् कीदृशस्य मित्रीयतोमित्रमिच्छतः सुपश्रात्मनः क्यच्॥ १०० ॥

भ० उग्रमित्यादि। तेन भ्रात्रा वालिना सुग्रीवोनिराकृतः देशा न्निःसारितः कीदृशेन उग्रम्पश्येन पापं पश्यता उग्रदृष्टिना वा घटीखारीत्यादिना खश् तस्य सुग्रीवस्य दूतोऽहं सम्प्राप्तोऽस्मि आगतोऽस्मि कीदृशस्य मित्रीयतः आत्मनोमित्रमिच्छतः तथा भवन्तमेव क्योऽव्ययाद्यसेति क्यः अवर्णस्य ईस्र ततः शट्टः वशमनु कूलं वदतीति वशम्वदः प्रियवशादित्यादिना खः अस्मीति क्रिया पदं अस्मदर्थेऽव्ययं वा॥ १०० ॥

प्रियम्वदोऽपि नैवाहं ब्रुवे मिथ्या परन्तप। सख्या तेन दशग्रीवं निहन्तासि द्विषन्तपं॥ १०१ ॥

ज०म० किन्तेन सख्येनेति चेदाह प्रियंवदइत्यादि। प्रियम्वदतथा लोकोमिथ्या वदति अहं प्रियम्वदोऽपि पूर्ववत् खच् परंतप शत्रू णामुपतापद द्विषदिति खच् वाचंयमपुरन्दरौचेत्यमागमोनि पात्यते नैवाहं मिथ्या ब्रुवे वदामि तेन सुग्रीवेण सख्या मित्रेण दशग्रीवं निहन्तासि हनिष्यसि हन्तेर्लुटि रूपं कीदृशं द्विषन्तपं शत्रूणामुपतापयितारं पूर्ववत्खच्॥ १०१ ॥

भ० प्रियमित्यादि। किन्तेन मित्रेणेत्याह तेन सुग्रीवेण सख्या त्वं दशग्रीवं हन्तासि निहनिष्यसि हन्तेर्लुटि कीदृशं द्विषन्तपं शत्रूणा मुपतापकं द्विभृद्दइत्यादिना द्विषच्छब्दात्तपेऽभिधानादसंज्ञा

थामपि खः मनोषादित्वात्तलोपे खित्यव्याजिति मन् किम्वा द्वे
ष्टीति द्विषः क्वगृह्माग्नीजुङ्इति कः तस्मात्तपः खः प्रियम्वदत्वा
न्मृषा ब्रवीषि चेदाह हे परन्तप शत्रूणामुपतापक प्रियम्वदो
ऽपि सन् नैव मिथ्या ब्रुवे वदामि परन्तपेति रामसम्बोधनात्
द्विषन्तपमिति रावणविशेषणात् द्वयोः साम्यमुक्तं तेन तज्जयाय
रामस्य मित्रान्तरापेक्षा युक्तेति भावः प्रियम्वद इति प्रियवशादि
ति खः परन्तपेत्यत्र द्विषन्तपवत् खः ॥ १०१ ॥

वाचंयमोऽहमनृते सत्यमेतद्ब्रवीमि ते । एहि सर्व्वं
सहं मित्रं सुग्रीवं कुरु वानरं ॥ १०२ ॥

वाचंयमइत्यादि । वाचंयमपुरंदरौ चेत्यमागमो निपात्यते जं॰मं॰
तस्मात् सत्यमेतत् पूर्व्वोक्तं ब्रवीमि ते तुभ्यं तादर्थ्ये चतुर्थी यत
एवं तस्मादेहि आगच्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्व्वंसहं
सर्व्वं सहतइति पूःसर्व्वयोरिति खच् ॥ १०२ ॥

वाचमित्यादि । न मिथ्या ब्रुवइति प्रागुक्तं द्रढयन्नाह अहं अ भ॰
नृते असत्ये वाचंयमो मौनी तस्माद्यग्रीवं निहन्तास्मि इति यदु
क्तं एतत्तुभ्यं सत्यमेव ब्रवीमि तादर्थ्ये चतुर्थी तस्मात् एहि आग
च्छ सुग्रीवं वानरं मित्रं कुरु कीदृशं सर्व्वंसहं सर्व्वकार्य्यक्षमं तुभ्
ष्टइत्यादिना अभिधानादसंज्ञायामपि खः वाचंयमइति वाचा
शब्दात् यमः पूर्व्ववत् खः खित्यव्याजिति मम् ह्रस्वस्य परे तु वाक्
शब्दोपपदेन साधयन्ति ॥ १०२ ॥

सर्व्वंकषयशःशाखं रामकल्पतरुं कपिः। आदायाभ्रंकषं प्रायान्मलयं फलशालिनं॥ १०३॥

ज०म० सर्व्वंकषेत्यादि। रामः कल्पतरुरिव यस्तमादाय गृहीत्वा कपिः प्रायात् गतः कीदृशं रामं सर्व्वंकषयशःशाखं सर्व्वं कषन्ति व्याप्नुवन्ति यानि यशांसि सर्व्वकूलेत्यादिना खश् तान्येव शाखा यस्य फलशालिनमभिमतफलसम्पादनात् अभ्रंकषमुच्चैस्तरं मलयं पूर्व्ववत् खच्॥ १०३॥

भ० सर्व्वमित्यादि। रामएव कल्पतरुः तमादाय कपिर्हनूमान् मलयं प्रायात् प्रगतः रामं कीदृशं सर्व्वं कषन्ति व्याप्नुवन्ति सर्व्वं पापं नाशयन्ति वा यानि यशांसि तान्येव शाखायस्य तं फलशालिनं अभिमतफलसम्पादनात् मलयं कीदृशं अभ्रंकषं आकाशव्यापकं अत्युच्छ्रितत्वात् फलशालिनमिति मलयस्य विशेषणात् श्रमापहारकत्वं सूचितमिति केचित् प्रियवशाद्वयर्त्तीत्यादिना खः॥ १०३॥

मेघंकरमिवायान्तमृतुं रामं क्षमान्वितः। दृष्ट्वा मेने न सुग्रीवोवालिभानुं भयङ्करं॥ १०४॥

ज०म० मेघंकरमित्यादि। राममायातं दृष्ट्वा सुग्रीवोवालिनं भानुमिव भयंकरं भीतिजनकं न मेने न बुद्धवान् मेघर्त्तीत्यादिना खच् क्षमान्वितोग्लानोवालिभानुना पीडितत्वात् कीदृशं रामं मेघंकरं ऋतुमिव प्रावृट्कालमिव पूर्व्ववत् खच्॥ १०४॥

मेघमित्यादि। राममागतं दृष्ट्वा सुग्रीवो भानुमिव वालिनं भय भ०
ङ्करं भीतिजनकं न मेने न मन्यतेस्म कीदृशः क्लमेनान्वितः ग्लानः
रामं कीदृशं मेघङ्करं मेघोत्पादकं ऋतुमिव वर्षाकालमिव वर्षा
कालस्य सूर्य्याच्छादकत्वेन क्लान्तश्रमभयापहारित्वात् साम्यं
प्रियवशाद्गुयर्त्तिमेघादिति खः॥१०४॥

उपाग्न्यकुरुतां सख्यमन्योन्यस्य प्रियङ्करौ। क्षेमङ्क
राणि कार्य्याणि पर्य्यालोचयतां ततः॥१०५॥

उपाग्नीत्यादि। उपाग्नि अग्निसमीपे रामसुग्रीवौ सख्यमकुरु ज०म०
तां इतःप्रभृत्यावयोः सख्यमिति अन्योन्यस्य प्रियङ्करौ क्षेमप्रियम
द्रेष्वण्चेति चकारात् खच् ततः सख्यकरणानन्तरं क्षेमङ्कराणि
हितजनकानि यथा कार्य्याणि प्रत्यालोचयतां निरूपितवन्तावि
त्यर्थः। पठपुटेत्यत्र चुरादिकाण्डे धातौ लोचृ पठ्यते तस्य लङि
रूपं॥१०५॥

उपाग्नीत्यादि। रामसुग्रीवौ उपाग्नि अग्निसमीपे सख्यं मैत्रीं भ०
अकुरुतां चीतां अग्निसाक्षिकं सख्यमिति भावः अन्योन्यस्य प्रिय
ङ्करौ प्रियं कुरुतइति क्षेमप्रियमद्रात्कुञ्वेति खः विकारसंघेति
सखिशब्दात् भावे यः ततः सख्यानन्तरं परस्परस्य क्षेमङ्कराणि
कुशलजनकानि कार्य्याणि पर्य्यालोचयतां निरूपितवन्तौ लो
चृक्भाषीत्यस्य घ्यां रूपं पूर्ववत् खः॥१०५॥

आश्रितम्भवमुत्क्रुष्टं वल्गितं श्रयितं स्थितं। वक्र मन्यत काकुत्स्थः कपीनां स्वेच्छया कृतं ॥ १०६ ॥

ज॰म॰ आश्रीत्यादि। आश्रितम्भवमश्नं आश्रितेभुवःकरणभावयो रिति खच् उत्क्रुष्टं किलकिलायितं वल्गितं धावनं तथा श्रयितं स्थितञ्च कपीनां स्वेच्छया कृतं एतत्काकुत्स्थोवक्रमन्यत स्वाधि तवान् पुण्यभाजइमे यदेषां स्वेच्छाविहारिणां चेष्टितं अस्माकन्तु शोकसन्तप्तानां न किञ्चिदस्तीति सर्व्वत्र भावे निष्ठा ॥ १०६ ॥

भ॰ आश्रितमित्यादि। आङ्पूर्व्वादश्नातेः क्तः आश्रितस्यद्रष्टे र्भोजनस्य भवनं आश्रितम्भवं भावयेत्वाश्रितान्भुवइति खः उत्क्रुष्टं शब्दकरणं वल्गितं गमनं श्रयितं श्रयनं पूङ्शीधृषेत्यादिना गुणः स्थितं अवस्थानं दोषोमास्थामिति इः सर्व्वत्र भावे क्तः कपीनामे तत्सर्व्वं स्वेच्छया कृतं काकुत्स्थोवक्र अमन्यत स्तुतवान् पुण्या एते स्वेच्छयैवं व्यवहरन्ति अस्माकन्तु शोकसन्तप्तानां न किञ्चि दस्तीति भावः स्वभावविद्धत्वादाहार्य्यशोभारहितत्वात् प्रशंसा वा ॥ १०६ ॥

ततोवलिन्द्रमप्रख्यं कपिर्विश्वम्भराधिपं। सुग्रीवः प्राब्रवीद्रामं वालिनोयुधि विक्रमं ॥ १०७ ॥

ज॰म॰ ततइत्यादि। ततः कार्य्यालोचनानन्तरं सुग्रीवोऽब्रवीत् लक्षि भुवरेट् किमुक्तवान् वालिनोयुधि विक्रमं शौर्य्यमिति प्रधान

कर्म्म राममित्यकथितं कीदृशं रामं बलिन्दमप्रख्यं विष्णुतुल्यं बलिं दमयतीति संज्ञायां भृतॄवृजीत्यादिना खच् अमन्तस्य मित्व ह्रस्वत्वे तथा विश्वं बिभर्त्तीति विश्वम्भरा तस्या अधिपं अधिपाती त्यधिप. आतश्चोपसर्ग इति कः॥१०७॥

तत इत्यादि। कार्य्यालोचनानन्तरं सुग्रीवः कपिर्योधि संग्रामे बलिनो विक्रमं रामं प्राब्रवीत् रामं कीदृशं बलिन्दमप्रख्यं बलिं दमयतीति बलिन्दमस्त्रिविक्रमस्तेन तुल्यं तृभृवृ इत्यादौ व्यक्त दमेर्ग्रहणं अरिन्दम इत्युदाहरणे कर्म्मोपपदेन सूचितं केवलस्य दमेरन्तर्भूतण्यर्थत्वात् सकर्म्मकत्वमिति केचित् सकर्म्मकोऽपि दमिर्दृश्यत इति गोयीचन्द्रेणोक्ता दमित्वा परिसंख्यातानिति निदर्शितं विश्वं बिभर्त्तीति विश्वम्भरा पृथ्वी पूर्ववत् खः तस्या अधिपं स्वामिनं अधिपातीत्यधिपः ह्वनजनादिति डः॥१०७॥ भ०

वसुन्धरायां कृत्स्नायां नास्ति वालिसमो बली। हृदयङ्गममेतत्त्वां ब्रवीमि न पराभवं॥१०८॥

इति खजधिकारः॥

बलीत्यादि। वसुन्धरायां पूर्ववत् खच् वालिना समोऽन्यो बली बलयुक्तो नास्तीति हृदयङ्गमं मम स्वानुभवं ब्रवीमि मम स्वानुभवं हि वस्तु हृदयङ्गममित्युच्यते तेन संज्ञायामित्यधिकृत्य गमश्चेति खच् न पुनस्त्वां पराभवमभिभवं ब्रवीमि॥१०८॥ ज०म०

भ० वस्त्वित्यादि। कृत्स्नायां समस्तायां वसुन्धरायां पृथिव्यां वालितुल्योबलवान् नास्ति वसु धरतीति तृभृवृ इत्यादिना खः एतत्तु हृदयङ्गमं आत्मानुभूतमेव त्वां ब्रवीमि हृदयं गच्छतीति पूर्व्ववत् खः अनुभूतस्येयं संज्ञा न पुनस्त्वां पराभवं न ब्रवीमि तस्माद्भवतः पराभवं न त्वां वदामि तेन नास्ति वालिसमोबलीति प्रागनुभूतं कथितं न तु त्वत्तोऽधिकोऽयमिति सम्प्रति ख्यापितं। इति खप्रधिकारः॥१०८॥

दूरगैरन्तगैर्व्वाणैर्भवानत्यन्तगः श्रियः। अपि संक्रन्दनस्य स्यात् क्रुद्धः किमुत वालिनः॥१०९॥

ज०म० एवम्पराक्रमोऽसौ तत्र किं त्वं करिष्यसीत्याह दूरगैरित्यादि। यतोभवान् क्रुद्धस्सन् संक्रन्दनस्यापि शक्रस्यापि नन्द्यादिभ्योल्युः वाणैः करणभूतैः दूरगैः दूरं गच्छन्तीति अन्तगैः कार्य्य समापकैः अन्तात्यन्तेत्यादिना डः श्रियोलक्ष्म्याः अत्यन्तगः विनाशयिता स्यात् अत्यन्तं पर्य्यवसानं गच्छतीति किं पुनर्वालिनोलक्ष्म्या अत्यन्तगोभवान्विनाशयितेति॥१०९॥

भ० दूरगैरित्यादि। रामं प्रोत्साहयन्नाह भवान् क्रुद्धः सन् संक्रन्दनस्य इन्द्रस्यापि श्रियोलक्ष्म्यावाणैरन्तगोभवेत् किं पुनर्वालिनः श्रियः सुतरामेतस्यपानाशयिता स्यात् वाणैः कीदृशैः दूरगैर्दूरपातिभिः अन्तगैः कार्य्यसमापकैः दूरमन्तञ्च गच्छतीति हनजनाद्गमादेर्डः दितिगर्भं संक्रन्दितवान् इति नन्द्यादिलादनः॥१०९॥

वरेण तु मुनेर्व्वाली सञ्जातो दस्युहा रणे। अवार्य्य प्रसरः प्रातरुद्यन्निव तमोपहः॥ ११०॥

वरेणेत्यादि। मुनेस्तु वरेण दस्युहः दस्यून् शत्रून् वध्यादिति आशिषि हनइति डः अतो रणे अवार्य्यप्रसरोऽनभिभवनीयगतिः सञ्जातः क इव तमोपह इव तमोपहः आदित्यः तमोऽपहन्तीति अपेक्लेशतमसोरिति डः प्रातः प्रभाते उद्यन् उद्गच्छन् उत्पूर्व्वादिणः शतरि इणो यण् अवार्य्यप्रसरस्तदहसावपि सर्व्वं वाक्यं सावधारणं भवतीति प्रातरप्युद्यन्नवार्य्यप्रसर एवेति तेन सर्व्वकाले अस्यावार्य्यप्रसरत्वं सिद्धं नतु प्रातरेवोद्यन्नवार्य्यप्रसर इति ॥ ११०॥ ज॰म॰

वरेणेत्यादि। रामस्याध्यवसायं जिज्ञासुः पुनरपि वालिविक्रममाह मुनेर्व्वरेण तु दस्युहः सवाली रणेऽवार्य्यप्रसरः संजातः काले उद्यन् तमोपहः सूर्य्य इव दस्यून् शत्रून् हन्तीति हनजनादिति डः हन्तेराशिषि डइति परे तन्मते वाली दस्यून् वध्यादिति मुनेर्व्वरेण अवार्य्यप्रसरो जातः स्वमते आशीरर्थानुक्तौ न क्षतिः वरेण दस्युहन्तृत्वे आशीर्गम्यत एव अवार्य्योऽखण्डनीयः प्रसरो गतिर्यस्य सतथा वृगतौ अनि रूपं उत्पूर्व्वस्येणः शतरि उद्यन् तमोऽपहन्तीति पूर्व्ववत् डः तमःक्लेशार्थेभ्योऽपपूर्व्वहन्तेर्डइति परः॥ ११०॥ भ॰

अतिप्रियत्वान्न हि मे कातरं प्रतिपद्यते। चेतो वालिवधं राम क्लेशापहमुपस्थितं॥ १११॥

इति डाधिकारः॥

ज०म० अतीत्यादि। हे राम मदीयं चेतोवालिवधं कर्म्मीभूतमुपस्थितं प्राप्तं न हि प्रतिपद्यते नैव प्रत्येति यस्मात् कातरं व्याकुलं वालिनोऽतिबलयुक्तत्वात् कोदृशं वधं क्लेशापहं दुःखस्योन्मूलकं पूर्व्ववड्डः अतिप्रियत्वाद्वालिवधस्य यस्य हि यत्प्रियं तत्सिद्धमपि असौ न प्रत्येति॥ १११॥

भ० अतीत्यादि। हे राम वालिवधस्यातिप्रियत्वात् मे मम चेतो वालिवधमुपस्थितमुपपन्नमपि न प्रतिपद्यते न प्रत्येति यतः कातरं वालिभयाद्व्याकुलं उपस्थितेऽपि प्रिये कातरस्य प्रतीतिर्नास्तीति भावः वालिवधं कीदृशं क्लेशापहं दुःखस्योन्मूलकं अतएवास्यातिप्रियत्वं क्लेशमपहन्तीति पूर्व्ववत् डः॥ १११॥

शीर्षघातिनमायातमरीणां त्वां विलोकयन्। पतिघ्नीलक्षणोपेतां मन्येऽहं वालिनः श्रियं॥ ११२॥

ज०म० उपस्थितोऽस्य वधइति कथं ज्ञायतइत्याह शीर्षेत्यादि। अरीणां शीर्षघातिनं कुमारशीर्षयोर्णिनिः निपातनात् शिरसः शीर्षभावः आयान्तं विलोकयन् वालिनः श्रियं पतिघ्नीलक्षणोपेतामहं मन्ये पतिं हन्ति यल्लक्षणं तेनोपेतामिवेतीवार्थोऽत्र द्रष्टव्यः अमनुष्यकर्तृकेचेति टक् गमहनेत्युपधालोपः होहन्तेरिति कुत्वं॥ ११२॥

शीर्षेत्यादि। वालिवधस्त्वोपस्थितत्वं दर्शयन्नाह आगतं त्वां विलोकयन्नहं वालिनः श्रियं पतिघ्नलक्षणोपेतां मन्ये श्रियो वालिपत्नीत्वेन निरूपणात् पतिहन्तृचिह्नयुक्तत्वात् वालिवधो गम्यते पतिं हन्तीति हनश्चरगष्टक् हनगमित्युङ्लोपः हनोघ्नो घ्नः अमनुष्यकर्तृकाङ्क्षन्तेष्टगिति परः त्वां किम्भूतं अरीणां शीर्षघातिनं शिरश्छेदिनं गृहादित्वाणिन् कुमारशीर्षाभ्यां हन्तेर्णिनिति परः उत्प्रेक्षावाचकोऽत्र मन्येशब्दः अन्यथास्थितस्यान्यथा कथनात्॥ ११२॥ भ०

**शत्रुघ्नान्युधि हस्तिघ्नो गिरीन् क्षिपन्नकृत्रिमान्। शिल्पिभिः पाणिघैः क्रुद्धस्त्वया जय्योऽभ्युपायवान्॥ ११३॥**

शत्रुघ्नानित्यादि। किंच युधि संग्रामे वाली त्वया जय्यः शक्यो जेतुं यदि युष्मदस्त्राणां शक्तिर्दृष्टा तांश्च द्रष्टुमिच्छामीति वक्ष्यमाणाभिप्रायः चय्यजय्यौ शक्यार्थे इत्यत्रादेशनिपातनं कीदृशः अभ्युपायवान् युद्धोपाययुक्तः किं कुर्व्वन् क्रुद्धः क्षिपन् गिरीन् दिवादित्वाच्छ्यन् अकृत्रिमान् देवनिर्मितान् शत्रुघ्नान् शत्रून् हन्तीति अमनुष्येति टक् हस्तिघ्न इव हस्तिघ्नः हन्तुं शक्तः शक्तौ हस्तिकपाटयोरिति सूत्रस्य मनुष्यकर्तृकार्थारम्भकत्वात् वाली चामनुष्यः शिल्पिभिर्युद्धकुशलैः वानरैः सह क्षिपन् सहार्थस्य गम्यमानत्वात् सहयोगे तृतीया पाणिघैः पाणिवादकैः ते हि हस्तियुद्धेऽन्यस्य वाद्यस्याभावात् हस्तिमुखमेव वादयित्वा गिरीन् प्रहरणान् क्षिपन्ति पाणिघताडघौ शिल्पिनीति कर्त्तरि निपातनं ॥ ११३॥ ज०म०

भ० . अनुप्लानित्यादि। प्रत्ययजनककर्म्मद्वारा रामविक्रमं ज्ञातु मिच्छन् महतामग्रतः साक्षात् स्वाभिप्रायकथनायुक्तत्वात् छलेन रामं स्तुवन्नेवाह ईदृशोऽपि वाली त्वया अय्यः जेतुं शक्यः पण्या वर्ध्येत्यादिना निपातः कीदृशः अभ्युपायवान् युद्धोपाययुक्तः क्रुध्यन् सन् गिरीन् क्षिप्यन् क्षितौानु मुदि कीदृशान् मह्यचिमान् देवनिर्म्मितान् एतेन स्वभावसिद्धमुष्कितत्वं सूचितं अनुप्लान् क्षिप्य माणागिरयः अनुं घ्नन्ति अनुं हन्तुं गिरीन् क्षिपतीति भावः पति घ्नवत् टक् पुनः कीदृशः हस्तिघ्नः हस्तिनं हन्तीति पूर्व्ववत् टक् हस्तिकपाटाभ्यां हन्तेः शक्तौ टगिति परः तेन हस्तिनं हन्तुं शक्त इत्यर्थः स्वमते अर्थादेव शक्तिर्गम्यते शिल्पिभिर्युद्धकुशलैर्वानरै रुपलक्षितः पाणिघैः पाणिवादकैः युद्धे तेषां वाद्यान्तराभावात् हर्षेण हस्तयुगमेव वादयन्ति विशेषणे तृतीया शिल्पिभिः सह गिरीन् क्षिप्यन् इति वा सम्बन्धः एतेन तत्सदृशास्तत्सहाया अपि सन्तीति सूचितं पाणिभ्यां पाणौ हन्तीति पाणिघेति निपातनात् ॥११३॥

आढ्यङ्करणविक्रान्तोमहिषस्य सुरद्विषः। प्रियङ्करणमिन्द्रस्य दुष्करं कृतवान् बधं ॥११४॥

ज०म० आढ्य। अनाढ्यमाढ्यं करोत्यनेनेति आढ्यसुभगेत्यादिना करणे ख्युन् आढ्यङ्करणं विक्रान्तं यस्य वालिनः अनाढ्यः सन् विक्रान्तेनाढ्योभूतइत्यर्थः महिषस्य सुरद्विषोदुन्दुभेर्बधं मरणं यः कृतवान् दुष्करं कष्टसाध्यं प्रियङ्करणमिन्द्रस्य तुष्टिकरं अप्रि यं प्रियङ्करोत्यनेनेति पूर्व्ववत् ख्युन् ॥११४॥

आद्यमित्यादि। किञ्च वाली युधि महिषस्य दैवशत्रोर्वधं भ०
कृतवान् कीदृशः अनाढ्यमाढ्यः क्रियते येन तादृशं विक्रान्तं
विक्रमो यस्य सतथा अनाढ्यः सन्नपि विक्रमेणाढ्योभूतइत्यर्थः नग्न
पलितेत्यादिना खनट् वधं कीदृशं इन्द्रस्य प्रियङ्करणं प्रीङ्प्रीतौ
इगुपधाप्रीति कप्रत्यये प्रियः प्रीतिमान् महिषभयेन प्रागप्रियः
प्रियः क्रियते अनेनेति पूर्ववत् खनट् प्रीतिजनकमित्यर्थः यद्वा
इन्द्रो लोकानामप्रियआसीत् शत्रुवधाक्षमत्वात् पुनस्तत शत्रुव
धेन तु प्रियः क्रियतइत्यर्थः यतो दुष्करं कष्टसाध्यं एतेन इन्द्रा
दप्यधिकोऽयं बलीति सूचितं॥ ११४॥

प्रियम्भावुकतां यातस्तं क्षिपन् योजनं मृतं। स्वर्गे
प्रियम्भविष्णुस्य कृत्स्नं शक्तोऽप्यबाधयन्॥ ११५॥

प्रियमित्यादि। तमेवं सुरद्विषं मृतं पादाङ्गुष्ठेन योजनमध्वानं ज०म०
क्षिपन् क्षिपेस्तौदादिकस्योभयपदिनो रूपं प्रियम्भावुकतां यातस्त
था स्वर्गे प्रियंभविष्णुरासीत् कर्त्तरि भुवइत्यनेनाढ्यादिषूपपदेषु
खिष्णुच्खुकञौ शक्तोऽपि समर्थोऽपि कृत्स्नं लोकमित्यर्थात् अबा
धयन् अपीडयन् बधसंयमनइति चौरादिकः तस्य शतरि रूपं
सदृक्षस्त्वया शक्योजेतुं यदि त्वदस्माकं सामर्थ्यं दृष्टमित्यभिप्रा
येणाब्रवीत् सुग्रीवः॥ ११५॥

प्रियमित्यादि। तं मृतं महिषं पदाङ्गुष्ठेन योजनं अध्वानं भ०
क्षिपन् प्रेरयन् प्रियम्भावुकतां प्राप्तः प्राक् यस्याप्रियआसीत्
दुष्टवधात् तस्यापि प्रियभावं प्राप्तः बाधितुं शक्तः समर्थोऽपि

कृत्स्नं शोकं अबाधयत् अपीडयत् स्वर्गस्य प्रियमासीत् तत्रापि प्रियोभूतः भुवो घेस्विष्णुखुकञाविति सूत्रेण खिष्णुखुकञौ वधक् मध्ये किखाधुरादिः योगनमग्रहणेनाच योगनान्तरितदेशोलच्य ते ग्रहाण्वादिव्याप्ताविति योजनात् द्वितीया एवं सुग्रीवः प्राप्त वीड्रामर्मिति प्रागुक्तेन सम्बन्धः ॥ ११५ ॥

जिज्ञासोः शक्तिमस्त्राणां रामोन्यूनधियः कपेः।
अभिनत् प्रतिपत्त्यर्थं सप्त व्योमस्पृशस्तरून् ॥ ११६ ॥

ज०म० रामोऽपि तदभिप्रायं विदन् यत्कृतवान् तदाह। जिज्ञासोरित्यादि। अस्त्राणांशराणां शक्तिं जिज्ञासोः ज्ञातुमिच्छोः कपेः सुग्रीवस्य न्यूनधियः स्वल्पबुद्धेः यतः प्रमाणान्तरेणापरिज्ञानात् प्रत्यक्षेण ज्ञातुमिच्छतीति प्रतिपत्त्यर्थं संप्रत्ययार्थं रामः सप्त तरून् तालान् पङ्क्त्या स्थितान् एकेन शरेणाभिनत् व्योमस्पृशः स्पृशो ऽनुदके क्विन् ॥ ११६ ॥

भ० जिज्ञासोरित्यादि। यदि तवास्त्राणां भेदकत्वं दृष्टं स्यात्तदा तथा तादृशोवाली जेतुं शक्यत इति सम्भाव्यत इति सुग्रीवाभिप्रायं रामोऽपि ज्ञातवान् यतोन्यूनबुद्धेरत एवास्त्राणां शक्तिं ज्ञातुमिच्छोः कपेः सुग्रीवस्य प्रतिपत्त्यर्थं सम्प्रत्ययार्थं रामः सप्त तालान् अभिनत् भिदेर्णौ रुधादित्वात् श्नम् व्योमस्पृशः अत्युच्छ्रितानि त्यर्थः व्योम स्पृशन्तोति प्राप्नुवन्तीति क्विप् उदकवर्ज्जमुपपदात् स्पृशःक्विनिति परः ॥ ११६ ॥

ततोवालिपशौ बध्ये रामत्विग्जितसाध्वसः। अभ्य भून्निलयं भ्रातुः सुग्रीवोनिनदन् दधृक्॥ ११७॥

ततइत्यादि। ततस्तद्भेदादनन्तरं सुग्रीवोभ्रातुर्निलयम अभ्यभूत् अभिभूतवान् कीदृशः दधृक् धृष्टः ऋत्विगित्यादिना निपातितं धृषेः क्विन् द्विर्व्वचनं क्विन्प्रत्ययस्य कुरिति कुत्वं खकारः चर्त्त्वं ककारः यस्माद्वालिनि पशाविव बध्ये वधार्हे रामेण ऋत्विजा याजकेन जितसाध्वसः अपनीतसाध्वसः तस्माद्धृक् ऋतौ यजति ऋतुं वा यजति ऋतुप्रयुक्तोवा यजतीति ऋतुपूर्व्वाद्यजेः क्विन् यजादित्वात्संप्रसारणम् इदम्ऋत्विक्शब्दनिर्व्वचनं रूढितस्तु याजयितृषु ब्राह्मणेषु क्विन्प्रत्ययस्य कुः निनदन् किलकिलाशब्दं कुर्व्वन् ॥ ११७॥ ज॰म॰

ततइत्यादि। प्रत्ययानन्तरं सुग्रीवोनिनदन् शब्दं कुर्व्वन् भ्रातुर्व्वालिनोनिलयं निवासं अभ्यभूत् अभिभूतवान् भूस्वापिवेति सेर्लुक् वालिनि पशाविव बध्ये सति रामेणैव ऋत्विजा याजकेन जितमपनीतं साध्वसं भयं यस्य येन वा सतथा अतएव दधृक् धृष्टः ऋतौ यजतीति चासुपिति क्विप् यजस्वपाद्योरिति जिः ऋत्विगिति कुः धृषप्रागल्भ्ये क्विपि दधृक् दह्मुगवागित्यादिना निपातः ऋत्विजा पशुरपि इज्यतइति भावः॥ ११७॥ भ॰

गुहायानिरगाद्वाली सिंहोमृगमिव ध्रुवन्। भ्रातरं युद्धिप्रयः संख्ये घोषेणापूरयन्दिशः॥ ११८॥

ज०म० गुहायादित्यादि। तस्य शब्दमाकर्ण्य गुहायानिरगाद्वाली निर्गतः इणोगा लुङि गातिस्थेति सिचोलुक् भ्रातरं ध्रुवन् अभि गच्छन् ध्रुअभिगमने भस्वादादिकस्य वर्त्तमानसामीप्ये लटः शत रि उवङादेशे रूपं संख्ये युद्धे भियोयुङ् भीतेर्योक्ता कर्म्मणि ष्ठत् भीतिं युञ्जन्नित्यर्थः युजेः पूर्व्ववं क्विन् युजेरसमासइति नुम् संयोगान्तलोपः क्विन्प्रत्ययस्य कुः ङकारः कः कमिव सिंहोमृग मिव ध्रुवन् घोषेण दिशआपूरयन् दिशन्ति ताइति दिशः पूर्व्व वत् क्विन्॥११८॥

भ० गुहेत्यादि। सुग्रीवस्य शब्दं श्रुत्वा वाली गुहायाः सकाशात् निरगात् निर्गतः इणोगाख्यां भूस्थापिवदेणइति सेर्लुक् सिंहो यथा मृगं ध्रौति तद्वत् भ्रातरं ध्रुवन् आभिमुख्येन गच्छन् ध्रुस भिसर्पणे भविष्यत्सामीप्ये की अभिधानात् संख्ये युद्धे भियोयुङ् भयस्य प्रयोक्ता भयप्रदइत्यर्थः युजेः क्विप् युजिरोऽसेनुनघा विति नुण् क्वित्यादौ युजःपृथक्ग्रहणात् प्राक्कङ् क्वोर्नुः ङपेञ्जम् नोरिति ङः स्यान्तस्य लुप् घोषेण शब्देन दिशआपूरयन् दिश तीति दिक् त्वासुषिति क्विप्॥११८॥

व्यायच्छमानयोर्मूढोभेदे सदृशयोस्तयोः। वाण मुद्यतमायंसीदिक्ष्वाकुकुलनन्दनः॥११९॥

ज०म० व्यायच्छेत्यादि। तयोर्व्वालिसुग्रीवयोर्व्यायच्छमानयोः कल हायमानयोः सदृशयोः समानयोः भेदे पृथक्त्वे मूढोभ्रान्तः सन्

इच्वाकुकुलनन्दनो रामो बाणमुद्यतं सन्धीकृतमायंसीत् उपसंहृ तवान् समदाङ्भ्योयमोग्रन्थइति तङ् न भवति अकर्त्रभिप्राय त्वात् तत्र कर्त्रभिप्रायइति वर्त्तते आङोयमहनइत्यनेनापि न स्यात् सकर्म्मकत्वात् तत्राकर्म्मकादिति वर्त्तते समानपूर्व्वस्य दृशेः समानान्ययोश्चेत्युपसंख्यानात् त्यदादिष्वित्यादिना कञ् इदङ्किम वतुष्विति समानस्य सभावः॥ ११९॥

व्यायेत्यादि। इक्षाकुकुलनन्दनो रामस्तयोर्वालिसुग्रीवयो भेदे विवेचने मूढः भ्रान्तः सन् वालिवधायोद्यतं कृतसन्धानमपि वाणं सुग्रीववधशङ्कया आयंसीत् संहृतवान् यमरमणमातइति इमसनौ कीदृशयोस्तयोः व्यायच्छमानयोः कलहायमानयोः युध्य मानयोर्व्वा आत्माङ्गढाइहावाहनयमइति न मं सदृशयोरा कृत्या अन्योन्यं तुल्ययो' मूढत्वे हेतुरयं समानोदृश्यतइति त्यदा दिना टक् समानेदं किमदइति समानस्य सादेशः॥ ११९॥ भ०

ऋष्यमूकमगात् क्लान्तः कपिर्मृगसदृग्द्रुतं। कि ष्किन्धाद्रिसदात्यर्थं निष्पिष्टः कोष्णमुच्छ्वसन्॥ १२०॥

ऋष्यमूकमित्यादि। कपिः सुग्रीवः किष्किन्धाद्रिसदा वालिना किं किं दधातीति किष्किन्धा गुहा आतोऽनुपसर्गेकः पारस्करा दिदर्शनात् पूर्व्वस्य सुडागमोमलोपः षत्वञ्च निपात्यते तदुपल क्षितोऽद्रिः किष्किन्धाद्रिः तत्र सीदतीति सत्सूद्विषेत्यादिना क्विप् तेनात्यर्थं निष्पिष्टत्वात् क्लान्तः सन् ऋष्यमूकं द्रुतमगात् समानो पपदात् दृशेः पूर्व्ववत्क्विन् कोष्णमीषदुष्णमुच्छ्वसन् कवञ्चोष्ण इति चकारात् कोः कादेशः॥ १२०॥ अ०म०

भ० ऋष्येत्यादि। कपिः सुग्रीवः किष्किन्धाद्रिसदा वालिना अत्यर्थं निष्पिष्टः पीडितः अतएव क्लान्तः सन् कोष्णं ईषदुष्णं ऋष्यमूकम् द्रुतं शीघ्रं ऋष्यमूकं अगात् गतवान् मृगसदृक् पलायने द्रुतगमनात् मृगतुल्यः क्विपि सदृक् सदृशवत् किखिभिर्वानरैभिरिष्यत इति इष्भेर्न्यन्तात् घञलनट इति अल् निपातनात् किखेः किष्कादेशः किं किं दधातीति किष्किन्धेत्यन्ये किष्किन्धामूर्द्धन्यषकारवती षकारोपान्त्यापि किष्किन्ध्येति श्रीपतिः किष्किन्धा गुहा तदुपलक्षितोऽद्रिस्तत्र सीदतीति चासुविति क्विप्॥ १२०॥

**कृत्वा वालिद्रुहं रामो मालया सविशेषणं। अङ्गदस्वं पुनर्हन्तुं कपिनाह्वाययद्रणे॥ १२१॥**

ज०म० कृत्वेत्यादि। वालिद्रुहं सुग्रीवं वालिनं द्रुह्यतीति सत्सूद्विषेत्यादिना क्विप् मालया सविशेषणं सचिह्नं कृत्वा भेदपरिज्ञानार्थं रामः अङ्गदस्वं वालिनं अङ्गदं सूतइति पूर्व्ववत् क्विन् ओसुपीतिः यणादेशः तं रणे हन्तुं कपिना सुग्रीवेणाह्वाययत् अभिभवं कारितवान् ह्वयतेर्हेतुमण्णिचि शाच्छेत्यादिना पुक्॥ १२१॥

कृत्वेत्यादि। वालिद्रुहं सुग्रीवं वालिभेदज्ञानाय मालया सविशेषणं सचिह्नं कृत्वा रामोऽङ्गदस्वं वालिनं रणे हन्तुं कपिना सुग्रीवेण पुनराह्वाययत् आह्वानमकारयत् चोऽन्तौञोरित्यादौ अखादनीक्रन्दायशब्दायह्वादेति वर्ज्जनात् ण्यन्तस्य कर्त्तुः कपेर्न कर्म्मत्वं शाच्छासाह्वेत्यादिना यक् अङ्गदं सूते जनयतीति चासुविरित्यादिना क्विप् कव्याध्वनेकाच इति वत्वं वालिने द्रुह्यतीति पूर्व्ववत् क्विप्॥ १२१॥

तयोर्व्वानरसेनान्योः संप्रहारे तनुच्छिदं। वालि
नोदूरभाग्रामोबाणं प्राणादमत्यजत् ॥ १२२ ॥

तयोरित्यादि। वानरसेनान्योः वानरस्वामिनोः एरनेकाच इति यण् संप्रहारे युद्धे प्रवृत्ते रामोबाणमत्यजत् वालिनस्तनु छिदं तनुं शरीरं छिनत्तीति पूर्व्ववत् क्विप् ह्रस्वेति तुक् प्राणादं प्रा णापहारिणं प्राणानत्तीति प्राणादं अदोनन्न इति विट् दूरभाक् दूरमवस्थितोरामोदूरं भजत इति भजोण्विः ॥ १२२ ॥ जं०भ०

तयोरित्यादि। तयोर्व्वानरसेनानामीश्वरयोः संप्रहारे युद्धे प्रवृत्ते सति दूरभाक् दूरदेशस्थितोरामोवालिनस्तनुच्छिदं अतएव प्राणादं प्राणभक्षकं बाणं अत्यजत् क्षिप्तवान् सेनां नयति तनुं शरीरं छिनत्ति प्राणानत्तीति च चासुक्षिति क्विप् अत्तेरनन्न लात् क्विविति परः दूरं भजत इति डान्नजसहवहोविण् ॥ १२२ ॥ भ०

वालिनं पतितं दृष्ट्वा वानरारिपुघातिनं। बान्ध
वाक्रोशिनोभेजुरनाथाः ककुभोदश ॥ १२३ ॥

वालिनमित्यादि। रिपुघातिनं रिपून् हन्तुं शीलमस्येति सुप्य जातौ णिनिः तं वालिनं पतितं दृष्ट्वा वानरादश ककुभोदश दिशोभेजुः अनाथाः मत्ताः स्वामिनोहतत्वात् बान्धवक्रोशिनोबा न्धवाइव क्रोशन्तीति कर्त्तर्य्युपमानइति णिनिः ॥ १२३ ॥ जं०भ०

वालिनमित्यादि। वालिनं पतितं दृष्ट्वा वानरादश ककुभो दिशोभेजुः पलायिताइत्यर्थः रिपुघातिनं रिपुं हन्तीति ग्रहादि भ०

त्याशिन् बान्धवाक्रोशिनः बान्धववत् आक्रोशन्तः क्रन्दन्तः कर्त्त र्य्युपमानेणिनिति पर: खमते ग्रहादित्वाणिन् इवार्थस्य गम्य मानत्वं अनाथाः वालिनाशेन खामिरहिताः॥ १२३॥

धिग्दाशरथिमित्यूचुर्मुनयो वनवर्त्तिनः। उपेयु र्मधुपायिन्यः क्रोशन्त्यस्तं कपिस्त्रियः॥ १२४।

ज०म० धिग्दाशरथिमित्यादि। येषां वत्यन्यस्थाने वृत्तौ च वनएव वर्त्तितुं शास्त्रतोनियमः ते वनवर्त्तिनोमुनयः अतइति णिनिः धिगिमं दाशरथिमित्यूचुः उक्तवन्तः येनानपराधेऽपि वालिनो वधं कृतमिति कपिस्त्रियश्च वालिनमुपेयुः मधुपायिन्यः आभी क्ष्ण्येन मधु पिबन्त्यः बहुलमाभीक्ष्ण्येइति. णिनिः क्रोशन्त्योहा नाथेति रुदन्त्यः॥ १२४॥

भ० धिगित्यादि। दाशरथिं रामं धिगिति वनवर्त्तिनो मुनयऊचुः महतामन्यासक्तघातित्वानौचित्यात् धिक्समयेत्यादिना दाश रथेर्द्वितीया वने वर्त्तन्तइति ग्रहादित्वात् णिन् कपिस्त्रियः क्रोश न्त्यो हा नाथेति क्रन्दन्त्यस्तं वालिनं उपेयुरुपगताः उपपूर्व्वस्येण श्छान्दसि रूपं मधुपायिन्यः मधूनि पीतवत्यः ग्रहादित्वात् णिन् यन्त्रिकिदिति यन् परमते तु आभीक्ष्ण्ये तु णिन् पुनःपुनर्मधु पिबन्ति सेत्यर्थः आभीक्ष्ण्यार्थस्य णिनोक्तत्वात् न दित्वं खमतेऽप्य भिधानादेव॥ १२४॥

रामं मुनेरुपालब्ध श्रूरमानी कपिप्रभुः। अणावेदन या ग्लानन् साधुम्मन्यमसाधुवत्॥ १२५॥

राममित्यादि। कपिप्रभुर्वाली राममुच्चैर्महता शब्देनोपालभ्य ज०म०
उपालब्धवान् लभिरात्मनेपद्यनिट् तस्य लुङि झलो झलीति सिचो
लोपः झषस्तथोर्धोधः झलाञ्जश्झशि शूरमानी शूरमात्मानं
मन्यमानः आत्ममाने खश्चेति चकाराणिनिः अणवेदनया स्वायन्
ग्लानिमुपगच्छन् साधुमन्यं साधुमात्मानं मन्यमानं रामं तेनैव
खश् तस्मिन् सार्वधातुके परतोदिवादित्वाच्छ्यन् पूर्व्वपदस्य मुम्
असाधुवदसाधुमिव असाधुना तुल्यं वर्त्तते इति वतिः॥ १२५॥

राममित्यादि। अणवेदनया स्वायन् कपिप्रभुर्व्वाली उच्चैः भ०
शब्देन राममुपालभ्य निन्दितवान् लभेस्तानि झषस्तथोर्धोऽध इति
सेर्लोपः ढभाष्तथोरिति तस्य धः झषुष्टयोरिति भस्य वः शूर
मानी आत्मानं शूरमन्यमानः अभिधानात् मन्यतेरात्मनोम
नने णिन् यद्वा शूरसम्बन्धिमानोविद्यतेऽस्येति मेधाजादिति
इन् वीराभिमानवानित्यर्थः शूरश्चासौ मानी चेति वा रामं
कीदृशं साधुमन्यं साधुमात्मानं मन्यमानं भ्रातृवधूहरणेनापि
तस्य दण्डस्यैव करणात् मन्यात्स्वार्थे इति खश् श्चित्त्वाद्हले दिवा
दित्वात् श्यन् खित्यव्याजिति मम् असाधुवत् असाधुना तुल्यं असा
धुत्वात् हननात् तत्राद्य इति वत् असाधुं यथा निन्दति तथोपा
लब्धेति वा॥ १२५॥

मृषासि त्वं हविर्याजी राघव च्छद्मतापसः। अन्य
व्यासक्तघातित्वाद्ब्रह्मघ्नां पापसम्मितः॥ १२६॥

ज०म० वृथाधीत्यादि। हे राघव त्वं छद्मना तापसः सन् वृथैव मिथ्यैव हविर्याजी हविषा करणेनेष्टवानपि न लोकप्राप्तभवद्दत्यभिप्रायः करणेयजइति भूते णिनिः इतःप्रभृति भूतइत्यधिक्रियते यतो ब्रह्मघ्नां पापसंमितः ब्रह्म हतवन्तइति ब्रह्मेत्यादिना क्विप् तेषां पापेन तुल्यः कुतः अन्यव्यासक्तघातित्वात् अन्यस्मिन् सुग्रीवे व्यास क्तं मां हतवान् कर्मण्यिहनइति णिनिः तत्र कुत्सितग्रहणं कर्त्तव्य मित्युक्तं यदि सुग्रीवेण विरोधः किं तवायातमिति कुत्सितहननं ॥ १२६ ॥

भ० वृथेत्यादि। हे राघव त्वं हविर्याजी मृषा स्वर्गादिफलावा प्त्ये हविषा करणेन इष्टवानिति मिथ्या यजादित्वात् णिन् कर णाद्यजोभूतेणिनिति परः स्वमते करणादिर्भूतकालस्य विशेषा मुक्तेर्याड्यते यतश्छद्मना तापसः तपस्वी न तु वस्तुतः अन्यव्या सक्तघातित्वात्त्वं ब्रह्मघ्नां ब्रह्माणं हतवतां पापसम्मितः पापेन सम्मितस्तुल्यः तुल्यपापाश्रयत्वात् पुरुषोऽपि तुल्यइत्युच्यते पापे न करणभूतेन ब्रह्मघ्नां तुल्यइत्यन्वयः अन्यस्मिन् सुग्रीवे व्यासक्तं हतवानिति यजादित्वाणिन् कर्मणोहनःकुत्सायामिति परः हन स्तक् छेर्घ्नोऽङ्गिति चेति घः ततस्ततोभावइति त्वं ब्रह्माणं हत वानिति चासुपिति क्विप् ब्रह्मभ्रूणवृत्रात्क्विप्निति परः स्वमते अविशेषात् कालत्रयं प्राप्तमत्रातीतविवक्षा यदानोऽलोपइत्य कारलोपे हनोघ्नः ॥ १२६ ॥

पापकृत्सुकृतां मध्ये राज्ञः पुण्यकृतः सुतः। माम पापं दुराचार किं निहत्याभिभाष्यसि ॥ १२७ ॥

तदेव दर्शयन्नाह पापेत्यादि। हे दुराचार मामपापं निहत्य पापकृत् कृतकिल्बिषः राज्ञोदशरथस्य पुण्यकृतः सुतः सुकृतां मध्ये किमभिधास्यसि वक्ष्यसि किं चेपे न किञ्चिदभिधातव्यमस्तीतिभावः सर्व्वत्र सुकर्म्मपापेत्यादिना क्विप्॥ १२७॥ ज०म०

पापेत्यादि। हे दुराचार अपापं मां निहत्य सुकृतां शोभनक्रियावतां मध्ये किमभिधास्यसि किं वक्ष्यसि यतस्त्वं पुण्यकृतो दशरथस्य सुतः पुत्रोऽपि भूत्वा पापकृत् पापं सुष्ठु पुण्यञ्च कृतवानसि आसुभित्यादिना क्विप् पुण्यादेः कर्म्मणः सोपपदत्वः कर्त्तरि भूतइति परः स्वमतेऽविशेषात् सर्व्वं विवक्षितं॥ १२७॥ भ०

अग्निचित्सोमसुद्राजा रथचक्रचिदादिषु। अनलेष्विष्टवान् कस्मान्न त्वयापेक्षितः पिता॥ १२८॥

अग्निचिदित्यादि। कस्मात्त्वया पिता नापेक्षितः नानुष्ठितः येनैवं कृतवानसीति कीदृशः अग्निचित् आहिताग्निः अग्निं चितवानिति अग्नौचेरिति क्विप् सोमसुत् सोमं सुतवान् सोमयाजी सोमेसुञ इति क्विप् अनलेषु अग्निषु इष्टवान् रथचक्रचिदादिषु रथचक्रवच्चीयतइति कर्म्मण्यग्न्याख्यायामिति क्विप् आदिशब्दात्श्येनचिदादिग्रहणं अग्न्यर्थोहि तदाकारइष्टकाचयइत्युच्यते तद्द्वारेणाग्निरपि॥ १२८॥ ज०म०

अग्नीत्यादि। कथं त्वया पिता दशरथोराजा नापेक्षितः न चिन्तितः नानुष्ठितोवा येनैवं कृतमिति भावः अग्निचित् आहिताग्निः सोमसुत् सोमयाजी रथचक्रचिदादिषु अग्निविशेषेषु भ०

दृष्टवान् कृतयज्ञः अग्निं चितवान् सोमं सुतवान् रथचक्रवच्चो यते इति च चासुचित्यादिना क्विप् रथचक्रचिदादिश्वित्यादि शब्दात् श्येनचिदादिष्वपि अन्यर्थौ रथचक्राद्याकारद्दृष्टकार चनाविशेषः क्रियते तद्वारेणाग्निरपि रथचक्रचिदादितयाव्य पदिश्यते दृष्टवानिति यजेः क्तवतुः यजयजपाचोरिति जिः ॥ १२८ ॥

मांसविक्रयिणः कर्म्म व्याधस्यापि विगर्हितं । मां घ्नता भवताकारि निःशङ्कं पापदृश्वना ॥ १२९ ॥

ज०म० मांसेत्यादि । मांसविक्रयिणः कुत्सितकर्मकारिणो व्याधस्यापि विगर्हितं निन्दितं कर्मणोनिर्विक्रियइति इनिः तत्र कुत्सितग्रहणं कर्त्तव्यमित्युक्तं निकृष्टकर्मकरणेनेति यद्भवता पापदृश्वना पापं दृष्टवता दृशेः क्वनिप् नसंयोगाद्दमन्तादिति अल्लोपप्रतिषेधः कर्म्म अकारि कृतं कर्मणि लुङ् निःशङ्कं शङ्कां त्यक्त्वा किं कुर्व्व ता मां घ्नता मारयता हन्तेः शतरि गमहनेत्युपधालोपः होह न्तेरिति कुत्वं ॥ १२९ ॥

भ० मांसेत्यादि । मांसविक्रयिणोव्याधस्यापि यद्विगर्हितं कर्म्म तत्त्वया मां घ्नता निःशङ्कं शङ्कां त्यक्त्वा कृतं पापदृश्वना पापं दृष्ट वतापि पापानभिज्ञेन मांसोपजीविना व्याधेनापि अन्यासक्तस्य निष्प्रयोजनत्वाद्दानरस्य च हननं निन्द्यते भवता तु पापं जान तापि तत्कृतमिति भावः व्याधस्येति कर्त्तरि सम्बन्धविवक्षा यदा व्याधस्यापीदृशं कर्म्म लोकैर्विशेषेण निन्दितमित्यर्थः मांसविक्रयी

ऽस्याखीति नैकाजादिति इन् विक्रीणातेर्भूते कुत्सायामिति परः तन्न साधु अत्र व्याधस्य मांसविक्रयणे कुत्साया अभावात् इग्नेस्का सुपित्यादिना क्वनिप् ॥ १२८ ॥

बुद्धिपूर्व्वं ध्रुवन्न त्वा राजकृत्वा पिता खलं। सह युध्वानमन्येन योऽहिंनोमामनागसं ॥ १३० ॥

बुद्धिपूर्व्वमित्यादि। त्वत्पिता त्वां खलं असाधुचरितं ध्रुवन् ज०म० गच्छन् ध्रुगतिस्थैर्य्ययोरिति इदादौ पठ्यते तस्य गतौ ज्ञानार्थे वर्त्तमानस्य शतरि विकरणलोपे उवङादेशे रूपं यत्न राजकृत्वा कस्य तवेत्यर्थात् राजनियुधिकृञ इति क्वनिप् तत्तस्य बुद्धिपूर्व्वं ध्रुवमवश्यं तस्येति व्याख्याने कृत्प्रयोगे कर्म्मणि षष्ठ्या भवितव्यं यस्त्वं मामनागसमपापमन्येन सह युध्वानं अन्येन सुग्रीवेण सह योद्धुं प्रवृत्तं सहेचेति क्वनिप् अहिनः हिंसितवान् हिंसेर्लङि मध्यमपुरुषैकवचने अमि,श्नमलोपे हल्ङ्यादिलोपे इले च रूपं ॥ १३० ॥

बुद्धीत्यादि। खलं दुष्टचरितं त्वां पिता दशरथो यत्न राज भ० कृत्वा राजानं न कृतवान् तद्बुद्धिपूर्व्वं खलमविज्ञानपूर्व्वकमेव ध्रुवं निश्चितं त्वासुपित्यादिना कृञः क्वनिप् खरुतनपिति द्वोचोपीना मित्यादिना त्वादेशः क्वचिदपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्तत इति न्यायात् ढचेकृतीत्यस्य विषयेऽपि कर्म्मक्रियेत्यादिना द्विती या केचित्तु ध्रुविस्थैर्य्ये इत्यस्य शतरि ध्रुवन् धातूनामनेकार्थत्वात् ज्ञानार्थः पिता त्वा खलं ध्रुवन् यस्त राजकृत्वा अर्थात्तव तद्बुद्धि

पूर्व्वमित्याहुः अन्ये तु इति निषेधे आशब्दः स्मरणे पीडार्थी वा राजहत्येत्यच तवेत्यर्थाद्गम्यते गम्यः प्रशेषात् अखलमिति मामि त्यस्य वक्ष्यमाणस्य विशेषणमित्याहुः खलमाह यस्त्वं मां अहि नो हतवान् कीदृशं अन्येन सुग्रीवेण सह युध्यानं योद्धुं प्रवृत्तं युधेः पूर्व्ववत् क्वनिप् अनागसं अनपराधं अहिनइति हिंसिहिं सायां श्याः विप् रुधादित्वात् अम् ननोनलोपइति इदनुबन्ध जन्यनकारस्य लोपः हलङ्यादिसेरिति सेर्लोपः॥ १३०॥

पञ्च पञ्चनखाभक्ष्या येप्रोक्ताःकृतजैर्द्दिजैः। कौशल्याज शशादीनां तेषां नैकोऽप्यहं कपिः॥ १३१॥

ज०म० मांसार्थं हतइति चेदाह पञ्चपञ्चेत्यादि। हे कौशल्याज कौशल्याजात सप्तम्यां जनेर्डः ये पञ्च पञ्चनखाः शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमइति कृतजैः कृतयुगजातैः सप्तम्यां जनेर्डः द्विजैर्द्विजातैः अन्येष्वपि दृश्यतइति डः सप्तम्यामित्युपल क्षणं असप्तम्यामपि दृश्यते भक्ष्याः भक्षणीयाः प्रोक्ताः तेषामहमे कोऽपि न भाविता अहं कपिः तत्किमिति हतोऽहं त्वयेति॥ १३१॥

भ० पञ्चेत्यादि। राजभिर्म्मांसाय मृगाहन्यन्तइति समानं निराकुर्व्वन्नाह हे कौशल्याज ये पञ्चनखाः पञ्च शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमइत्यादिवाक्येन कृतजैः सत्ययुगजातै र्द्विजैर्महर्षिभिर्भक्षणयोग्याः प्रोक्ताः कथिताः तेषां शशादीनां मध्ये अहं नैकोऽपि यतःकपिरहं अतोऽभक्ष्यत्वान्मम वधोव्यर्थ एव कौशल्यायाः सकाशाज्जातः कृते जातः द्विर्ज्जातइति च हनजना दिति डः पैतृकधर्म्मग्राहितया कुत्सार्थं मातुरत्कीर्त्तनं॥ १३१॥

कथं दुष्टः स्वयं धर्म्मे प्रजास्त्वं पालयिष्यसि। आत्मानुजस्य जिह्रेषि सौमित्रेस्त्वं कथन्न वा॥१३२॥

कथमित्यादि। स्वयमात्मना धर्म्मे दुष्टः दुस्थः सन् अपदुःसुपुस्थद्रत्यौणादिकः कुप्रत्ययः कथं प्रजाः पालयिष्यसि नैवेति भावः उपसर्गेचसंज्ञायामिति जनेर्डः कथं वा सौमित्रेर्भ्रातुरात्मानुजस्य कनीयसः आत्मानमनुजात इत्यनौ कर्म्मणि इति डः न जिह्रेषि न लज्जसे॥१३२॥ ज०म०

कथमित्यादि। त्वं कथं प्रजाः पालयिष्यसि अपि तु नैवेति भावः यतः स्वयमात्मनो धर्म्मे दुःस्थः दुःखेन तिष्ठतीति स्थनजनादिति डः दुष्ठुरिति पाठे औणादिकः कुप्रत्ययः'षलञ्चाभिधानात् प्रजायन्तइति प्रजालोकाः पूर्व्वेण डः स्त्रीलं संज्ञा चाभिधानात् आत्मानुजस्य सौमित्रेः कथं न वा जिह्रेषि न लज्जसे आत्मानमनुजातइति पूर्व्ववत् डः॥१३२॥ भ०

मन्ये किञ्जमहं घ्नन्तं त्वामक्षत्रियजे रणे। लक्ष्मणाधिज दुर्वृत्तं प्रयुक्तमनुजेन नः॥१३३॥

मन्यइत्यादि। किञ्जं त्वामहं कुतोऽपि जातं न राजजातं मन्ये पञ्चम्यामजातावि ति डः घ्नन्तं मारयन्तं अक्षत्रियजे रणे क्षत्रियादजाते हे लक्ष्मणाधिज लक्ष्मणाग्रज नोऽस्माकमनुजेन भ्रात्रा प्रयुक्तं जातावपि दृश्यते अक्षत्रियजइति उपसर्गे च संज्ञायामित्युक्तं असंज्ञायामपि दृश्यते लक्ष्मणाधिजइति अनौकर्म्मणीत्युक्तं कर्म्मण्यपि दृश्यते अनुजइति सर्व्वेचान्येष्वपि दृश्यतइति डः इत्युपपदाधिकारः॥१३३॥ ज०म०

भ० मन्येइत्यादि। हे लक्ष्मणाधिज हे दुर्हृत्त दुश्चरित्र अहं त्वां किञ्चं कुतोऽपि जातं कुत्सिताद्वा जातं मन्ये न तु राज्ञोजातं यतः अक्षत्रियजे क्षत्रियादजाते रणे मां घ्नन्तं मारयन्तं अस्माकमनुजेन कनिष्ठेन सुग्रीवेण प्रयुक्तं सर्व्वत्र हनजनादिति जनेर्डः परे तु विशेषसूत्राण्युक्ता अन्यत्रापि दृश्यतइत्यनेन तेषां प्रायिकत्वं बोधयन्ति तथाहि पञ्चम्यन्तादजातेर्डः इत्यस्य किञ्जइत्युदाहरणं जातेरपि अक्षत्रियजइत्युदाहृतं उपसर्गात् संज्ञायामित्यस्य प्रजास्त्वं पालयिष्यसीत्युदाहृतं असंज्ञायामपि अधिज इति कर्म्मणोऽनेरित्यस्य आत्मानुजम् जिह्वेषीत्युदाहरणं अकर्म्मणोऽपि अनुजइति अतएव मन्दाधिया वांपदेवेन विशेषिणोक्तः ॥१३३॥

प्रत्यूचे वालिनं रामोनाकृत्यं कृतवानहं। यज्वभिः सुत्वभिः पूर्व्वैर्जरद्भिश्च कपीश्वर ॥१३४॥

ज०म० प्रत्यूचइत्यादि। रामोऽपि वालिनं प्रत्यूचे प्रत्युक्तवान् किमित्याह हे कपीश्वर पूर्व्वैर्जरद्भिर्वृद्धैः जीर्य्यतेरतृन् यज्वभिः याज्ञिकैः सुत्वभिः सोमयाजिभिः सुयजोर्ङ्वनिप् नाकृतं कृतवानहं अपि तु कृतमेव कृतवानहं निष्ठेति भूते क्तक्तवतू॥१३४॥

भ० प्रत्यूचइत्यादि। रामोवालिनं प्रत्यूचे किं प्रत्युक्तवानित्याह हे कपीश्वर यज्वभिर्याज्ञिकैः सुत्वभिः सोमपीतिभिः पूर्व्वैर्जरद्भिर्वृद्धैर्मान्धातृप्रभृतिभिर्यन्न कृतं तदहं न कृतवान् दृष्टवानिति

आसुषिति वनिप् सुत्वानिति क्वनिप् खखतनृपिति जीर्य्यतेीति
शत्रुः जीनोजीर्णोजरन्नपीत्यमरः॥१२४॥

ते हि ज्वालैर्गले पाशैस्तिरश्चामुपसेदुषां। ऊषुषां
परदारैश्च सार्द्धं निधनमैषिषुः॥१२५॥

तेहीत्यादि। हि यस्मात्ते पूर्व्ववृद्धाआलैर्गले पाशैश्च तिरश्चां मृ ज०म०
गपक्षिसरीसृपाणां तिरोऽञ्चतीति ऋत्विगित्यादिना क्विन् आमि
अचइत्यल्लोपः तेषां निधनं विनाशमैषिषुः इष्टवन्तः इषेर्लुङि
रूपं कीदृशं उपसेदुषां समीपमुपगतवतां तेषां समीपवर्त्तिनाम्
पद्रवकारित्वात् भाषायामिति क्वसुः परदारैश्च सार्द्धमूषुषां
उषितवतां पूर्व्ववत्क्वसुः वसेर्यजादित्वात्संप्रसारणं॥१२५॥

तेहीत्यादि। पूर्व्वोक्ते हेतुरयं हि यस्मात् तेऽपि पूर्व्वे वृद्धास्ति भ०
रश्चां पक्षिमृगादीनां आलैर्गले पाशैश्च निधनं ऐषिषुः इच्छन्ति
स्म न केवलं तिरश्चां परदारैः परस्त्रीभिः सार्द्धं ऊषुषां कृत
निवासानाञ्च परदारैः सह वासमग्रिमश्लोके वच्यति अतएव
वध्यत्वप्रतिपादकं रूपद्वयमेव त्वय्यस्ति उभयविशेषणमाह उप
सेदुषां समोपमुपगतानां स्ववासस्थितानामपीत्यर्थः केचित्तु
परदारैः सार्द्धमूषुषामिति तिरश्चामित्यस्य विशेषणं वध्यत्वद्
र्शनायेत्याहुः तिरोऽञ्चतीति क्विप् सहसन्तिरइति तिर्य्यादेशः
तिर्य्यगमुमूयगिति तिरश्चादेशः उपपूर्व्वसदष्टीपमत्रदिति क्वसुः
वसोर्यसेक्वाजिति इम् धुर्द्धिष्ठ्यक्वीति द्वित्वं तृफलेति अतएत्वं वि
लोपश्च वसोर्वःसेमपीति उः वसेः पूर्व्ववत् क्वसुः इम् च व्यथ

यवेति खेर्ष्णिः यवखपाश्चोरिति प्रकृतेर्ष्णिः किलादिति षः इषु इच्छायां सन् यांसि: अनुखिदेः भूयोऽम् ॥ १२५ ॥

अहन्तु शुश्रुवान् भ्रात्रा स्त्रियं भुक्तां कनीयसा।
उपेयिवाननूचानैर्निन्दितस्त्वं लताम्रुग ॥ १२६ ॥

ज०म० अहमित्यादि। हे लताम्रुग हे शाखाम्रुग अहं पुनः शुश्रुवान् श्रुतवान् पूर्व्ववत्कसुः यदुत भ्राता कनीयसा भुक्तां स्त्रियं त्वमुपेयिवान् सन् अनूचानैर्वेदविद्भिर्निन्दितस्ततोमे नैव दोषः उपेयिवाननूचानइति उपेयिवानित्यादिना निपातितौ ॥ १२६ ॥

भ० अहमित्यादि। हे लताम्रुग शाखाम्रुग अहं शुश्रुवान् किं शुश्रुवानित्याह कनीयसा कनिष्ठेन भ्राचा सुग्रीवेण भुक्तां स्त्रियं त्वमुपेयिवान् उपगतोऽसि अतएव अनूचानैर्व्वेदविज्ञैस्त्वं निन्दितः तेन तव बधे मम दोषोनास्तीति भावः इणोतेरिणश्च पूर्व्ववत् कसुः द्वित्वं वसोर्घ्रसेकाजिणातइमित्यच स्विसहितस्यैकाचोग्रहणं तेन न ओरिम् इणस्तु इमि यिणोऽभ्यणाविति यादेशः खेःकिति घः अनुपूर्व्ववचः कानः वचोऽरे पूर्व्ववत् जिः अनूचानः प्रवचने साङ्गेऽधीती गुरोश्च यदत्यमरः। लता ज्योतिष्मती पृक्का शाखा वल्ली प्रियङ्गुश्चिति विश्वः ॥ १२६ ॥

अन्वनैषीत्ततोवाली चपावानिव राघवं। न्यचिपच्चाङ्गदं यत्नात् काकुत्स्थे तनयं प्रियं ॥ १२७ ॥

ज०म० ययुरित्यादि। मारुतिप्रष्ठाः हनूमदग्रेसराः सीतां द्रष्टुं विन्ध्य पर्व्वतं ययुः शरन्मेघैः प्रावारैरिव प्रावरणैरिव प्रच्छन्नं वृणोति राच्छादनइति घञ् प्रवरैः श्रेष्ठैः अनाच्छादने पृहेत्यादिना अप्॥५३॥

भ० ययुरित्यादि। प्लवङ्गमावानराः सीतां द्रष्टुं विन्ध्यपर्व्वतं ययुः प्लवेन गच्छतीति तृभृवृहजीत्यादिना खः कीदृशाः मारु तिर्हनूमान् प्रष्ठोऽग्रसरो येषां ते तथा प्रादग्रगेस्थस्य षत्वमभि धानात् मनीषादित्वाद्वा कीदृशं शरन्मेघैः प्रच्छन्नं प्रवरैः श्रेष्ठैः प्रावारैः प्रच्छदपटैरिव अभिधानात् प्राङ्पूर्व्वात् वृञआच्छा दने घञ् अन्यथाल्॥५३॥

परिभावं मृगेन्द्राणां कुर्व्वन्तोनगमूर्द्धसु। विन्ध्ये तिग्मांशुमार्गस्य चेरुः परिभवोपमे॥५४॥

ज०म० परीत्यादि। मृगेन्द्राणां सिंहानां परिभावमभिभवं कुर्व्वन्तः विन्ध्ये चेरुः भ्रान्ताः परौभुवोवज्ञानइति घञ् कीदृशे परि भवोपमे आदित्यमार्गस्य परिभवनं अत्युच्चत्वात् घञभावपक्षे अप्॥५४॥

भ० परीत्यादि। ते नगमूर्द्धनि गिरिशिखरे मृगेन्द्राणां सिंहानां परिभावं तिरस्कारं कुर्व्वन्तो विन्ध्ये चेरुः सञ्चरन्ति कीदृशे सूर्य्य वर्त्मनः परिभवइव तथात्युच्चत्वात् परिभवशब्देनाच तत्कर्त्ता लक्ष्यते आदित्यमार्गस्य परिभवेणोपगता सा लक्ष्मीः शोभा यस्येति वा यद्वा तत्परिभवक्रियरयैवात्र लोकभयदत्वेन साम्यं

विवक्षितं परिपूर्व्वाद्बुधेश्वघञतो स्वभावादवञ्चनामार्थता न गच्छ तीति नगः हनजनादिति डः॥ ५४॥

भ्रेमुः शिलोच्चयांस्तुङ्गानुत्तेरुरतरान्नदान्। आशं सवोल्लवं शत्रोः सीतायाश्च विनिश्चयं॥ ५५॥

भ्रेमुरित्यादि। उत्पूर्व्वाच्चिनोतेः एरजित्यच् शिलाभिरुच्चयो ज०म० येषां तान् शिलोच्चयान् भ्रेमुः भ्रमणक्रियायाश्चाचलात्सकर्म्मकता नदान् अतरान् तरितुमशक्यान् उत्तेरुः उत्तीर्णवन्तः शत्रोर्लवमुच्छेदनं सीतायाश्च विनिश्चयं विनिर्णयमाशंसवः आशं सनशीलाः सनाशंसभिक्षउः नरलवौ च्छदोरविति अणप्रत्ययौ विनिश्चयदति यहेरित्यच्॥ ५५॥

भ्रेमुरित्यादि। ते भीमान् भयदान् शिलोच्चयान् पर्व्वतान् भ० भ्रेमुः तृफल इत्यादिना अतएत्वं खिलोपश्च भ्रमणस्य गतिविशेष त्वात् सकर्म्मकता शिलाभिरुच्चयोवृद्धिर्येषां उच्चीयतइति वा उच्चयस्तूपः शिलाभिरुच्चयः शिलोच्चयः अतरान् अन्यैस्तरितु मशक्यान् नदान् उत्तेरुः तृतरेऽभिभवश्रुत्यां च्चतोपुःकिब्शं शत्रोर्लवं छेदं आशंसवइच्छवः सीतायाविशेष्य निश्चयञ्च आशं सवः सनभिक्षाशंसउः चितृलूभ्योऽलू॥ ५५॥

आदरेण गमञ्चक्रुर्विषमेष्वप्यसंघसाः। ल्याशुवन्तो हिंस्रोऽन्यादान् कुर्व्वन्तः सव्यधान् हरीन्॥ ५६॥

अ०म० आदेत्यादि । विषमेष्वपि प्रदेशेषु गमं गमनं चक्रुः आदरेणा नवज्ञया ग्रहेरित्यप् असंघसाः त्यक्ताहाराः उपसर्गेऽदइति अपि घञपोश्चेति अदेर्घस्लादेशः हरीन् सिंहान् सव्यधान् सप्र हारान् व्यधजपोरित्यप् सप्रहारत्वादन्यादान् परित्यक्ताहा रान् कुर्व्वन्तः नौणचेति निपूर्व्वाददेरण्प्रत्ययः तस्मिन्नदेर्न घस्ला देशः चकारादपि तत्र नियमः दिशोव्याप्नुवन्तः सर्व्वव्यापिनः ॥ ५६ ॥

म० आदेत्यादि । ते विषमेष्वपि देशेषु गमं चक्रुः रामस्य कार्य्यमि त्यादरेण न तु परस्य कार्य्यमित्यवज्ञया कीदृशाः असंघसाः सम्य गाहाररहिताः निरन्तरभ्रमणात् दिशोव्याप्नुवन्तः हरीन् सिंहान् सव्यधान् सप्रहारान् अतएवान्यादान् आहाररहि तान् कुर्व्वन्तः गमश्चव्यधिभ्योऽल् घस्लृः सन्वल्घञीति अदे र्घसादेशः निपूर्व्वाददेर्नान्यन्येतिकेति णप्रत्ययः घञि तु घसा देशप्रसङ्गात् नरदोणात्वाविति परः जेमनं लेपआहारोनिघसो न्याद इत्यपीत्यमरः ॥ ५६ ॥

सम्वेरुः सहसाः केचिदस्वनाः केचिदाटिषुः । संया मवन्तोयतिवन्निगदानपरेऽमुचन् ॥ ५७ ॥

अ०म० सम्वेरुत्यादि । सहसाः सस्मिताः अस्वनास्तूष्णीकाः स्वनहसो र्वेत्यप् यतिवत् संयामवन्तः नियमवन्तः यमः समुपनिविषुचेति घञ् आटिषुः अटितवन्तः अटेर्लुङि रूपं अपरे निगदान्वचना न्यमुचन् नौगदेत्यादिना विकल्पेनापोविधानात् घञ् ॥ ५७ ॥

सत्त्वे हरित्यादि। केचिद्वानराः सहसाः सत्त्वस्थैः तृप्ततेति भ०
अतएत्वं खिन्नापश्च केचिद्दक्खनामौगिनः यतिवत्संयामवन्तः
संयमिनः सन्तश्चाटिषुर्गतवन्तः अटगतौ चांसिः अनुस्विदेरिति
अनवस् अपरे निगदान् अमुचन् अन्तःस्थितस्य शब्दस्य वहिर्निः
सारणं मोचः तं कृतवन्त इत्यर्थः सहस्वननिगदाश्चलन्ताः
संयामोघजन्तः ॥ ५७ ॥

अथ क्रमादनिःक्राणानराः चीणपणाइव। अम
दाः सेदुरेकस्मिन्नितम्बे निखिला गिरेः ॥ ५८ ॥

अथेत्यादि। अथ परिभ्रमणादनन्तरं क्रमेण परिश्रमेण अम ज०म०
दाः गतहर्षाः मदोऽनुपसर्गेइत्यप् अतएव निःक्राणाः निश्शब्दाः
क्वणोवीणायाञ्चेत्यपोविकल्पेन घञ् वीणादिविषयमेतत् क्वणेर्नि
पूर्व्वादनुपसर्गादीणादिविषयाच्च विकल्पेनाणप्रत्ययइत्युक्तं एक
स्मिन् गिरेर्नितम्बे सेदुः निषण्णाः निखिलाः समस्तावानराः चीण
पणाइव अर्थरहितानराइव पणयन्तइति पणाः व्यवहाराय
कृते पणे व्यवस्थायन्तो नित्यं पणः परिमाणे इत्यप् ॥ ५८ ॥

अथेत्यादि। भ्रमणानन्तरं ते निखिलाः सर्व्वे वानराः कस्य भ०
चिद्गिरेर्नितम्बे सेदुर्निषण्णाः कीदृशाः क्रमेन श्रमेण निःक्राणा
निःशब्दाः अमदा हर्षरहिताः चीणपणानष्टधनाइव निःक्राणो
घञन्तः क्वणः शब्दमात्रे घञलौ सप्रादेरपि वीणाध्वनौ तु सप्रा
देरेवेति परः स्वमते अभिधानं नियामकमित्युक्तेः सएव नियमः
क्रमपणमदाश्चलन्ताः पण्यते व्यवह्रियतेऽनेनेति पणः पणोव

राटमाचे साम्भूखे कार्षापणे यहे। कथ्यशाकटिकाद्यूतव्यवहारे भृतीधनइति विश्वः ॥ ५८ ॥

ततः ससम्भ्रदास्तत्र निरैचन्त पतत्त्रिणः। गुहा द्वारेण निर्यातः समजेन पशूनिव ॥ ५९ ॥

ज॰भ॰ ततइत्यादि। ततो विश्रामानन्तरं ते तत्र तस्मिन् पर्व्वते पतत्त्रिणः पक्षिणोनिरैचन्त ईक्षितवन्तः ईक्षेर्लङि रूपं कीदृशान् गुहाद्वारेण निर्यातः निर्गच्छतः निष्पूर्व्वायातेः शत्रन्तस्य शसि रूपं ससंभ्रदाः सहर्षाः प्रमदसंभ्रदाविति निपातितं समजेन वृन्देन पशूनिव निर्यातः समुदोरजपशुष्वित्यप्॥ ५९ ॥

भ॰ ततइत्यादि। उपवेशानन्तरं ते ससम्मदाः सहर्षाः सन्तस्तत्र पर्व्वते गुहाद्वारेण निर्यातोनिर्गच्छतः पतत्त्रिणः पक्षिणोनिरैचन्त दृष्टवन्तः समजेन समूहेन निर्गच्छतः पशूनिव तद्वदितिसूचानित्यर्थः समदसमजावसन्तौ व्यजोरे इत्यादौ अजन्तवर्ज्जनाद्वाजेर्व्यादेशः संप्राभ्यां मदोहर्षे समुझ्यामजः पशुसंहर्षेरणयोरलिति परेषां विशेषसूत्रं निःपूर्व्वादीक्षेर्वा यातेः शतः ॥ ५९ ॥

वीनामुपसरं दृष्ट्वा तेऽन्योन्योपह्वागुहां। प्राविशन्नाह्वप्रयाश्राद्वावमुपत्त्रिषवः ॥ ६० ॥

ज॰भ॰ वीनामित्यादि। वीनां पक्षिणामुपसरं नैरन्तर्य्येण निर्गमनं दृष्ट्वा उपसरइव उपसरनैरन्तर्य्यमात्रेणोपलक्षितत्वात् उपसरोहि

स्त्रीगवीषु पुंगवानामभिगमनमुच्यते यच नैरन्तर्य्येण भवति प्र जनेः सर्त्तेरित्यप् वानराः अन्योन्योपह्वराः परस्परमाक्रान्तं येषां आगच्छतागच्छत प्रविशामइति क्रः संप्रसारणमित्यप् संप्रसारणञ्च गुहां प्राविशन् प्रविष्टवन्तः आह्वप्रज्ञाः युद्धप्रज्ञाः आह्वयते युद्धाय स्पर्द्धतेऽनेत्याङि युद्धइत्यप् संप्रसारणञ्च आह्वावमुपलिप्सवः उदकाधारमुपलब्धुमिच्छवः निपानमाह्वावइति घञि संप्रसारणं निपात्यते वृद्धिरस्येव अणप्रत्यये स्यद्वृद्धिः॥ ६०॥

वीनामित्यादि। वीनां पक्षिणामुपसरं उपर्य्यधोगमनं दृष्ट्वा भ० ते वानरा गुहां प्राविशन् कीदृशाः अन्योन्यस्य उपह्वरमाक्रान्तं येषां ते तथा आह्वे युद्धे प्रज्ञाः पण्डिताः अतएव गुहाप्रवेशे निर्भयत्वं आह्वावमुदकाधारमुपलब्धुमिच्छवः उपसरोऽत्यन्तः अभिधानात् उपर्य्यधोगमनार्थः उपसरो हि स्त्रीगवीषु पुङ्गवानामभिगमनमुच्यते यत्रोपर्य्यधोभावेन भवतीत्युपमानादिह उपसरशब्देन उपर्य्यधोगामित्वमुच्यतइति केचित् गर्भग्रहणार्थोपसरणे सर्त्तेरप्निति परसूत्रं तन्मते उपसरो गर्भार्थं ग्राम्यधर्माचरणं तच्च वहिर्निःसरतां पक्षिणां सम्भवत्येव ऊलिहोमेऽद्ने इत्यस्मादप्घञौ उपसर्गेणान्यार्थता परेषां मते क्रौञ्चोह्रूपं अभ्युपनिविभ्याक्रौञ्चोऽप्ऊस्येति तथा आङोयुद्धेक्रौञ्चोऽप्ऊस्येति आङोनिपाने ऊस्येति तेषां सूत्रत्रयं॥ ६०॥

कुर्व्वन्तो ह्वमायानां पिपासावधकाङ्क्षिणः। द्वारं तमोघनप्रख्यं गुहायाः प्राविशन् द्रुतं॥ ६१॥

ज॰म॰ कुर्व्वेत्यादि। गुहां प्रविश्य तस्याः द्वारमपरं प्राविशन् आम्ना मां स्निग्धानां ह्वमाह्वानं कुर्व्वन्तः भावेऽनुपसर्गस्येत्यप् संप्रसारणं च पिपासा पातुमिच्छा तस्यावधोऽपनयनं हनश्चवध इत्यप् वधादेशश्च तं काङ्क्षितुं शीलं येषामिति काचिमाचिकांक्षाया इत्यस्मात्सुप्यजातौ णिनिः इदितोनुम् साधुकारिणि वा कीदृशं द्वारं तमोघनप्रख्यं तमसोघनः मूर्त्तिः काठिन्यं तेन सदृशं मूर्त्तौ घनइति हन्तेरप्प्रत्ययो घनादेशश्च निपात्यते मूर्त्तिमत्तमइव द्वारमित्यर्थः॥ ६१॥

भ॰ कुर्व्वेत्यादि। ते आम्नानां स्निग्धानां ह्वमाह्वानं कुर्व्वन्तोगुहाया द्वारं द्रुतं प्राविशन् कीदृशाः पिपासायास्तृष्णायावधं हननं काङ्क्षन्तीति ग्रहादित्वात् णिन् ताच्छील्ये आभीक्ष्ण्ये वा णिनिरिति परः स्वमतेऽपि तदर्थता प्राप्यते यतो णिन्विधायकसूत्रे अर्थविशेषोनोक्तः किन्तु ढचेलतीत्यादौ भव्यर्णार्थणिन्नित्युक्तं तेनाभिधानादर्थविशेषेऽपि णिन् स्यादिति ज्ञापितं द्वारं कीदृशं तमोघनप्रख्यं तमसां घनेन काठिन्येन प्रख्यं सदृशं मूर्त्तिः काठिन्यमुच्यते तदुपचारात् मूर्त्तिमत्तयाइवेत्यर्थः मेघप्रख्यं तमश्च प्राविशन्निति केचित् ह्वमिति ह्वञ्स्पर्द्धायामिति ह्वेञ् इत्यस्यालन्तस्य रूपं धातूनामनेकार्थत्वात् आह्वानार्थता ह्वेञोऽल् ह्वश्च भावे नहूपसर्गादिपरः हन्तेरलि हनवधष्टोव्ल्लीति वधादेशः काठिन्यादौ हन्तेरल् घनादेशश्चेति परः स्वमते निपातः॥ ६१॥

तस्मिन्नन्तर्घणे पश्यन् प्रघाणे सौधसद्मनः। लौहोद्घनघनस्कन्धाललितापघनां स्त्रियं॥ ६२॥

तस्मिन्नित्यादि। द्वारमतिक्रम्य यः सावकाशप्रदेशः सोऽन्तर्घण इत्युच्यते तथा ह्यन्तर्हन्यते क्रोडीभवत्यस्मिन्निति अनुगतार्थत्वं अन्तर्घणो देश इत्यन्तःपूर्व्वाद्धन्तेरप् घनादेशः घणादेशोवा ये ण कारं पठन्ति यन्तु संज्ञीभूतोवाह्लीकेषु देशविशेष इत्युक्तं तत्संज्ञा शब्दमाश्रित्य तस्मिन्नन्तरे यत्सौधस्य धवलगृहं तस्य प्रघाणे एकदेशे प्रघणः प्रघाणश्चेति निपातितं स्त्रियं ललितापघनां ललिताङ्गीमपश्यन् अपघनोऽङ्गमिति निपातनं लोहोद्घनघन स्कंधाः यस्मिन् स्थापयित्वा काष्ठादीनि संक्रियन्ते स उद्घनः आधान तद्वत् घनः स्कन्धोयेषामिति उद्घनोऽत्याधानमिति निपातनं॥ ६२॥ ज०म०

तस्मिन्नित्यादि। तस्मिन् गुहाभ्यन्तरे अन्तर्घणे द्वारसमीप सावकाशप्रदेशे यत् सौधस्य धवलगृहं तस्य प्रघणे द्वारप्रकोष्ठा भ्यां वहिःप्रदेशे ललितापघनां मनोहरशरीरां स्त्रियं तेऽपश्यन् कीदृशाः लोहोद्घनघनस्कन्धाः यस्मिन् स्थापयित्वा काष्ठादिकं हन्यते स उद्घनः लोहस्य य उद्घनस्तद्वद्घनोनिविडः स्कन्धोयेषां ते तथा लोहवदुद्घनः काष्ठविशेष इत्यन्ये परमते अन्तर्हन्यते यस्मिन्नित्यन्तर्घणोऽभ्यन्तरदेश उच्यते अन्तरोहन्तेरलि देशे घनादेशः विभाषया णत्वं लभते मूर्द्धन्यान्तत्वे घणोऽलि रूपं दन्त्यान्तत्वे तु हन्तेर्निपातः परमते प्रहृष्टं हन्यते गम्यते ऽस्मि न्निति प्रघाणः प्राङ्गृहद्वारघाशपिण्डके हन्तेर्घञन्तो घनादेशस्य पूर्व्वपदस्थान्निमित्तात् संज्ञायां णत्वं लभते घणोघञि रूपं प्रघा णप्रघणालिन्दावहिर्द्वारप्रकोष्ठके इत्यमरः परमते ऊर्द्ध्वं हन्यते अस्मिन् स उद्घनः उदः प्रतिकाष्ठके हन्तेरप् घनादेशस्य लभते भ०

निपातः निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घन इत्यमरकोषे काष्ठ इत्युपलक्षणं घनः पूर्ववत् परमते ऽपहन्यते ऽनेनेत्यपघनो देहः अपादङ्गेहन्तेरल् घनादेशश्च स्वमते निपातः वस्तुतः अन्तर्घणा दयोरूढाः व्युत्पत्तिस्तु यथा कथञ्चिदेव ॥ ६२ ॥

सा स्तम्बघ्नपदन्यासान् विघनेन्दुसमद्युतिः । परि घोरुभुजानाह हसन्ती स्वागतं कपीन् ॥ ६३ ॥

अ॰म॰ सास्तमित्यादि । सा स्त्री हसन्ती कपीन् स्वागतं वचश्चाह कीदृशी विघनेन्दुसमद्युतिः विहन्यते अभिभूयते अन्या द्युतिर्येन स विघनः करणेऽपोविदुश्चित्यप् घनादेशश्च स चेन्दुश्चेति सः तत्समा द्युतिर्यस्याः स्तम्बो हन्यते येन पादन्यासेन स स्तम्बघ्नः तृणकाष्ठादिः स्तम्बेकघ इति करणे कः गमहनेत्युपधालोपः तादृशः पादन्यासो येषां कपीनामिति परिहन्यते येन परौघ इत्यप् घादेशश्च परि घो अर्गलः तदनुकारिणोविपुलावाहवोयेषामिति ॥ ६३ ॥

भ॰ सेत्यादि । सा हसन्ती स्वागतमिति कपीनाह कीदृशान् स्तम्बघ्नपदन्यासान् स्तम्बो हन्यते तृणकाष्ठादिकमुपमर्द्यते येन तादृशः पदन्यासोयेषां तान् हनपरगष्टगिति कर्त्तरि विहितष्टक् कर्त्तुः कभावइति अन्यत्र दृश्यते चेऽपि न क्षतिः हनगमित्युक्तोपे हनो क्रोघ्नः स्तम्बघ्नश्च स्तम्बघनः स्तम्बो येन निहन्यते स्तम्बो गुच्छस्तृणादि न इत्यमरः परिघवद्दुरवो विपुलाभुजायेषां परिघोऽस्त्रविशेषः परमते परिहन्यतेऽनेनेति हन्तेर्घञ्चतस्य रूपं इदशब्दोऽयं सा कीदृशी विघनेन्दुसमद्युतिः विगतोघनोमेघोयस्मात् तादृशस्य शरत्कालीनस्य चन्द्रस्येव दीप्तिर्यस्याः परमते हन्तेरल् मेघे घनादेशश्च स्वमते निपातः ॥ ६३ ॥

पिप्रायाद्रिगुहोपघ्नानुद्घान् संघसमागतान्। फलै
र्नानारसैश्चित्रैः स्वादुशीतैश्च वारिभिः ॥ ६४ ॥

पिप्रेत्यादि। तान्विविधैः फलैर्वारिभिश्च पिप्राय तर्पितवती जं०म०
अद्रिगुहोपघ्नान् अद्रिगुहैव उपघ्न आश्रयो येषां कपीनां उपघ्न आ
श्रय इत्यप् उपधालोपश्च निपात्यते संघसमागतान् समूहेनाग
तान् उद्घान् प्रशस्तान् संघोद्घौगणप्रशंसयोरिति समुदोरुपपदयो
र्हन्तेरपि टिलोपश्च निपात्यते ॥ ६४ ॥

पिप्रेत्यादि ॥ सा फलैर्वारिभिश्च तान् पिप्राय तर्पितवती कीदृ भ०
शान् अद्रिगुहा उपघ्न आश्रयो येषां तान् उपादाश्रये हन्तेरल्
घश्चेति परः स्वमते हनचरगष्टगित्यस्य हन्तेः कभावइत्यन्यत्र
प्रवृत्तिः अभिधानादाश्रयार्थता स्यादुपघ्नोऽन्तिकाश्रयइत्यमरः
उद्घान् प्रशस्तान् परमते ऊर्द्धं हन्यते गम्यतइति उदःप्रशस्ते
हन्तेरल् घादेशश्च स्वमते हनजनादित्यस्य हन्तेःकभावइत्य
न्यत्र प्रवृत्तेर्गमादित्वात् घणोडः संघेन समूहेनागतान् संहननं
संहन्यते वास्मिन्निति समोहन्तेरल् समूहे घादेशश्चेति परः स्व
मते उद्घवत् फलैः कीदृशैः नानारसैः नानाविधरसयुक्तैः चित्रै
रद्भुतैः वारिभिः कीदृशैः स्वादुशीतैः मधुरशीतलैः ॥ ६४ ॥

निघानिघतरुच्छन्ने तस्मिंस्ते लम्भिमैः फलैः। तृप्ता
स्तां भाजथुमतीं पप्रच्छुः कस्य पूरियं ॥ ६५ ॥

निघेत्यादि। तस्मिन्प्रघणे निघानिघैर्निमितानिमित्तैस्तरुभिः जं०म०
छन्ने निघोनिमित्तमिति निपूर्व्वाद्धन्तेरपि डिलोपे निपात्यते समा

रोहपरिणाहाभ्यां निमित्तमित्युच्यते ते कपयः लब्धैर्लाभनि र्वृत्तैः स्थितः स्त्रिः फलैस्तृप्ताः सन्तस्तां स्त्रियं भ्राजथुमतीं शोभावतीं पप्रच्छुः पृष्टवन्तः कस्येयं पूरिति ट्वितोऽथुच् तदन्तान्मतुप् ॥ ६५ ॥

भ० निघेत्यादि। तस्मिन् सौधसद्मनः प्रघाणे ते वानरास्तां पप्रच्छुः तस्मिन् कीदृशे निघानिघैर्दैर्घ्यविस्ताराभ्यां तुल्यातुल्यैस्तरुभिर्वृत्ते च्छन्ने आवृते परमते निःशेषेण हन्यन्ते ज्ञायन्तेऽइति नेस्तुल्यारो हपरिणाहे हन्तेर्डौघादेशश्च खमते घणोरूपं विम्बकम्मेनिघ इत्यमरः ते कीदृशाः लब्धैर्लाभेन निर्वृत्तैः फलैस्तृप्ताः लभश्चा ड्धप्रासौ स्थितस्तच्चे त्रिमक् ठभात्तयोर्थः तां कीदृशीं भ्राजथु मतीं शोभावतीं टुभ्राजृन्दीप्तौ ट्वितोऽथुर्भावे किं पप्रच्छुरित्याह कस्येयं पूरितिं अग्रिमश्लोकेनाप्यन्वयः ॥ ६५ ॥

रक्षणं करोषि कस्मात्त्वं यत्नेनाख्यायतां शुभे।
स्वप्ने निधिवदाभाति तव सन्दर्शनं हि नः ॥ ६६ ॥

ज०म० रक्षणमित्यादि। हे शुभे कस्माद्वा रक्षणं रक्षां करोषि एत यत्नेनादरेण नोऽस्माकमाख्यायतां उभयत्रापि यजयाचेति नङ् यस्मात्स्वप्ने निधिवत् निधिरिव तव संदर्शनमाभाति नोऽस्माकम तिदुर्लभत्वात् स्वप्नइति स्वपेर्नन् निधिरिति उपसर्गेघोःकिः ॥ ६६ ॥

रक्षणमित्यादि। हे शुभे कस्माद्वा त्वं रक्षणं रक्षां करोषि अर्थात् पूर्य्याः एतत् यत्नेनादरेणाख्यायतां कथ्यतां हि यस्मात् स्वप्ने निधिरिव तव सन्दर्शनं अतिदुर्लभत्वान्नोऽस्माकमाभाति अतः पूर्व्वमननुभूतत्वात् एवं पृच्छामइति भावः वपरक्षयतीत्या

दिवा सर्व्वंच नक्तं रचेर्णलं निधिरिति किर्होऽन्यगैरिति किः उखेचोत्यालोपः ॥६६॥

ततोजलधिगम्भीरान् वानरान् प्रत्युवाच सा। इयं दानवराजस्य पूः सृष्टिर्विश्वकर्म्मणः ॥ ६७॥

ततइत्यादि। ततस्तस्मादनन्तरं सा प्रत्युवाच जलं धीयते अस्मिन्निति अधिकरणेचेति किः जलधिः समुद्रः तद्वद्गम्भीरान चोभ्यत्वात् इयं पूः दानवराजस्य विश्वकर्म्मणः सृष्टिः सृज्यतइति सृष्टिः कर्म्मणिस्त्रियांक्तिन्। इतः स्त्रीलिङ्गमधिकृत्योच्यते॥ ६७॥ ज०म०

ततइत्यादि। तदनन्तरं सा वानरान् प्रत्युवाच कीदृशान् जलधिवत् गम्भीरान् अचोभ्यान् जलानि धीयन्तेऽत्रेति ढाङ् इति किः किं प्रत्युवाचेत्याह दानवराजस्य इयं पूः विश्वकर्म्मणः सृष्टिः पूर्व्वं कस्य पूरिति स्वामिनः कर्त्तुस्च प्रश्नइत्युभयमुक्तं सृज्यतइति क्तिः भाव्यचेइति कर्म्मणि स्त्रियां क्तिः। इतः स्त्रीत्वदधिकारः॥ ६७॥ भ०

निहतस्य स्थितिं भिन्दन् दानवोऽसौ बलद्विषा। दुहिता मेरुसावर्णेरहं नाम्ना स्वयम्प्रभा॥ ६८॥

निहेत्यादि। असौ दानवराजः स्थितिं मर्य्यादां भिन्दन् स्थागापापचोभावइति क्तिन् बलद्विषा इन्द्रेण निहतः यस्य चाहं दुहिता सपिता नाम्ना मेरुसावर्णिः अहञ्च नाम्ना स्वयंप्रभेति॥ ६८॥ ज०म०

निहेत्यादि। बलद्विषा इन्द्रेण असौ दानवराजोनिहतः भ०

यतः स्थितिं मर्य्यादां भिन्दन् त्यजन् अहं मेरुसावर्णिनामोद्
हिता कन्या नाम्ना च स्वयंप्रभा पितुरात्मनश्च प्रसिद्धनामोत्की
र्त्तनेन दानववधानन्तरमिन्द्रेणाहमिह नियुक्तेति किम्वदन्ती
सूचिता तिष्ठतेः क्तिः दोषोमास्थामिति क्तिः मर्य्यादाधारणा
स्थितिरित्यमरः स्वयंप्रभेति स्वयं प्रभाति शोभतइति आतो
ऽन्तःअङ्केरिति ङः स्वयमात्मना प्रभा यस्याइति वा॥ ६८॥

जूतिमिच्छथ चेत्तूर्णं कीर्त्तिं वा पातुमात्मनः। करोमि वोवहिर्यूतीन् पिधध्वं पाणिभिर्दृशः॥ ६९॥

ज०म० जूतिमित्यादि। यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ कीर्त्तिं वा
आत्मनः पातुं रचितुं वः युष्मान् वहिर्यूतीन् वहिर्भूतान् ऊति
यूतीत्यादिना निपातितः तत्र योतेर्जवतेश्च क्तिन् दीर्घत्वञ्च निपा
त्यते कीर्त्तिरपि क्षत्संशब्दने स्वार्थिकोणिच् उपधायाश्चेतीत्वं
तस्मात् क्तिन् अतः पाणिभिः दृशोदृष्टीः पिधध्वं छादयध्वं अपि
पूर्व्वाद्धाञोलोटि द्विर्व्वचनेदधस्तथोश्चेति अभ्यासस्य भष्भावे
आभ्यस्तयोरित्याकारलोपे श्नाभ्यस्तयोरातइति धातोरीकारे वष्टि
भागुरिरित्युपसर्गाकारलोपे च रूपं॥ ६९॥

भ० जूतिमित्यादि। यूयं चेत् यदि तूर्णं शीघ्रं जूतिं गमनमिच्छथ
अभुकार्य्यं कृत्वा आत्मनश्च कीर्त्तिं पातुं रचितुमिच्छथ तदा
पाणिभिर्हस्तैर्दृशश्चचूंषि पिधध्वं आच्छादयत ततोऽहं वोयुष्मान्
वहिर्यूतीन् वहिर्देशे यूतिर्मिश्रणं येषां तादृशान् वहिर्गतानि
त्यर्थः जुगत्यां युमिश्रणे सातिहेतीति जूतियूती भावक्तन्ते
निपात्येते क्षत्कसंशब्दे कित्वाचुरादिः कीर्त्यते चेति कर्म्मणि क्तिः

कीर्त्तं कृतइति कीर्त्तादेशः णेर्लोपः अपिपूर्व्वात् धाञोणीर्घं भ्रा दीरेदिः खेर्दलं श्राङोरित्यालोपः अभाम्लस्येति खेर्दस्य धलं झष् झसोरिति मूलधातोर्द्दलं वातोऽवाप्योरिति पचे अपेरतोलुक् ॥ ६९ ॥

अज्यावती निरुद्धाचान् विद्येवानुष्ठितक्रियान्।
निरचिक्रमदिच्छातोवानरांसंक्रमावतः॥ ७० ॥

अज्येत्यादि। सा अज्यावती प्रशस्तगमनवती अजयजोर्भावे क्यप् प्रशंसायां मतुप् वानरान्निरुद्धाचान् निरचिक्रमत् निष्का शितवती क्रमेर्ण्यन्तस्य लुङि सन्वल्लघुनीति सन्वद्भावात् सन्यत इतोत्वं दीर्घोलघोरिति न दीर्घत्वं संयोगपरस्य गुरुत्वात् अनु ष्ठितक्रियानाचरिततदुपदिष्टव्यापारान् कृञःशचेति शः सार्व्व धातुकेयक् रिङादेशश्च सङ्क्रमावतः कुटिलगतिमतः अःप्रत्य यादित्यकारः इच्छातइति वानराणामिच्छायाः इच्छेति निपा तितं इषेः शप्रयः छभावश्च निपात्यते विद्यासंज्ञायामिति क्यप् यथा विद्या अनुष्ठितक्रियान् कृतपुरस्सरणान् पुरुषानिच्छातोऽभी ष्टं सम्पादयति तद्वत्सेति ॥ ७० ॥ जं०म०

अज्येत्यादि। सा अज्यावती प्रशस्तगतिमती वानरानिच्छातो निरचिक्रमत् निष्क्रामयामास यथा विद्या तत्वज्ञानं इच्छातः अनुष्ठितक्रियान् विहितध्यानधारणादीन् संसारान्निष्क्रामयति तद्वत् वानरानपि अनुष्ठितक्रियान् आचरिततदुपदिष्टव्यापा रान् यतोनिरुद्धाचान् आच्छादितदृशः सक्थ्यक्ष्णःषःस्वाङ्ग इति षः पचे जितेन्द्रियान् अचशब्द इन्द्रियवचनः संक्रमावतः भ०

अन्धकारे कुटिलगतियुक्तान् पक्षे तीर्थादिचंक्रमणकारिणः अज गतौ शीङ्क्रजयजविदित्यादिना क्यप् ततोऽस्त्यर्थे प्रशंसायां वतुः विदज्ञाने पूर्ववत् क्यप् क्रियतइति क्रिया कुःश्रसेति शः ऋद्दिः श्रुध्वोरितीयः क्रमेर्यंन्तात् ञिश्रिद्रुसुइत्यङ् खेःसन्वत् स्वसेत् स्वःसेरुरिति गुरुलाम्न दीर्घः इपुइच्छायां तुलेक्केत्यादिना निपातः क्रमेर्यङन्तात् शंस्वादः यङोलुक् ततोवतुः॥ ७०॥

निष्क्रम्य शिक्षया तस्यास्तपावन्तो रसातलात्। ज्ञात्वा मासमतिक्रान्तं व्यथामवललम्बिरे॥ ७१॥

ज०म० निष्क्रेत्यादि। तस्याः शिक्षया उपदेशेन गुरोश्चहलइत्यकारः तस्माद्रसातलान्निष्क्रम्य निर्गम्य त्रपावन्तः स्त्रिया उपदेशेन निष्क्रान्तावयमिति त्रपेति षिद्भिदादिभ्योऽङ् मासमतिक्रान्तं ज्ञात्वा वहिर्निर्गताः सन्तः व्यथां भयं भिदादित्वादङ् अवललम्बिरे वयं मासावधिना प्रेषिताः स च मासोविनैव कार्य्येणातिक्रान्तइति स्वामिनोभयं॥ ७१॥

भ० निष्क्रेत्यादि। तस्याः स्वयम्प्रभायाः शिक्षया उपदेशेन रसातलात् निष्क्रम्य स्वयं निष्क्रमाशक्ता त्रपावन्तोलज्जायुक्ताः सन्तः राज्ञा अवधित्वेन निश्चितं मासं अतिक्रान्तं ज्ञात्वा ते व्यथां राज्ञः सकाशाद्भयं अवललम्बिरे आपुः शिक्षेः सेमक्षात्सरोरिति अप्रत्ययः त्रपूषङ्लज्जायां षित्त्वात् भीषिचिन्तिपूजीत्यादिना ङः व्यथषमङ्दुःखेचालेभये घटादित्वात् पूर्व्वेण ङः यद्यपि कविकल्पद्रुमे घटादेः सानुबन्धत्वं दृश्यते तथापि पूर्व्वाचार्य्यक्रमदर्श

मात् मुग्धबोधस्य कविकल्पद्रुमात् प्राक् क्टतत्वेन भीषिचिन्ती त्यादौ आलर्घटादेरित्यस्य न वैयर्थ्यं स्याआमिति पाठे तेनैव भिदादित्वात् ङः॥ ७१॥

चिन्तावन्तः कथाश्चक्रुरुपधाभेदभीरवः। अकृत्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथं॥ ७२॥

चिन्तेत्यादि। उपधानमुपधा परीक्षा आतश्चोपसर्गेइत्यङ् तत्परिशुद्धो हि भृत्यः कार्य्येषु नियुज्यते तदकरणादुपधाया भेदोऽभावः तस्माद्भीरवः चिन्तावन्तइति कर्त्तव्यतामूढाः कथां चक्रुः क्टतवन्तः कीदृशमित्याह अकृत्वा नृपतेः कार्य्यं पूजां लप्स्यामहे कथमिति नैवेत्यर्थः चिन्तादयः चिन्तिपूजीत्यादिना अङ् न्ताः॥ ७२॥ ज०म०

चिन्तेत्यादि। नृपतेः कार्य्यं अकृत्वा कथं वयं पूजां लप्स्यामहे अपि तु अज्ञाताएव भविष्यामइति कथां ते चक्रुः कीदृशाः उपधाभेदभीरवः राज्ञा धर्म्मादिभिर्भृत्यानां या परीक्षा क्रियते सोपधा तस्याभेदः कार्य्यासामर्थ्येन भङ्गः तद्भीरवः अतएव चिन्तावन्तः चिन्तिकथिपूजिभ्योभीषिचिन्तीत्यादिना ङः उप पूर्व्वात् धाञआतोऽन्तः अङ्देरिति ङः उपधाधर्म्माद्यैर्यत्परीक्षण मित्यमरः॥ ७२॥ भ०

प्रायोपासनया शान्तिं मन्वानोवालिसम्भवः। युक्त्वा योगं स्थितः शैले विशुष्यंश्चित्तवेदनां॥ ७३॥

ज॰म॰ प्रायइत्यादि। उपासनेति आसअन्योयुच् प्रायेण उपवासे नोपासना अनशनेनासनमित्यर्थः तया शान्तिं कल्याणं मन्वानो ऽवगच्छन् उपायान्तराभावात वालिसम्भवोऽङ्गदः योगश्चित्त वृत्तिनिरोधः तं युक्ता संबध्य शैले स्थितः चित्तवेदनां चित्तपीडां विवृण्वन् घट्टिविदिवन्दिभ्योयुजवक्तव्यइति युच्॥ ७३॥

भ॰ प्रायइत्यादि। वालिसम्भवोऽङ्गदोयोगं चित्तवृत्तिनिरोधं युक्ता आत्मना सह संबध्य शैले स्थितः किं कुर्व्वन् प्रायेण उप वासेन उपासनया स्थित्या तस्य सेवया वा तदाचरणरूपया शान्तिं कल्याणं मरणं वा मन्वानः मन्यमानः प्रायस्यानशने मृत्यौ तुल्यवाञ्छयोरपि। शान्तिः शमेऽपि कल्याणे इति च विश्वः ञित्तासङ्गउपवेशे उपपूर्व्वोऽयं सेवायामपि ञोविश्रन्थिग्र न्थीत्यादिना अनः चित्तवेदनां मनःपीडां विवृण्वन् प्रकाशयन् विदेः पूर्व्वेण अनः॥ ७३॥

प्रस्कन्दिकामिव प्राप्तोध्यात्वा ब्रूते स्म जाम्बवान्।
धिक् शालभञ्जिकाप्रख्यान् विषयान् कल्पनारुचीन्
॥ ७४॥

ज॰म॰ प्रस्केत्यादि। त्वया का क्रिया कर्त्तव्येत्यन्यैः पृष्टः सन् जाम्ब वान् ध्यात्वा विचिन्त्य ब्रूते स्म प्रस्कन्दिकामिव रोगविशेषमिव प्राप्तोयातः उत्साहाभावात् रोगाख्यायांण्वुल्वक्तव्यं शालभञ्जि का क्रीडाविशेषः संज्ञायामिति ण्वुल् नित्यंक्रीडेत्यादिना सः तत्प्रख्याविषयारूपादयः अतितुच्छत्वात् अतस्तान् धिक् किन्तु कल्पनारुचीन् कमनीयान्॥ ७४॥

प्रस्कोत्यादि। त्वया किं कार्य्यमित्यन्यैः पृष्टोऽसमवान् स्वरूप तिर्थ्यात्वा ब्रूते स्म उक्तवान् प्रस्कन्दिकां क्षयरोगं प्राप्तइव उक्त्वा स्वाभावात् स्कन्दिरशोषणेगत्यां नाम्न्यन्येतिक्केति रोगार्थे एक: भ०
स्त्रीत्वमभिधानात् काथ्यनाशीरिति अतइत्वं किं ब्रूते स्म इत्याह विषयान् रूपादीन् धिक् यतः शालभञ्जिका नागरक्रीडाविशेष स्तत्तुल्यान् भञ्जोधामोटने प्रस्कन्दिकावत् संज्ञायां एकः तुल्यत्व माह कल्पनया विकल्पवशेन पक्षे स्वयं रचनया रुचिरभिलाषो यत्र तान् एतेन सर्व्वेषां काल्पनिकत्वमिति वेदान्तमतं दर्शितं स्पेर्य्यन्तात् जीवियन्वीति अनः स्यपः कृपः ॥ ७४ ॥

यां कारिं राजपुत्रोऽयमनुतिष्ठति तां क्रियां। अह मप्यनुतिष्ठामि सोऽप्युक्त्वैवमुपाविशत् ॥ ७५ ॥

यामित्यादि। अयं राजपुत्रोऽङ्गदोयाङ्कारिं क्रियामनुतिष्ठ ज०म०
ति तां क्रियां अहमप्यनुतिष्ठामि विभाषाख्यानपरिप्रश्नयोरिञ्चे ति करोतेरिञ् पक्षे कृञःशचेति शः सोऽप्येवमुक्त्वा उपाविशत् अनशनेन स्थितः ॥ ७५ ॥

यांकेत्यादि। विषयाणां काल्पनिकत्वेन जीवनं विफलमिति भ०
यां कारिं क्रियां अयं राजपुत्रोऽङ्गदोऽनुतिष्ठति करोति अह मपि तां क्रियां प्रायोपासनां अनुतिष्ठामि इत्युक्त्वा सोऽपि जाम्ब वान् उपाविशत् अनशने स्थितः कृञः प्रश्नाख्याने निरिति निः ॥ ७५ ॥

उवाच मारुतिर्वृद्धे संन्यासिन्यत्र वानरान्। अहं
पर्य्यायसंप्राप्तां कुर्व्वे प्रायोपवेशिकां॥ ७६॥

ज॰म॰ उवाचेत्यादि। मारुतिर्व्वानरानुवाच वृद्धे जाम्बवति संन्यासिनि अनशनवति अहमपयत्र शैले पर्य्यायेण परिपाट्या सम्प्राप्तां प्रायो पवेशिकां अनशनं कुर्व्वे पर्य्यायार्हैत्यादिना ण्वुल्॥ ७६॥

भ॰ उवाचेत्यादि। मारुतिर्हनूमान् वानरान् उवाच किमुवाचे त्याह अत्र जाम्बवति वृद्धे संन्यासिनि त्यक्ताहारे सति अहमपि पर्य्यायेण क्रमेण प्राप्तां प्रायेण उपवासेन उपवेशिकां स्थितिं कुर्व्वे प्रायः स्यात्क्षोशनत्यागः सवयसोऽनशनं स्मृतमिति हलायुधः उ पपूर्व्वाद्विशः पर्य्यायेणकइति परः ख्मते स्वभावेत्यादौ स्त्यणक इत्यनेन स्त्रियां भावे णकः स्यादिति ज्ञापितं॥ ७६॥

अभावे भवतां योऽस्मिन् जीवेत्तस्यास्त्वजीवनिः।
इत्युक्ता सर्व्वएवास्थुर्व्वध्वा योगासनानि ते॥ ७७॥

ज॰म॰ अभावइत्यादि। अभावे विनाशे भवतां योऽस्मिन् लोके जीवेत् तस्यास्त्वजीवनिः धिग्जीवितं आक्रोशे नञ्यनिः एवमुक्ता सर्व्वएव अस्थुः स्थिताः तिष्ठतेर्गातिस्थेति सिचोलुक् बध्वा योगासनानि विरचय्य पद्मासनादीनि॥ ७७॥

भ॰ अभावइत्यादि। भवतामभावे विनाशेऽस्मिन् लोके योजीवेत् तस्याजीवनिर्मरणं धिग्जीवनं वास्तु नञोन्याक्रोशेऽस्तीति अनिः इत्युक्ता सर्व्वएव ते वानरायोगासनानि पद्मासनानि बद्धा अस्थुः स्थिताः तिष्ठतेर्व्वा भूस्थेति सेर्लुक् अनउस् उशिपीत्या लोपः॥ ७७॥

अक्लेश्यमसिनागम्यन्तं कबन्धवधमभ्यधुः। धिङ्गः प्रपतनं घोरं क्लेदान्तत्वमनाथवत्॥ ७८॥

अक्ले इत्यादि। इतः स्त्रीलिङ्गभावं निवर्त्य क्लदुदाह्रियते। ज॰म॰ कबन्धवधं योजनवाहोर्व्वधमभ्यधुः अभिहितवन्तः अभिपूर्व्वोधा अभिधाने वर्त्तते कीदृशं अक्लेश्यं प्रयासरहितं कस्मात् असिना सुखमरणात् तञ्चाग्न्यन्तं अन्ते तस्याग्निरभूत् अस्माकं धिक् प्रपतनं विनाशं दुःखेन घोरत्वात् क्लेदान्तत्वं अन्ते पूतीभावन्त ह्यास्ति अर्श्चआदित्वादच् अनाथवत् अनाथानामिव अक्लेश्य प्रपतनशब्दौ भावसाधनौ क्लत्यल्युटोवहुलमिति॥ ७८॥

स्त्रीलिङ्गकृदधिकारं निवर्त्त्य क्लदुच्यते। अक्लेश्यमित्यादि भ॰ ते कबन्धस्य योजनबाहोर्व्वधं मरणं अभ्यधुः उक्तवन्तः अभिपूर्व्वं धाञ्लुङि रूपं अस्थुरितिवत् कीदृशं असिना अक्लेश्यं क्लेशाजनकं खड्गेन शीघ्रहननात् नातिदुःखदमित्यर्थः अग्न्यन्तं दाहेन अग्निर क्तोऽवसानं य च अतएव परकालेऽपि न दुःखदमिति भावः अना थवत् नाथरहितानामिव नोऽस्माकं प्रपतनं मरणं धिक् इत्यप्य भ्यधुरिति सम्बन्धः यतोघोरं उपवासदुःखवाहुल्यात् क्लेदान्तत्वं दाहाभावात् क्लेद एवान्ते यस्य तस्य भावः क्लेदान्तत्वं तद्विद्यते ऽस्येति अर्श्चआदित्वादः क्लेदस्यान्तत्वं यत्रेति वा क्लेदमन्त भूतं त्वचति संवृणोतीति गमादित्वाड्डः इति वा अस्माकं प्रप तनं क्लेदान्तत्वश्चेत्युभयं धिक् घोरत्वादिह परत्र चेति केचित् न क्लिश्नातीत्यक्लेश्यः वह्वल्याद्योरिति डभावविहितोण्यण् कृत्योःक भावइत्युक्तेरच कर्त्तरि स्यात् यदा क्लेश्यं क्लेशः भावे ण्यण् न वि

यते शोषं यस्येति विग्रहः प्रपतनमिति भावे ल्युट्‌ ... भट्‌॥ ७८॥

ततोमन्दगतः पक्षी तेषां प्रायोपवेशनं। अशनीय मिवाशंसुर्म्महामायादशोभनः॥ ७९॥

ज०म० तत इत्यादि। ततोऽभिहितानन्तरं महान्‌ पक्षी सम्पातिनामा जटायुभ्राता आयात्‌ आगतः मन्दगतोमन्दगमनः नपुंसके भावे क्तः आहिताग्नित्वात्परनिपातः तेषां यत्प्रायोपवेशनं तदशनीय मिव भोजनीयमिव कृत्यल्युटोवहुलमिति कृत्यः आशंसुः आशंस नशीलः अशोभनः शोभारहितः दावाग्निना सुष्टशरीरत्वात्‌ ल्युडि ति भावे ल्युट्‌ कर्म्मणि च येनेत्येतत्परिहृत्योदाहृतत्वात्‌॥ ७९॥

भ० तत इत्यादि। तदनन्तरं महान्‌ पक्षी सम्पातिनामा तत्रा यात्‌ आगतः यातेर्ल्लङि रूपं कीदृशः मन्दगतः मन्दं गतं गमनं यस्य गमेर्भावे क्तः येषां वानराणां यत्‌ प्रायोपवेशनं तत्‌ अशनीय मिव खभक्ष्यमिव तृप्तिजनकत्वात्‌ आशंसुः आशंसनशीलः भावे ऽनट्‌ अनीयस्य कृद्धोःकभावइत्युक्तेः करणे वानीयः तदा अशनीयं भोजनसाधनं अशोभनः शोभारहितः सूर्य्यतेजसा दग्धपक्षत्वात्‌ नन्द्यादित्वात्कर्त्तरि अनः न विद्यते शोभनं यस्ये ति वा भावेऽनट्‌॥ ७९॥

देवप्रस्नतुण्डाग्रं तं विलोक्याग्रुभाकरं। पापगो चरमात्मानमशोचन्‌ वानरामुकः॥ ८०॥

देहेत्यादि। वृश्च्यते येन तुण्डाग्रेण करणाधिकरणयोश्चेति ज०म०
करणे ल्युट् देहस्य व्रश्चनमिति कृद्योगात् षष्ठी देहव्रश्चनं तुण्डा
ग्रं यस्य तं विलोक्य वानराः अशुभाकरं पापस्योत्पत्तिस्थानं
आकरइवाकरः पुंसि संज्ञायां घः तत्र हि करणाधिकरणयो
रिति वर्त्तते एवं उत्तरत्रापि चात्मानं पापगोचरं पापविषयं
पापविषये पतितावयमिति मुहुरशोचन् शोचितवन्तः गोचर
सञ्चरेत्यधिकरणे निपातितः॥ ८०॥

देहेत्यादि। तं पक्षिणं विलोक्य वानराः पापगोचरं पाप भ०
विषयमात्मानं मुहुर्व्वारं वारं अशोचन् पापविषयोमदात्मेति
सर्व्वे ऊचुरित्यर्थः कीदृशं पक्षिणं देहव्रश्चनतुण्डाग्रं वृश्चति अनं
नेति व्रश्चनं करणेऽनट् देहस्य व्रश्चनं तुण्डाग्रं यस्य तं यद्वा देहं
वृश्चति छिनत्तीति देहव्रश्चनं कभावेऽमी इति वचनात् कर्त्तरि
अनट् नन्द्यादित्वाद्वा अनः अशुभाकरं अशुभस्य पापस्य आक
रमुत्पत्तिस्थानं आकुर्व्वन्त्यस्मिन्निति संज्ञायामल् गावश्चरन्त्य
स्मिन्निति गोचरोऽलन्तः स्वभावात् प्रत्यासन्नवाची॥ ८०॥

जटायुः पुण्यकृत्यची दण्डकारण्यसञ्चरः। कृत्वा
राघवकार्य्यं यः स्वरारूढोऽग्निसंस्कृतः॥ ८१॥

जटेत्यादि। कृत्वा राघवकार्य्यं अग्निसंस्कृतः अग्निना कृत ज०म०
संस्कारः स्वः स्वर्गमारूढः जटायुः पुण्यकृत संचरत्यस्मिन्निति
संचरः पूर्व्ववत् निपातितः दण्डकारण्यं संचरोऽवस्थानं यस्येति
॥ ८१॥

भ० जटेत्यादि। जटायुः पक्षी पुण्यकृत् पुण्यं कृतवान् चासुचिति क्विप् स्वस्तन् कीदृशः दण्डकारण्यं सञ्चरः स्थानं यस्य सतथा सञ्चरत्यस्मिन्नित्याधारेऽल् योराघवकार्य्यं सीताहरणविज्ञाप नादिकं कृत्वा अग्निना संस्कृतः कृतसंस्कारः सन् स्वः स्वर्गमारूढः गत्यर्थाढेत्यादिना रुहेः कर्त्तरि क्तः होढः ढभादिति धः ष्टुभि रिति ढः ढ्रोढ्रीति ढलुक् दीर्घश्च ॥ ८१ ॥

नरकस्यावतारोऽयं प्रत्यक्षोऽस्माकमागतः। अचे ष्टायदिहान्यायादनेनात्स्यामहे वयं॥ ८२ ॥

ज०म० नरेत्यादि। अवतीर्य्यते येन कर्म्मणेति अवेस्तृस्त्रोर्घञ् सएवायं नरकस्यावतारः प्रत्यक्षोऽस्माकमागतः यद्यस्मादयमचेष्टाः निश्चलाः अनेन पक्षिणा अन्यायाद्युक्त्या नीयते अनेनेनि निपूर्व्वा दिणः अध्यायन्यायेति निपातनात् घञ् अत्स्यामहे भक्षयिष्यामहे कर्म्मणि लृट्॥ ८२ ॥

भ० नरेत्यादि। नरकमवतरति येनाधर्म्मेण सएव प्रत्यक्षदृग्वि ष्याश्लोऽयं पक्षिरूपोऽस्माकमागतः रूपकालङ्कारोवा पक्षि विशेषणं वा अवपूर्व्वात्तरतेः करणे घञ् नरकस्येति कर्म्मणि षष्ठी यद्यस्मात् इह प्रदेशे अनेन पक्षिणा अन्यायादनौचित्याद्यु क्त्या वा वयमत्स्यामहे भक्षणीयाः यतोऽचेष्टाश्चेष्टारहिताः नीयतेऽनेनेति न्यायः निपूर्व्वादिणः करणे घञ् अदःकर्म्मणि ती ॥ ८२ ॥

हृदयोदङ्कसंस्थानं कृतान्तानायसन्निभं। शरीराखनतुण्डाग्रं प्राप्यामुं शर्म्म दुर्लभं॥ ८३॥

हृदेत्यादि। अमुं पक्षिणं प्राप्य कीदृशं हृदयोदङ्कसंस्थानं उदङ्कयते आकृष्यते अनेनेति उत्पूर्व्वादङ्कतेरुदङ्कोदंकइति घञ् निपात्यते हृदयस्योदङ्कः संदंशः तत्संस्थानं तत्सदृशं कृतान्तानायसन्निभं यमजालतुल्यं तत्प्रविष्टस्य दुःखेन निर्गमत्वात् जालमानायइति नयतेराङ्पूर्व्वात्करणे घञ् निपात्यते आखन्यते येन तुण्डाग्रेण खनोघच् शरीरस्याखनं तादृक् तुण्डाग्रं यस्येति प्राप्य शर्म्म सुखं दुर्लभं कृच्छ्रलभ्यं ईषदित्यादिना खल् अच करणाधिकरणयोश्चेति निवृत्तं तयोरेव कृत्यक्तखलर्था इति योज्यं उपसर्गात् खलघञोरिति प्राप्तस्य नुमः नसुदुर्भ्यामिति प्रतिषेधः॥ ८३॥ ज०म०

हृदेत्यादि। अमुं पक्षिणं प्राप्य अस्माकं शर्म्म सुखं दुर्लभं दुःखेन लभ्यतइति ईषद्दुःसोरिति खल् अमुं कीदृशं हृदयोदङ्कसंस्थानं हृदयमुदच्यते ऊर्द्धमाकृष्यते येन तादृशं संस्थानमाकृतिर्यस्य तं ऊर्द्धं हृदयाकृतिमित्यर्थः हृदयोदेजकाकृतिमिति वा उत्पूर्व्वादञ्चतेः करणे घञ् चजोः कुघिण्ण्यतोरिति कत्वं गत्यर्थस्याञ्चतेः क्षेमकत्वाभावात् अङ्कधातोरूपमित्यन्ये कृतान्तानायसन्निभं यमजालसदृशं जाले प्रविष्टस्य दुःखेन निर्गमइति भावः आनीयते ऽनेनेति आनायोजालं करणे घञ् आनायः पुंसि जालं स्यादित्यमरः शरीराखनतुण्डाग्रं आखन्यते समन्ताद्विदार्य्यते येन तदाखनं करणेऽल् शरीरस्याखनं तुण्डाग्रं यस्य तं आखरेति पाठे खनोडडरेति डरः॥ ८३॥ भ०

ईषदाढ्यङ्करोऽप्येष न परत्राशुभक्रियः। अस्मान
त्तुमितोऽभ्येति परिग्लानो बुभुक्षया॥ ८४॥

ज॰म॰ ईषदित्यादि। य एष अस्मानत्तुमितः प्रदेशादभ्येति आगच्छति सपरत्र परलोके ईषदाढ्यङ्करोऽपि अनाढ्यैरीषदाढ्योऽपि न कृतः अशुभेन कर्म्मणेत्यर्थात् कर्तृकर्म्मणोश्च भूकृञोरिति च्व्यर्थे कर्म्मोपपदात्करोतेः खल् यतः परिग्लानोबुभुक्षया योहि कर्म्मणाशुभेन ईषदाढ्यङ्करोऽपि न कृतः सकथं न बुभुक्षया पीड्यते परिग्लायतीति कर्त्तरि बहुलवचनात् ल्युट् निष्ठान्तोवा संयोगादेरित्यादिना निष्ठानत्वं अशुभक्रियः सलङ्गोष्ठाभिरतत्वात्॥ ८४॥

भ॰ ईषदित्यादि। एषपक्षी बुभुक्षया परिग्लानः सन् अत्तुं भक्षयितुं इह प्रदेशे अभ्येति आभिमुख्येनागच्छति इतइति पाठे स्वस्थानादित्यर्थः न एष परत्र परलोके ईषदाढ्यङ्करोऽपि भविष्यति अनाढ्योऽयमीषदाढ्योऽपि न करिष्यते केनचित् कर्म्मणेत्यर्थः किम्वा यस्मात् परलोके ईषदाढ्योऽपि न कृतः शुभकर्म्मणार्थात् तेनायं बुभुक्षया ग्लानः परलोके शुभकर्म्मणा यद्याढ्यः कृतः स्यात् तदा बुभुक्षया न पीडितः स्यादित्यर्थः ईषद्दुःसोरिति खल् खित्करणेन कर्तृकर्म्मणोर्व्यवधानमपि प्राप्तं तच्च ईषदाढ्यभवमित्युदाहरणेन स्पष्टीकृतं करोतेरिहाभूतप्रादुर्भावार्थत्वात् च्व्यर्थोलभ्यते परे तु सुदुरीषत्सु कर्तृकर्म्मभ्यामभूततद्भावे भूकृञःखलभावकर्म्मणोरित्याहुः अशुभक्रियः अशुभकर्म्मा परद्रोहित्वात् परिग्लानइति कभावेऽमीति कर्त्तर्य्यनट् किम्वा गत्यर्थाकर्म्मकेत्यादिना

कर्त्तरि क्तः सुक्वाचोरित्यादिना गलं इत्येवमघोषन् वानरा मुक्तरित्यन्वयः॥ ८४॥

संप्राप्य वानरान् पक्षी जगाद मधुरं वचः। के यूयं दुरुपस्थाने मनसाप्यद्रिमूर्द्धनि॥ ८५॥

इति कृदधिकारः।

संप्रेत्यादि। वानरान् संप्राप्य पक्षी जगाद गदितवान् के यूयं अद्रिमूर्द्धनि पर्व्वतशिरसि दुरुपस्थाने दुःखेनोपस्थातुं शक्ये मनसापि किं पुनः शरीरेण आतो युच् तथापि ईषदादयोऽनुवर्त्तन्ते कर्त्तृकर्म्मणोरिति न खल्व्यते। इति कृदधिकारः॥ ८५॥ ज०म०

संप्राप्येत्यादि। वानरान् संप्राप्य पक्षी मधुरं वचोजगाद किन्तदित्याह के यूयमद्रिमूर्द्धनि पर्व्वतशिखरे स्थिताः मनसापि दुरुपस्थाने दुःखेनैवोपस्थातुं शक्ये किं पुनः शरीरेण आतोऽनोऽ इत्यादि इति अनः। इति कृदधिकारः॥ ८५॥ भ०

आत्मनः परिदेवध्वे कुर्व्वन्तोरामसंकथां। समानोदर्य्यमस्माकं जटायुश्च स्तुथादरात्॥ ८६॥

इतः प्रकीर्णकस्लोकानाह। आत्मेत्यादि आत्मनः परिदेवध्वे शोचथ तेवृदेवृदेवनइति भौवादिकः शवि नसंयोगादमन्तादित्यलोपेन भवति जटायुश्च समानोदर्य्यो भ्रातरमस्माकं समानोदरे शयितइति यत् आदरात्स्तुथ प्रकृतिं कुरुथ जटायुः ज०म०

पुण्यकृदित्यादिना रामसत्कथाञ्च कुर्व्वन्तः अतः के यूयमिति ।८६॥

भ॰ अथ प्रकीर्णकाः। आत्मेत्यादि। यूयं आत्मनः परिदेवध्वे विलपथ देवृङ् देवने रामस्य संकथां कुर्व्वन्तोऽस्माकं समानो दर्य्यं सहोदरं जटायुञ्च आदरेण स्तुथ जटायुः पुण्यकृदित्यादि ना तत्स्तुतिं कुरुथ अतः के यूयमिति पूर्व्वेणान्वयः सम्बन्धः समा नोदरे शयितइत्यर्थे ढघेकादिति यः रूपनामेति विकल्पविधा नात् न समानस्य सादेशः॥ ८६॥

शङ्काधवित्रवचनं प्रत्यूचुर्व्वानराः खगं। वयं शत्रु लवित्रेषोर्दूतारामस्य भूपतेः॥ ८७॥

ज॰म॰ शंकेत्यादि। धुनोत्यपनयत्यनेनेति धवित्रं अर्त्तिलूधूइत्या दिना करणे इत्रः किमयं करिष्यतीति शङ्कया धवित्रं वचनं यस्य तं खगं वानराः प्रत्यूचुः शत्रुलवित्रादिषवोवाणायस्य राम स्य भूपतेस्तस्य वयं दूताः पूर्व्ववदित्रं हृत्वा सः॥ ८७॥

भ॰ शङ्केत्यादि। वानराः खगं प्रत्यूचुः कीदृशं किमयं खगः करिष्यति इत्येवंरूपायाः शङ्कायाधवित्रं अपनयनकारकं वचनं यस्य तादृशं किमित्याह वयं रामस्य भूपतेर्दूताः कीदृशस्य शत्रूणां लवित्राम्छेदकरणानि इषवोयस्य धूञ्‌कम्पे लूञ्‌छिदिश्राभ्यां लूधूखनेति करणे इत्रः॥ ८७॥

केनापि दौष्कुलेयेन कुल्यां माहाकुलीं प्रियां। हृतां माहाकुलीनस्य तस्य लिप्सामहे वयं॥ ८८॥

केनेत्यादि। तस्य रामस्य प्रियां केनापि दौष्कुलेयेन हृतां दुष्कुलस्यापत्यमिति दुष्कुलाड्ढञ् कुल्यां कुले साध्वीं तत्र साधुरिति यत् माहाकुलीं माहाकुलीनस्येति महाकुलस्यापत्यमिति महाकुलादञ्खञाविति अञ्खञौ लिप्सामहे वयं लब्धुमिच्छामहे ॥ ८८ ॥ ज॰म॰

केनेत्यादि। तस्य रामस्य प्रियां वयं लिप्सामहे लब्धुमिच्छामः लभेः सनिमिमीत्यादिना इस् खिलोपश्च स्यादेरिति सोलोपः झषस्तथोरिति पलं प्रियां कीदृशीं केनापि दौष्कुलेयेन दुष्कुलोत्पन्नेन हृतां दुष्कुलशब्दात् अश्व्यादित्वात् ण्येयः निष्पन्नस्य इतिवत् मूर्द्धन्यः कुल्यां कुले साध्वीं ढघेकादिति यः माहाकुलीं महाकुलात् जनकात् जातां वाङ्गाद्यतद्‌इति शिवादित्वात् ष्णः तस्य कीदृशस्य महाकुलीनस्य महाकुलोत्पन्नस्य परमते महाकुलादपत्यार्थे णीनः ततः शिवादित्वात्ष्णः किम्वा महाकुलाद्‌शरण्याज्जातइत्यर्थे ढघेकादिति णीनः ॥ ८८ ॥ भ॰

त्रिंशत्तममहर्यातं मत्वा प्रत्यागमावधिं। अकृतार्थाविषीदन्तः परलोकमुपास्महे ॥ ८९ ॥

त्रिंशदित्यादि। त्रिंशतः पूरणं विंशत्यादिभ्यइति तमट् त्रिंशत्तमं यदहः तत्प्रत्यागमावधिं प्रत्यागमनस्यावधिं यातं अतीतं मत्वा अकृतार्था अनिष्पादितप्रयोजना विषीदन्तो विषादं गच्छन्तो वयं परलोकमुपास्महे प्रायोपवेशनेन म्रियामहे ॥ ८९ ॥ ज॰म॰

भ० चिंरहित्यादि। राज्ञा अस्माकं प्रत्यागमनस्यावधित्वेन निश्चितं चिंरतः पूरणं दिनं यातं गतं मत्वा वयं अकृतार्था अनिष्पादितस्वप्रयोजनाः सन्तः विषीदन्तोविषादं कुर्व्वन्तः प्रायोपवेशनया परलोकं उपास्महे गन्तुमिच्छामः चिंशच्छब्दात् विंशत्यादेर्व्वेति तमट्॥ ८९॥

म्रियामहे न गच्छामः कौशल्यायनिवल्लभां। उपलब्धामपश्यन्तः कौमारीं पततां वर॥ ९०॥

एते प्रकीर्णकाः।

ज०भ० म्रियेत्यादि। हे पततां पक्षिणां वर म्रियामहे न गच्छामः कौमारीं अक्षतपूर्व्वदारपतिं लब्धवतीं कौमारादपूर्व्ववचनइति साधुः कौशल्यायनिवल्लभां कौशल्याया अपत्यं कौशल्यायनी रामः कौशल्यकार्म्मार्य्याभ्यांचेति फिञ् फस्यायनादेशः तस्य वल्लभां दृष्टां उपलभ्यां शक्तां पोरदुपधादिति यत् उपात्प्रशंसायामिति यत्प्रत्यये नुम् अपश्यन्तोऽनुपलभमानाः। एते प्रकीर्णकाः॥ ९०॥

भ० म्रियेत्यादि। हे पततां वर पक्षिणां श्रेष्ठ वयं म्रियामहे न तु गच्छामः अर्थात् प्रभुपार्श्वं यतः कौशल्यायनिवल्लभां रामप्रियां अपश्यन्तः कौशल्याया अपत्यमिति नडादित्वात् फायनः ततः स्वार्थे ष्णिः कीदृशीं उपलभ्यां स्तुत्यां पूशकसहेति यः उपात्स्तुताविति नुम् कौमारीं जितकार्त्तिकेयभार्य्यां अतिरूपवतीमित्यर्थः कुमारस्य कार्त्तिकेयस्य पत्नी कुमारी पत्यामपालकान्तादिति ङीप् स्कन्दोमन्दमतिर्व्विवाहविमुखोधत्तेकुमारव्रतमिति काव्य

निकं नतु प्रहतं देवसेना नामेन्द्रकन्या कार्त्तिकेयस्य पत्नी प्रसिद्धा तथाहि शतक्रतोरूपवती देवसेनेति वै सुता। सा महेन्द्रेण रत्यर्थं भार्य्यार्थे नोपपादितेति स्कन्दपुराणीयं वचनममरकोषटीकायां मधुमाधवेन धृतं अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनामिति कालिदासः कुमारीं जयतीति ढघेकादिति ष्णः णित्तेत्रिः यचोर्लोपः णित्वादीप् किम्वा कौ पृथिव्यां मारीं माया लक्ष्म्या रीर्गतिर्यस्यां लक्ष्मीरूपामित्यर्थः एतेनादरातिशयउक्तः मा लक्ष्मीश्च प्रकीर्त्तिता धने रा रीर्गतिः ख्याता रोदने च प्रकीर्त्तिता इति चैकाक्षरकोषः वक्रप्रेयसी इत्युदाहरता धृतःक रत्यस्य व्यभिचारोदर्शितः तेनात्र काभावः किम्वा कुमारएव कौमारः स्वार्थे ष्णः कौमारस्य भार्य्यां रामस्य प्रथमपत्नीमित्यर्थः एतेनाप्यादरातिशयउक्तः अन्ये तु कुमारात् प्रथमपत्न्यां ष्णइत्याऊः स्वमतेऽपि प्रथमपत्नीत्वमर्थाङ्गम्यते तथाहि कुमार शब्देन भ्र: तदारपरिग्रहउच्यते तदूढात्वेन प्रथमपत्नीत्वं। एते प्रकीर्णकाः॥ ९०॥

जगाद वानरान् पक्षी नाध्यगीढ्वं ध्रुवं स्मृतीः। यूयं सङ्कुटितुं यस्मात् कालेऽस्मिन्नध्यवस्यथ॥ ९१॥

इतः क्ङितिशेषमधिकृत्याह जगेत्यादि। ध्रुवं अवश्यं स्मृतिं स्मृतिशास्त्रं नाध्यगीढ्वं नाधीतवन्तइति पक्षी वानरान् जगाद विभाषालुङ्लृङोरिति विभाषागाङादेशः गाङ्कुटादिभ्य

इति षिचोक्त्विं घुमास्थेतीत्वं धिचेति षिचोलोप' इणःषीढ्ढ मिति मूर्द्धन्यः यस्माद्यूयमस्मिन् काले संकुटितुं अवसातुमध वस्य अभिप्रायं कुरुथ कुटादित्वात् ङित्वं ॥ ९१ ॥

भ० अथ ङिदतिदेशाधिकारः। पाणिनिमते कुटादिसूत्रसमूहैः ङानुबन्धत्वातिदेशात् स्वमते त्वगुणाधिकारः। जगेत्यादि। सपक्षो वानरान् जगाद किमित्याह ध्रुवं निश्चितं वितर्के वा यूयं स्मृतीर्धर्म्मसंहितानाध्यगीढ्वं नाधीतवन्तः इङ्ध्वाध्वं गीङ्षौ ध्योर्व्वेति गीरादेशः धत्वात्र णुः धेसलोपोवेति सेर्लुक् टोढो ढोधेढीति धस्य ढः यस्मादस्मिन् काले संकुटितुं मर्त्तुं यूयं अध्य वस्यथ इच्छथ कुटिरिकौटिल्ये प्रभुकार्य्यं त्यक्ता मरणमेवात्र कौटिल्यं धातोरनेकार्थत्वाद्वा कुटांणुश्रीङ्गितीति नियमादगुणत्वं अध्यवपूर्व्वस्य षोयन्नाशे इत्यस्य यन्योत्श्रमादीति ओकारलोपः ॥ ९१ ॥

नायमुद्विजितुं कालः स्वामिकार्य्याद्भवादृशां। हृत भार्य्ये च्युते राज्याद्रामे पर्य्युत्सुके भृशं ॥ ९२ ॥

ज०म० अयमेवावसितुं कालइति चेदाह नायमित्यादि। भवादृशां युष्मद्विधानां स्वामिकार्य्यादुद्विजितुं नायं कालः विजइडिति ङित्वं किमिति न भवतीति चेदाह राज्याच्च्युते भ्रष्टे रामे निर्व्वासित त्वात् तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके सीतायां॥ ९२ ॥

नायमित्यादि। भवादृशां युष्मद्विधानां सत्पुरुषाणां स्वामि कार्य्यात् उद्विजितुं चलितुं नायं कालः समयः कुतइत्याह राज्यात् च्युते भ्रष्टे रामे तत्रापि हृतभार्य्ये भृशमत्यर्थं पर्य्युत्सुके च सति तु भार्य्या युष्मद्वचनेन ज्ञातुमित्यर्थात् विजेर्णुर्निमीत्यगुणत्वं॥ ९२॥ भ०

यत्नं प्रोर्णुवितुं तूर्णं दिशं कुरुत दक्षिणां। प्रोर्णुविन्नीं दिवस्तत्र पुरीं द्रक्ष्यथ काञ्चनीं॥ ९३॥

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तुमुन् तूर्णं शीघ्रं यत्नं कुरुत तस्यान्दिशि पुरीं द्रक्ष्यथ काञ्चनीं प्राणि रजतादिभ्योऽञ् प्रोर्णुविन्नीं अभिव्यापिनीं तृचि रूपं दिवआका शस्य कर्म्मणि षष्ठी विभाषोर्णोरिति ङित्त्वपक्षे उवङ् अङित्त्वपक्षे च गुणः कुरुतेति सार्व्वधातुकमपिदिति ङित्त्वे विकरणस्य गुणोन भवति तस्य चार्द्धधातुकत्वात् अङित्त्वे धातोर्गुणः अतउत् सार्व्व धातुकमपिदिति ङित्त्वे विकरणस्य गुणोन भवति॥ ९३॥ ज०म०

यत्नमित्यादि। दक्षिणां दिशं प्रोर्णुवितुं आच्छादयितुं तूर्णं शीघ्रमेव यूयं कुरुत तत्र दिशि काञ्चनीं स्वर्णनिर्म्मितां पुरीं द्रक्ष्य थ कीदृशीं दिवआकाशस्य प्रोर्णुविन्नीं अभिव्यापिकां कर्म्मणि षष्ठी ङिद्विभोर्णोरिति ङित्वादगुणत्वे अुध्वोरित्युव् पक्षे गुणः काञ्चनस्य विकारइत्यर्थे विकारसंघेति ष्णः वट्टोऽकिञ्जइत्यइति दृशेश्चकारस्य रः॥ ९३॥ भ०

लङ्कां नाम्ना गिरेर्मूर्द्ध्नि राक्षसेन्द्रेण पालितां। निर्जित्य शक्रमानीता दृष्ट्वा यां सुरस्त्रियः॥९४॥

ज॰म॰ लङ्कामित्यादि। याम्पुरीं नाम्ना लङ्कां सुरस्त्रियो दृष्टुः दृष्टवत्यः अधं धोगाल्लिट्किदिति किन्तं तां यातेति वक्ष्यमाणेन सम्बन्धः गिरेः सुवेलस्य मूर्द्ध्नि स्थितां राक्षसेन्द्रेण पालितामिति दुर्गमलमाख्यातं शक्रं निर्जित्य सुरस्त्रिय आनीता इति च राव णस्य माहात्म्यं॥९४॥

भ॰ लङ्कामित्यादि। यां पुरीं नाम्ना लङ्कां सुरस्त्रियो दृष्टुः तां द्रक्ष्यथेति पूर्व्वेण सम्बन्धः कित्ठीदीपमिति किच्वाद्गुणत्वं गिरेः सुवेलस्य मूर्द्ध्नि स्थितां आस्वेयाधारसम्बन्धात् स्थितामिति लभ्यते राक्षसेन्द्रेण रावणेन पालितां रक्षितां सुरस्त्रियः कीदृश्यः शक्र मिन्द्रं निर्जित्यानीताः राक्षसेन्द्रेण इत्यनुषञ्जनीयं एतेन तस्य वीर्य्यमपि ख्यापितं॥९४॥

बभूव याधिशैलेन्द्रं त्रिदिवे वेन्द्रगोचरं। कुषित्वा जगतां सारं सैका शक्ये कृता भुवि॥९५॥

ज॰म॰ बभूवेत्यादि। अधिशैलेन्द्रं शैलेन्द्रस्य सुमेरोरुपरि सप्तम्यर्थे ऽव्ययीभावः इन्द्रगोचरमिन्द्रनिलयममरावत्याख्यं त्रिदिवेव तिरस्कृत्येव बभूव इन्भिभवतिभ्यां चेति किन्त्वं जगतां सारङ्कु षित्वा निष्कुष्य सैका भुवि कृता निर्मितेत्यहं शङ्के तां यात त्रिदि त्वाकुषित्वेति नक्षांचे इति किच्चप्रतिषेधे प्राप्ते मृडमृदेत्यादि ना किच्वं॥९५॥

बभूवेत्यादि। या पुरी शैलेन्द्रस्य सुमेरोरुपरि इन्द्रस्य गोचरं विषयं अमरावत्याख्यं म्रदित्वा अभिभूय बभूव अधिशैलेन्द्रं सुरालयं वा सप्तम्यर्थेऽव्ययीभावः अहमेवं शङ्के तर्कयामि जगतां सारमुत्कृष्टभागं कुषित्वा आकृष्य सैवैका भुवि कृता निर्म्मिता विश्वकर्म्मणेत्यर्थात् सेमचुधकुषित्यादौ चुधादिवर्ज्जनात् किर्त्वं ॥ ९५ ॥ भ०

अमृडित्वा सहस्राक्षं क्लिशित्वा कौशले निजे। उदित्वाऽलञ्चिरं यत्नात् सैका धात्रा विनिर्म्मिता ॥ ९६ ॥

अमृडीत्यादि। सहस्राक्षमिन्द्रममृडित्वा असुखिनं कृत्वा निजैः आत्मीयैः कौशलैः चिरं क्लिशित्वा प्रयत्नं कृत्वा उदित्वा अभिधायालम्पर्य्याप्तमेवं करिष्यामीति यत्नात् महता प्रयासेन सैका धात्रा वि नर्मिता पूर्व्ववत्किर्त्वं ॥ ९६ ॥ ज०म०

अमृडीत्यादि। सहस्राक्षं इन्द्रं अमृडित्वा असुखिनं कृत्वा निजे आत्मीये कौशले नैपुण्ये चिरं क्लिशित्वा क्लेशमनुभूय अलं पर्य्याप्तमेवमेवं करिष्यामीत्युदित्वा कथयित्वा चिरकालेन यत्नात् सैका धात्रा निर्म्मिता इत्यपि अहं शङ्के इत्यनेनान्वयः मृडगर्द्धौदे वमोरक्षेतीम् क्लिश्युत्रःचोपतापे पूक्लिशद्दितइति वेम् क्लिशू गन्धोविरोधे इत्यस्य तु वेमूदित्यादिना वदेर्वाचि सर्व्वत्र सेम चुधेत्यादिवर्ज्जनात् किर्त्वं वदेर्यजादित्वात्किः कृतश्चत्व भावः कर्म्म वेति विकारसंघेति च्वः ॥ ९६ ॥ भ०

मुषित्वा धनदं पापोयां गृहीत्वावसद्द्विषन्। तां हृदित्वेव शक्रेण यात लङ्कामुपेक्षितां॥ ९७॥

मुषित्वेत्यादि। मुषित्वा धनदं वैश्रवणं तस्मात्पुरं पुष्पकञ्च विमानमपहृतं पापः पापाचरणात् यां गृहीत्वा अवसत् उषितः द्विषन् शत्रुः शक्रेण हृदित्वेवोपेक्षितामवधीरितां हृदत्रिदेति कित्त्वं तत्र चकारेणत्क्वेत्यनुवर्त्तते॥ ९७॥

भ० मुषीत्यादि। धनदं कुवेरं मुषित्वा वञ्चित्वा ततएव यां लङ्कां गृहीत्वा पापः कुत्सिताचारोद्विषन् शत्रूरावणोऽवसत् तां यूयं यात गच्छत कीदृशीं शक्रेण इन्द्रेण हृदित्वा क्लिन्दित्वेव उपेक्षितां त्यक्तां न तु पारयित्वेति भावः मुषगलुटने लघिरहृदरोदे त्तु क्त्वेवोहृषादेरित्यादिना कित्त्वादगुणत्वं ग्रहेः सेमचुधेत्यादिना कित्त्वात् ग्रहस्वपाद्योरिति जिः ग्रहेरिमोर्घइति दोर्घत्वं॥ ९७॥

विदित्वा शक्तिमात्मीयां रावणं विजिघृक्षवः। उक्तां पिपृच्छिषूणां वोमास्मभूत सुषुप्सवः॥ ९८॥

ज०म० विदीत्यादि। आत्मीयां शक्तिं सामर्थ्यं विदित्वा पूर्ववत्कित्त्वं रावणं विजिघृक्षवः विगृहीतुमिच्छवः सुषुप्सवः शयितुमिच्छवो मास्मभूत न प्रमत्ताभवतेत्यर्थः रावणस्य बलीयस्त्वादिदमुक्तं मया वीयुयाकम्पिपृच्छिषूणां प्रष्टुमिच्छूनां अत्र हृदविदेति सनः कित्त्वे सम्प्रसारणं प्रच्छेः किरश्च पञ्चभ्यइतीडागमः॥ ९८॥

विविदिषेत्यादि। आत्मीयां शक्तिं सामर्थ्यं विविदिषा ज्ञाला रावणं विजिघत्सवो विरोधयितुमिच्छवः सन्तो यूयं मुमुक्षवः शयितुमिच्छवो मा स्मभूत सावधाना अवधाना स्थ न भवतेत्यर्थः रावणस्य मायाविलाद्बलवत्त्वाच्च एतत्सर्वं पिपृच्छिषूणां प्रष्टुमिच्छतां वोयुष्माकं कृते मया उक्तं एतेनाप्रष्टभाषणेऽनौचित्यं परिहृतं सम्बन्धविवक्षया षष्ठी विद ज्ञाने युक्तोऽवदति किच्चं ग्रह उपादाने सन् नेमुगुहग्रहइति अनिम् ग्रहस्वपप्रच्छांजिरिति जिः पूर्णानि मीत्यगुणत्वं रोढः अभान्तस्येति घत्वं षढोःकइति कः किसादिति षः सनूभिचेति उः प्रच्छेःसनि स्मिडपूङित्यादिना इम् ॥ ९८ ॥ ज०म०

नाविविदिषुमभ्येति सम्पद्रुरुदिषुं नरं। किं मुमुषिषुवद्यात द्विषोनापचिकीर्षया ॥ ९९ ॥

नावीत्यादि। वेदितुं ज्ञातुमिच्छुर्यो न भवति तं नरमविविदिषुं रुरुदिषुं रोदितुमेषणस्वभावं सम्पद्विभूतिर्नाभ्येति नागच्छतीति वोमयोक्तमिति योज्यं किन्न यात न गच्छत मुमुषिषुवत् चौरवदित्यर्थः पूर्व्ववत्कित्त्वं द्विषः शत्रोरपचिकीर्षया अपकर्त्तुमिच्छया इकोझलीति कित्त्वे गुणोन भवतीति अज्झनगमांसनीति दीर्घः ऋतइद्धातोः ॥ ९९ ॥ ज०म०

नावीत्यादि। सम्पत् सम्पत्तिरविविदिषुं वेदितुं ज्ञातुमनिच्छुं रुरुदिषुं अनध्यवसायात् रोदनेच्छुं नरं पुरुषं न अभ्येति न भ०

अभिगच्छति तेन ज्ञापनार्थं प्रब्रवीमि वइति वक्ष्यमाणेन सम्बन्धः द्विषः शत्रोरपचिकीर्षया अपकारेच्छया मुमुषिषुवत् चौरवत् यूयं किं न यात तदैव सीतादर्शनसम्भवात् ग्रुहोऽवइत्यादिना विदइदमुषः सनः कित्वादगुणत्वं हृञः सनि धौऽञ्जनिकामिति दीर्घः पुर्नोनिमीत्यगुणत्वे च्छादिरणाविति इट् व्येनचृतयीति दीर्घः संख्यादइति अः ॥ ९९ ॥

बुभुत्सवोद्रुतं सीतां भुत्सीध्वं प्रब्रवीमि वः। मा च भङ्क्त मृषोक्तं नः कृषीध्वं स्वामिने हितं ॥ १०० ॥

ज०म० बुभुत्सेत्यादि। बुभुत्सवो ज्ञातुमिच्छवः यदि सीतां बुधेस्सनन्ता ऊत्सन्ताचेति कित्त्वं एकाचइति भष्भावः तदा द्रुतं तां भुत्सीध्वं जानीतेति वो युष्मान् ब्रवीमि लिङ्सिचाविति कित्त्वं मृषोक्तं मिथ्योक्तं नोऽस्माकं मा च भुङ्क्त न जानीत अपितु सत्यं झलोझलीति सिचोलोपः झलांजश्झशि कित्त्वं पूर्ववत् अतोयूयं स्वामिने रामाय हितं कृषीध्वं कुरुत उश्चेति कित्त्वं इणः षीध्वमिति मूर्द्धन्यः ॥ १०० ॥

भ० बुभुदित्यादि। सीतां बुभुत्सवो वोद्धुमिच्छवो यूयं द्रुतं शीघ्रमेव भुत्सीध्वं जानीत इति वो युष्मान् अहं प्रकृष्टं ब्रवीमि अस्माकमुक्तं वचनं मृषा मिथ्या मास्म भुङ्क्त न जानीत अपितु सत्यमेव अस्मदएकत्वे वा वऊत्वमभिधानात् स्वामिनो रामस्य हितं कृषीध्वं कुरुत समार्थैनेत्यादिना षष्ठी स्वामिने इति पाठे क्रियार्थपचिति चतुर्थी गुध्यौकवेदने सनि पुर्नोनिमीत्यगुणत्वं झभान्त

क्षेति भवं अन्यत्र क्त्वाः सीध्वं इगुरुर्मढीति किव्वादगुणलं अपर च मायोगेऽमोऽभावः झसस्वादिति सेर्लोपः छञ्जोक्त्वाःसीध्वं पूर्व्वं वत् कित्त्वं टोठोढोधोढिति धस्य ढलं ॥।१००॥

समगध्वं पुरः शत्रोर्मोदयध्वं रघूत्तमं। नोपायध्वं भयं सीतां नोपायंस्त दशाननः॥१०१॥

समेत्यादि। इदमहमाशंसे यदुत शत्रोः रावणस्य पुरः अग्रतः समगध्वं सङ्गताभवत आशंसायां भूतवच्चेति लुङ् समोगम्हृ क्षीति तङ् वागमइति सिचः किन्त्वे अनुदात्तेत्यनुनासिकलोपः ह्रस्वादङ्गादिति सिचोलोपः मोदयध्वं रघूत्तमं हर्षयत तत्का र्य्यकरणात् मा च भयमुपायध्वं सूचयत भयं माकार्ष्टेत्यर्थः आङोयमहनइति तङ् यमोगन्धनइति सिचः किन्त्वे अनुनासिक लोपः गन्धनं सूचनं अन्यथा युष्मासु गन्धितभयेषु नियतमसौ दशानः सीतामुपायंस्त स्वीकृतवान् स्यात् तस्य दुर्वृत्तत्वात् आशंसायां भूतवच्चेति अनिष्टाशंसायां लुङ् उपाद्यमःस्वीकरण इति तङ् स्वीकरणञ्चात्र विवाहमभुक्तं विभाषोपयमइति अकित्त्वपक्षे रूपं॥१०१॥ ज०म०

समेत्यादि। इदमहमाशंसे यत् शत्रोरावणस्य पुरोऽग्रतो यूयं समगध्वं सङ्गताभवत अभिधानादाशंसायां टो आशंसायां भूतसामान्यविहिताश्चेति परः समोगम्हृक्षेति मं इगुरुर्मटीत्या दिना सेःकित्वात् वनतनाद्यनिमामिति मलोपः झसस्वादिति सिलोपः रघूत्तमं रामं यूयं मोदयध्वं हर्षयत तत्कार्य्यकरणात् भ०

भयं न उपायध्वं न सूचयत न कुरुतेत्यर्थः यमःसूचनइति सेः किस्वात् सलोपः आत्मनेपदाधिकारमध्ये यमःसूचनइत्यस्य करणादेव सूचनार्थे यमआत्मनेपदं किम्वा उपयमोविवाह इत्यनेन मं तत्र विवाहः स्वीकारः उपाद्यमः स्वीकरणइति पर सूत्रं यमःसूचनेवाव्दाहे इत्यत्रापि उदाहः स्वीकारः स्वीकरणे वेति परसूत्रं स्वीकारार्थेन परिणयोऽपि गम्यते तदा भयं न उपायध्वं न स्वीकुरुत दशाननः सीतां न उपायंस्त विवाहेन न स्वीकृतवान् न स्वीकरोत् वा आत्मप्रशंसायां टी वाव्दाहइति किस्वाभावपक्षे सलोपाभावः इत्येवं जगाद वानरान् पक्षीत्य न्वयः ॥ १०१ ॥

ततः प्रास्थिषतात्रीन्द्रं महेन्द्रं वानराद्रुतं । सर्व्वे किलकिलायन्तो धैर्य्यञ्चाधिषताधिकं ॥ १०२ ॥

ज॰म॰ ततइत्यादि । ततः सम्पातिवचनानन्तरं सर्व्वे वानरा महेन्द्रं पर्व्वतं प्रास्थिषत प्रस्थितवन्तः धैर्य्यञ्चाधिकमाधिषत आहितवन्त आत्मनि तिष्ठतेर्द्धातेश्च स्थाघ्वोरिच्चेति किस्वमिलञ्च तिष्ठतेः समवप्रविभ्यःस्थइति तङ् किलकिलायन्तः किलकिलाध्वनिं कुर्व्वाणाः अव्यक्तानुकरणेत्यादिना डाच् तदन्तात् लोहितादि डाज्भ्यःक्यष् वाक्यषइति परस्मैपदं ॥ १०२ ॥

भ॰ ततइत्यादि । सम्पातिवचनानन्तरं सर्व्वे वानरा महेन्द्रं पर्व्वतं प्रास्थिषत प्रस्थितवन्तः द्रुतं शीघ्रं मुहुरिति पाठे किलकिलायन्त इत्यनेन सम्बन्धः प्रपूर्व्वात्तिष्ठतेः प्रतिज्ञानिर्णयेत्यादिना मं स्था

टाक्षिरिति क्तिरगुणत्वञ्च मान्ताऽदनतइत्यत् अधिकं धैर्य्यञ्च आत्मनि आधिषत आहितवन्तः धाञोञ्जिम्ब्यन्तोत्यादिना सं अन्यत् पूर्व्ववत् कीदृशाः किलकिलायन्तः किलकिलाशब्दं कुर्व्वन्तः नैकाचोव्यक्तानुकरणादिति डाच् द्वित्वञ्च डाच्लोहितादेरिति क्यः पञ्च ॥ १०२ ॥

निकुञ्जे तस्य वर्त्तित्वा रम्ये प्रक्ष्वेदिताः परं। मणिरत्नाधिशयितं प्रत्युदैक्षन्त तोयधिं ॥ १०३ ॥

निकुञ्जइत्यादि। तस्य पर्व्वतस्य निकुञ्जे लतादिपिहितस्थाने वर्त्तित्वा स्थित्वा नक्त्वासेक्तिति क्त्विप्रतिषेधः परं प्रक्ष्वेदिताः उच्चैरव्यक्तशब्दङ्कुर्व्वाणाः निष्ठाशीक्तिति क्त्विप्रतिषेधः तोयधिं प्रत्युदैक्षन्त दृष्टवन्तः तस्ि रूपं कीदृशं मणिरत्नाधिशयितं क्तोऽधिकरणेचेति क्तः पूर्व्ववत्क्त्विप्रतिषेधः कीदृशं मणिरत्नाधिशयितं मणयंद्रत्नमिति स्त्रीरत्नादावपि रत्नशब्दस्य दृष्टत्वात् एकपदव्यभिचारे विशेषणविशेष्यभावः तस्याधिशयितमवस्थानमित्यर्थः ॥ १०३ ॥ जं०म०

निकुञ्जइत्यादि। तस्य पर्व्वतस्य निकुञ्जे लतादिपिहितस्थाने रम्यत्वात् वर्त्तित्वा स्थित्वा परमतिशयेन प्रक्ष्वेदिताश्च्यक्तशब्दं कर्त्तुमारब्धावानरास्तोयधिं समुद्रं प्रत्युदैक्षन्त दृष्टवन्तः कीदृशं मणिरत्नाधिशयितं मणिरत्नैर्मणिश्रेष्ठैरधिशयितं अधिष्ठितं कर्म्मक्रियेत्यादिना अधिपूर्व्वशीङ्आधारस्य कर्म्मत्वात् कर्म्मणि क्तः आधारेक्तइति केचित् ञाञ्जिस्विदकूलने घेवादिक्तेक्तइति भ०

कर्त्तरि क्तः भावादिकर्मणोरिति पक्षे इम् उभयत्र पूङ्क्षीधृषेत्यादिना गुणः वर्त्तितेत्यत्र सेमचुधेत्यादिना क्वित्वनिषेधात् गुणः ॥ १०३ ॥

अमर्षितमिव घ्नन्तं तटाद्रिं सलिलोर्म्मिभिः । श्रिया समग्रं द्युतितं मदेनेव प्रलोठितं ॥ १०४ ॥

ज०म० अमेत्यादि । सलिलोर्म्मिभिः कल्लोलैः तटाद्रीन् तटस्थान् पर्व्वतान् घ्नन्तं प्रत्युदैचन्त अमर्षितमिव मृषेस्तितिक्षायामिति क्वित्वप्रतिषेधः पश्चात् नञ्समासः श्रिया हेतुभूतया समग्रं संपूर्णं द्युतितमिति कर्त्तरि निष्ठा यदि वा श्रिया कर्तृभूतया द्युतितं शोभितं अचेत्यध्याहृत्य तमैचन्तेति योज्यं एवञ्च कृत्वा उदुपधादित्यादिना भावे निष्ठायां विकल्पेन क्वित्वप्रतिषेधात् क्वित्वमुदाहृतं मदेनेव मत्ततयेव श्रिया हेतुभूतया प्रलोठितं घूर्णितुमारब्धं आदिकर्म्मणि निष्ठायामक्वित्वमुदाहृतं ॥ १०४ ॥

भ० अमेत्यादि । तोयधिं प्रत्युदैचन्तेत्यन्वयः सलिलोर्म्मिभिर्जलवेगैस्तटाद्रीन् तटसम्बन्धिनः पर्व्वतान् घ्नन्तं अमर्षितमिव क्रुद्धमिव पूङ्क्षीधृषेत्यादिना क्षमार्थमृषेर्गुणः पश्चान्नञ्समासः ऊर्म्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोरिति मेदिनी वीचिवाचित्वेऽत्र सलिलपदं स्वरूपकथनार्थं श्रिया हेतुभूतया समग्रं सम्पूर्णं यथा स्यात्तथा द्युतितं शोभमानं गत्यर्थाकर्मकेति कर्त्तरि क्तः दीपितुमारब्धं वा तदा भावादिकर्मणोर्वेत्यतद्दति पक्षे गुणाभावः मदेन मत्ततयेव प्रलोठितं घूर्णितुमारब्धं सदाचञ्चलत्वात् आदिकर्मणि क्तः पूर्व्ववत् पक्षे गुणः ॥ १०४ ॥

पूतं शीतैर्नभस्वद्भिर्ग्रन्थित्वेव स्थितं रुचः। गुम्फित्वेव निरस्यन्तं तरङ्गान् सर्व्वतोमुडः॥ १०५॥

पूतमित्यादि। नभस्वद्भिर्व्वायुभिः शीतैः पूतं पवित्रीकृतं पूङ्ञ सेति विकल्पेनेट् अतएव पक्षे पूतः क्त्वानिष्ठयोः कित्त्वप्रतिषेधोऽत्र न भवति तत्र सेडित्यनुवर्त्तते रुचोदीप्तीर्ग्रथित्वेव संदर्भ्येव स्थितं नोपधात्थफान्ताद्वेति कित्त्वप्रतिषेधपक्षे रूपं सर्व्वतस्तरङ्गान् गुम्फित्वेव निरस्यन्तं क्षिपन्तं नोपधादिति विकल्पेन कित्त्वप्रतिषेधः यत्रेत्यध्याहृत्य तमैक्षन्तेति योज्यं॥ १०५॥ ज०म०

पूतमित्यादि। शीतैः शीतलैर्नभस्वद्भिर्व्वायुभिः पूतं पवित्रीकृतं तोयधिं प्रत्युदैक्षन्तेत्यनेन सम्बन्धः पूङ्क्त्विमवमेति दृश्मोऽभाव पक्षे पूङ्शीधृषेत्यादौ सेमग्रहणान्न गुणः नभःशब्दान्मोऽन्मस्यपादतु रिति वतुः नदंतसाविति पदत्वनिषेधात् सोर्व्विफदत्यस्य पदान्त विषयत्वान्न विसर्गाभावः रुचोदीप्तीर्ग्रन्थित्वेव स्थितं सर्व्वत्र दीप्तिमत्वात् उत्प्रेक्षेयं ग्रन्थकिगसन्दर्भे थफान्तुरूदति विकल्पेनाकित्वात् नलोपाभावः सर्व्वत्र तरङ्गान् गुम्फित्वेव मुडः पुनःपुनर्निरस्यन्तं क्षिपन्तं गुन्फग्रन्थे पूर्व्वेण पक्षे कित्वात् अस्तुङ्गखोपइति नलोपः॥ १०५॥ भ०

वञ्चित्वाप्यम्बरं दूरं स्वस्मिंस्तिष्ठन्तमात्मनि। तृषित्वेवानिशं स्वादु पिबन्तं सरितां पयः॥ १०६॥

ज॰म॰ वञ्चीत्यादि। स्थित्यनतिक्रमादम्बरं दूरमवञ्चित्वातिक्रम्य वञ्चिलुञ्चीति कित्त्वप्रतिषेधः तस्मिन्नात्मनि स्वरूपे तिष्ठन्तं अत्र मन्क्व्यप्रशानिति नकारस्य रुत्वं पूर्व्वस्य त्वनुनासिकादेशः तृषि त्वेव तृषितइव भूत्वा तृषिमृषीत्यादिना प्रतिषेधः तत्त्वत्विस्या स्वादुत्वात् सरितामपयः स्वादु पिवन्तं अनिशमजस्त्रं॥१०६॥

भ॰ वञ्चित्वेत्यादि। पुनः कीदृशं तोयधिं अम्बरमाकाशं वञ्चित्वापि अतिक्रम्यापि स्वस्मिन् स्वकीये आत्मनि स्वरूपे तिष्ठन्तं मर्य्यादानतिक्रमात् पृथ्वगाउच्चोऽपि भूत्वा तां नातिक्रामतीति भावः वञ्चुगत्यां तृषमृषकृषेत्यादिना विकल्पेनाकित्त्वात् नलोपाभावः तृषित्वेव अनिशं सततं स्वादु मधुरं सरितां पयोनदीनां जलं पिवन्तं स्वजलस्य चारत्वात् जितृषापिपासायां पूर्व्वेण कित्त्वादगुणत्वं॥१०६॥

द्युतित्वा शशिना नक्तं रश्मिभिः परिवर्द्धितं। मेरो र्ज्जेतुमिवाभोगमुच्चैर्हिद्योतिषुं मुहुः॥१०७॥

भ॰ द्युतीत्यादि। शशिना नक्तं रात्रौ द्युतित्वा दीप्तिमता भूत्वा रश्मिभिः परिवर्द्धितं वृद्धिं नीतं सन्तं तोयधिं मेरोराभोगमच्चत्त्वं जेतुमिव मुहुरुच्चैर्हिद्योतिषुं वर्द्धितुमिच्छुमित्यर्थः अनेकार्थत्वाद्धातूनां द्युतित्वा दिद्योतिषुमिति रलोव्युपधादिति किन्नाकित्त्वे मच भुकारोपधादिकारोपधाच्च रलन्ताद्धलादेर्धातोः परौ क्त्वासनौ वा न कितौ भवतइति सूत्रार्थः॥१०७॥

उपाक्रंसि उद्यतोऽस्मि औपादादरमदरति मं व्याषिः उपाक्रंसि उत्सा
हं कृतवानस्मीति वार्थः इच्छुताहताबनइति मं कालभावाधा
रमिति उभयत्र भावे सप्तमी ॥ ११२ ॥

तस्मिन् वदति रुष्टोऽपि नाकार्षं देवि विक्रमं। अ
विनाशाय कार्य्यस्य विचिन्वानः परापरं ॥ ११३ ॥

यद्यादावेव प्रविष्टोऽसि तर्हि किमिति स्वकर्म न दर्शितवानसी ज०म०
त्याह। तस्मिन्नित्यादि हे देवि तस्मिन्वदति रुष्टोऽपि विक्रमं नाका
र्षं तं तथा वदन्तमनादृत्य विक्रमं नाकार्षमित्यर्थः षष्ठी चानादर
इति चकारात्सप्तमी किमर्थं कार्य्यस्य सन्देशकथनादेरविना
शाय विचिन्वानः परापरं पौर्व्वापर्य्यं निरूपयन् कर्त्तभिप्रायेतङ्
॥ ११२ ॥

तस्मिन्नित्यादि। हे देवि तस्मिन् रावणे वदति वदन्तं तं भ०
अनादृत्य रुष्टोऽप्यहं विक्रमं नाकार्षं न कृतवान् स्वामीश्वराधि
पती त्यादिना अनादरे सप्तमी तस्मिन् वदति सतीति भावे
सप्तमीति विद्यासागरः कुतइत्याह यतोऽहं कार्य्यस्य सन्देशकथ
नस्य अविनाशाय अविघाताय परापरं विचिन्वानः परं यद्भवि
ष्यति विरोधादि अपरञ्च यद्भूतं सन्देशकथनार्थमागमनादि
तत्सर्व्वं विचारयन् उत्तरे सति कथं न पूर्व्वस्य बाधइति चिन्त
यन् ॥ ११२ ॥

वानरेषु कपिः स्वामी नरेष्वधिपतेः सखा। जातोरा मस्य सुग्रीवस्ततोदूतोऽहमागतः॥ ११४॥

ज॰म॰ कथं वानरस्त्वं तस्य किंकरइत्याह। वानरेत्यादि वानरेषु स्वामी यः कपिः सुग्रीवः स नरेष्वधिपतेरामस्य सखा जातः स्वामी श्वरेत्यादिना षष्ठीसप्तम्योर्विधानात् सप्तम्युदाहृता ततोऽहं दूत आगतः॥ ११४॥

भ॰ वानरेष्वित्यादि। रामस्यानुचरोवानरः कथमित्याह वान राणां कपिः सुग्रीवो नराणामधिपतेरामस्य सखा जातः ततोऽहं दूत आगतः स्वामीश्वराधिपतीति सप्तमी॥ ११४॥

ईश्वरस्य निशाटानां विलोक्य निखिलां पुरीं। कुश लोऽन्वेषणस्याहमायुक्तोदूतकर्म्मणि॥ ११५॥

ज॰म॰ आगत्य च लङ्कां प्रविश्य दृष्टायातइत्याह। ईश्वेत्यादि निशा टानां राक्षसानामीश्वरस्य दशाननस्य अत्र षष्ठ्युदाहृता पुरीं निखिलां निःशेषां विलोक्य किं तत्र वर्त्ततइति प्राप्तइति वक्ष्यमा णेन सम्बन्धः कुशलोऽन्वेषणस्याहं सीतायाअन्वेषणस्य निपुणः आ युक्तोदूतकर्म्मणि दूतकर्म्मणि दूतक्रियायां व्यापृतः आयुक्तकुश लाभ्यामिति षष्ठीसप्तम्यौ॥ ११५॥

भ॰ ईश्वरस्येत्यादि। निशाटानां राक्षसानां ईश्वरस्य रावणस्य निखिलां समस्तां पुरीं विलोक्य अहं प्राप्तइत्यग्रिमश्लोकेनान्वयः

कीदृशः अन्वेषणस्य कुशलः सीतान्वेषणनिपुणः दूतकर्मणि आयु क्तः तत्परः स्वामीश्वराधिपतीत्यादिना षष्ठीसप्तम्यौ ॥ ११५॥

दर्शनीयतमाः पश्यन् स्त्रीषु दिव्यास्वपि स्त्रियः। प्राप्तो व्यालतमान् व्यस्यन् भुजङ्गेभ्योऽपि राक्षसान्॥ ११६ ॥

दर्शेत्यादि । तत्र दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् यतश्च निर्द्धारणमिति सप्तमी दर्शनीयतमत्वेन गुणेन पृथ क्करणात् भुजङ्गेभ्योऽपि व्यालतमान् हिंस्रान् राक्षसान् व्यस्यन् अपक्षिपन् पञ्चमीविभक्तइति पञ्चमी भुजङ्गेभ्यो राक्षसानां विभा गात् प्राप्तो देव्याः पादमूलमित्यर्थात् ॥११६ ॥ ज०म०

दर्शेत्यादि। दिव्यास्वपि स्त्रीषु मध्ये दर्शनीयतमाः स्त्रियः पश्यन् भ० भुजङ्गेभ्योऽपि व्यालतमान् अतिहिंस्रान् राक्षसान् व्यस्यन् अव क्षिपन् अहं प्राप्तो देव्याः स्थानमित्यर्थात् गम्यते स्त्रीष्वित्यत्र दर्श नीयतमत्वेन गुणेन समुदायादेकदेशस्य निर्द्धारणात् स्वामीश्व राधिपतीत्यादिना निर्द्धारे सप्तमी भुजङ्गेभ्यइत्यत्र पञ्चमीव्यति रेके इति सूत्रेण पञ्चमीमाह परः व्यतिरेको हीनाधिकभावइति परः स्वमते निर्द्धारेऽधिकेनेत्यादिना निर्द्धारे पञ्चमी केनचिद्गु णेन समानधर्मिभ्यो यत्पृथक्करणं सनिर्द्धारः भुजङ्गराक्षसयोस्तु सधर्मित्वं व्यालत्वेन वास्तवता अपि क्वचित् पञ्चमीत्यनेन निर्द्धा रे पञ्चमीमाह ॥ ११६ ॥

भवत्यामुत्सुकोरामः प्रसितः सङ्गमेन ते। मघासु कृतनिर्व्वापः पितृभ्योमां व्यसर्ज्जयत् ॥ ११७ ।

ज॰म॰ किमवस्थोरामइत्याह भवेत्यादि। भवत्यां त्वयि उत्सुक: उन्मनाः रामः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यांतृतीया चेति चकारात्सप्तमी मघाभिर्युक्तः कालः तत्समीपे चन्द्रमसोवर्त्तमानत्वात् नक्षत्रेण युक्तः कालइत्यण् तस्यलुबविशेषइति लुप् तस्मिन्काले पितृभ्यः कृतनिर्व्वापः दत्तदानः मां व्यसर्ज्जयत् नक्षत्रेच लुपीति सप्तमी तत्रापि लुपि युक्तवद्व्यक्तिवचनइति स्त्रीलिङ्ग बहुवचने भवतः व्यसर्ज्जयदिति विसृज्यात्प्रातिपदिकेत्यादिना प्रातिपदिकमात्रे प्रथमा ॥ ११७ ॥

भ॰ भवत्यामित्यादि। रामोमां व्यसर्ज्जयत् प्रास्थापयत् कीदृशः सन् भवत्यां त्वयि उत्सुकः उन्मनाः तव सङ्गमेन प्रसितः प्रसक्तः प्रसितोत्सुकाभ्यां तृतीयासप्तम्याविति परः समते विषयविवक्षया सप्तमी करणत्वविवक्षया तृतीया मघासु मघानक्षत्रयुक्तकाले पितृभ्यः कृतनिर्व्वापः कृतदानः काले सप्तमी मघाशब्दस्य तद्युक्तकालवाचित्वं कालवाचिनोमघाशब्दादित्युक्तेरेव गम्यते सोत्रोपचारात् कालेऽपि स्त्रीलिङ्गत्वं बहुवचनान्तत्वञ्च परे तु मघानक्षत्रेणेन्दुयुक्तेन युक्तः कालइत्यर्थे टपतन् लुक्च प्रत्ययविशिष्टवचने इति स्त्रीत्वं बहुवचनत्वञ्च ॥ ११७ ॥

अयं मैथिल्यभिज्ञानं काकुत्स्थस्याङ्गुरीयकः। भवत्याः स्मर्त्तात्यर्थमर्पितः सादरं मम ॥ ११८ ॥

सन्देहनिरस्यर्थं चाभिज्ञानं दर्शयन्नाह अयमित्यादि। काकु जं॰म॰
त्स्थस्यायमङ्गुलीयकोऽभिज्ञानं चिह्नमयमभिज्ञानमिति लिङ्गा
धिके प्रातिपदिकमात्रे प्रथमा मैथिलीति सम्बोधनाधिके सम्बोध
नेचेति चामन्त्रितं सम्बुद्धिश्चात्रैव द्रष्टव्यं काकुत्स्थस्येति षष्ठीशेष
इति षष्ठी भवत्याश्वस्त्यर्थं स्मरता मम चादरमर्पितं अधीगर्थेत्या
दिना स्मरणार्थे कर्मणः शेषविवक्षायां षष्ठी ॥११८॥

अयमित्यादि। सन्देहनिरासार्थमाह हे मैथिलि अयं काकु भ॰
त्स्थस्य रामस्य अङ्गुलीयकमाभरणविशेषोऽभिज्ञानं चिह्नं वा
र्थसम्बुद्ध्युक्तार्थं इति लिङ्गार्थे सम्बोधने च प्रथमा काकुत्स्थस्येति
सम्बन्धे षष्ठी अस्त्यर्थं भवतीं स्मरता रामेण सादरं यथा स्यात्त
था मम समर्पितः भवत्या इति समार्थैनेत्यादिकर्मणि षष्ठी अन्ये
तु कर्मणो वा इत्याहुः सूत्रार्थस्य शेषादिविशेषणैः कर्मणि षष्ठी
मुक्ता कर्मादिविषयेऽप्यविवक्षिते कर्मादौ सम्बन्धविवक्षायां षष्ठी
वेत्यनेनान्यत्रापि षष्ठीं कुर्वन्ति विशेषणविवादन्यत्रापि
दृष्टत्वात् मतेस्याधारे सम्बन्धविवक्षा अङ्गुली भवति तिष्ठतीति
ठञ्चकादिति ईयः नद्यन्तस्य प्राणिजातित्वात् अलङ्कारद्रव्यस्य
गम्यमानत्वात् पुंस्त्वमुदाहृतं अङ्गुलीयकमूर्मिकेत्यमरेण सामा
न्यत्वान्नपुंसकं प्रयुक्तं ॥११८॥

रामस्य दयमानोऽसावध्येति तव लक्ष्मणः। उपा
स्कृषाती राजेन्द्रागमस्येह मा शुचीः॥११९॥

ज०म० रामेत्यादि। अथ लक्ष्मणोरामस्य दयमानोरामं रक्षन् दुःखं मा कार्षीरिति दयतेः कर्मणि षष्ठी तवाध्येति त्वां स्मरति अधीगर्थे षष्ठी आश्वासनार्थमाह मा चसीः उद्वेगं मा कार्षीः चसेरीदित्वान्निष्ठायामिट्प्रतिषेधात् सिचइट् भवति यतोराजेन्द्रौ रामलक्ष्मणौ दूष्टागमस्यागमनस्य भावे अप् उपास्कृषातां प्रतियत्नं कृतवन्तौ आगमनस्य निश्चितत्वात् तस्यैव सुग्रीवसख्येन गुणाधानात् तेन कृतः प्रतियत्नइति कर्मणि षष्ठी प्रतियत्ने लुङ् तङ् सुट्॥११९॥

भ० रामेत्यादि। असौ लक्ष्मणोरामस्य दयमानः शोकापनोदनेन रामं प्रतिपालयन् तव अध्येति त्वां स्मरति पूर्ववत्कर्मणि षष्ठी आश्वासार्थमाह राजेन्द्रौ क्षत्रियश्रेष्ठौ तौ दूष्टागमस्य उपास्कृषातां आगमनमुपस्कृतवन्तौ अतोमा चसीः भयं न कुरु स्वप्नावक्षेपणेत्यादिना प्रतियत्ने मं सम्परेःसुमुपादित्यादिना सुम् सतोगुणान्तराधानं प्रतियत्नः निश्चितत्वात् सतएव गमनस्य सुग्रीवसख्येन गुणान्तरस्योत्कर्षस्याधानात् पूर्ववत्कर्मणि षष्ठी कृञः प्रतियत्ने कर्मणि षष्ठीति परः चसीउद्वेगे टी॥११९॥

रावणस्येह रोच्यन्ति कपयोभीमविक्रमाः। धृत्या नाथस्व वैदेहि मन्योरुन्नासयात्मनः॥१२०॥

ज०म० रावेत्यादि। इह लङ्कायां कपयोभीमविक्रमाः अवज्ञापराक्रमाः रावणस्य रोच्यन्ति बरोगं रावणं करिष्यन्ति भीमविक्रमा

इति गुणप्रधानोनिर्द्देशः ततश्च विक्रमेरुजः भावकर्त्तृकत्वात् रुजा र्थानां भाववचनानामज्वरइति षष्ठी अतोवैदेहि धृत्या नाथस्व आश्वसस्व धृतिं लभस्वेत्यर्थः आशिषिनाथइति कर्म्मणि षष्ठी आशि षिनाथइत्युपसंख्यानात्तङ् मन्योरुज्जासयात्मनः मन्युं नाशय जसुहिंसायां ताडने च चौरादिकस्य हिंसार्थत्वात्तेन जासिनि प्रहणेति कर्म्मणि षष्ठी ॥ १२० ॥

रावणस्येत्यादि। इह लङ्कायां कपयोभीमपराक्रमाः सन्तोरा वणस्य रोत्स्यन्ति रावणं पीडयिष्यन्ति रुजोभङ्गे तो कर्म्मणि षष्ठी अन्ये तु रुजार्थस्य भावकर्त्तृके इति सूत्रेण कर्म्मणि षष्ठ्युदाह रणार्थं कपयस्तत्सम्बन्धिनोभीमाविक्रमाश्च इह रावणस्य रोत्स्य न्तीत्यन्वयं कुर्व्वन्ति हे वैदेहि धृत्या नाथस्व धृतिर्भूयादित्यात्म न्याशिषं कुरु धृतिं लभस्वेति भावः कर्म्मणि षष्ठी आशिषिनाथइति षष्ठ्यर्थं परसूत्रं ग्रपथाशीरित्यादिना मं आत्मनोमन्योरुज्जा सय आत्मनः शोकं नाशय जसकवधे कर्म्मणि षष्ठी जासिनिप्र हणनाटिक्राथिपिषांहिंसायामिति षष्ठ्यर्थं परसूत्रं ॥ ॥ १२० ॥ भ०

राक्षसानां मयि गते रामः प्रणिहनिष्यति। प्राणा नामपणिष्टासौ रावणस्त्वामिहानयन् ॥ १२१ ॥

राक्षेत्यादि। मयि गते रामोराक्षसानां प्रणिहनिष्यति राक्ष सान् मारयिष्यति पूर्व्ववत्कर्म्मणि षष्ठी निप्रहणइति व्यस्तविप र्य्यस्तविपर्य्यस्तग्रहणमित्युक्तं नेर्गदेत्यादिना णत्वं किञ्च प्राणाना जं०म०

मपणिष्टायमिति अर्थं रावणस्तामिहानयन् प्राणानपणिष्ट विक्रीतवान् व्यवहृपणोःसमर्थयोरिति षष्ठी प्राणानामपणायिष्टेति पाठान्तरं तद्युक्तं स्तुत्यर्थस्य पणेस्तत्र ग्रहणात् गुपूधूपेत्यादिना आयप्रत्ययोन भवति॥१२१॥

भ॰ राक्षसानामित्यादि। मयि गते सति रामोराक्षसानां प्रणिहनिष्यति राक्षसान् मारयिष्यति प्रास्यद्योयदृति शेषत्वं कर्म्मणि षष्ठी असौ रावणस्तामिह लङ्कायामानयन् प्राणानामपणिष्ट प्राणान् विक्रीतवान् व्यवहृपणोर्व्यवहारे इति षष्ठ्यर्थं परस्मं तत्र व्यवहारेदृति क्रयविक्रयलक्षणे द्यूतक्रियायाञ्चेति व्याख्यानं पणक्व्यवहृतौस्तुतौ चारेदृत्यनेन कमस्रतदृत्यादिसूत्रविहिता आयप्रत्ययाविभाषिता: तेन पक्षे नायप्रत्यय: अपणिष्टेति चिन्त्यमिति विद्याविनोदस्य प्रलपितं व्यवस्थितवाधिकारादाया दयोऽसार्व्वधातुके वा भवन्तीति पक्षे नायप्रत्ययदृति विद्यासागरेणोक्तत्वात् स्वमतं युक्तमेव॥१२१॥

अदेवीद्वन्धुभोगानां प्रादेवीदात्मसम्पदं। प्रतक्तत्वस्तवैकस्याः स्मरत्यक्लोरघूत्तमः॥१२२॥

ज॰म॰ अदेवीदित्यादि। न केवलं प्राणानपणिष्ट बन्धुभोगानामदेवीत् बन्धुभोगान्विक्रीतवान् दिवस्तदर्थस्येति षष्ठी दिवोव्यवहारार्थत्वात् प्रादेवीदात्मसम्पदं विक्रीतवान् विभाषोपसर्गेदृति पक्षे द्वितीया अप्रस्तेन युक्तत्वात् रामानुरागं पुनर्द्दर्शयन्नाह रघूत्तम

स्मरति प्रयोगश्चेति षष्ठी भक्तइति एकस्मिन्नप्यह्नि कालोऽर्थप्रयोगकालेऽधिकरणइति षष्ठी ॥ १२२ ॥

अदेवीदित्यादि। न केवलं प्राणानामपणिष्ठासौ रावणो बन्धून् भोगांश्च अदेवीत् क्रीतवान् त्यक्तवानिति यावत् कर्म्मणि षष्ठी आत्मसम्पदमपि प्रादेवीत् विक्रीतवान् कर्म्मणि द्वितीया परे तु व्यवहारे सोपसर्गस्य दिवः कर्म्मणि वा षष्ठी नित्यन्त्वनुपसर्गस्येत्याङ्कः अथ संचिन्त्य पुनरपि रामानुरागं दर्शयति अह्नः शतकालो दिवसे शतं वारान् रामएकस्यास्तव एकां त्वां स्मरति चकृत्वस् वारेइति शतशब्दात् चकृत्वस् तद्योगे स्वामीश्वराधिपतीत्यादौ सुजर्थैरिति अह्नन्शब्दात्षष्ठी तवेति कर्म्मणि षष्ठी ॥ १२२ ॥ भ०

तवोपशायिका यावद्राक्षस्यश्चेतयन्ति न। प्रतिसंदिश्यतां तावद्भर्त्तुः शार्ङ्गस्य मैथिलि ॥ १२३ ॥

एवं तामाश्वास्य सन्देशन्दापयितुमाह तवेत्यादि। हे मैथिलि तवोपशायिका परिपाट्या शयनं याभीराक्षसीभिः सहेत्यर्थात् पर्य्यायार्हणोत्पत्तिषु ण्वुच यावन्न चेतयन्ति न प्रतिबुध्यन्ते तावत्प्रतिसन्दिश्यतां प्रतिसन्देशोदीयतां शार्ङ्गस्य भर्तुः शार्ङ्गं धनुर्धारयतो रामस्य तव शार्ङ्गस्येति यथाक्रमं कर्तृकर्म्मणोः कृतीति षष्ठी ॥ १२३ ॥ ज०म०

तवेत्यादि। हे मैथिलि तवोपशायिका पर्य्यायशयनं याभीराक्षसीभिः सहेत्यर्थात् पर्य्यायप्राप्ता तास्त्र राक्षसीयावन्न चेत भ०

यन्ति न प्रतिबुध्यन्ते तावत् शार्ङ्गस्य भर्त्तुर्धनुर्धारयतो रामस्य कृत प्रतिसन्दिश्यतां प्रतिसन्देशो दीयतां इत्येवं हनूमान् प्रोचे इति पूर्व्वेण सम्बन्धः उपपूर्व्वशीङ् पर्य्यायक्रयनवाचकः अस्यूणकेति ज्ञापकात् भावे णकः स्त्रीलक्ष ढघेक्तीत्यादिना तवेत्यत्र कर्त्तरि षष्ठी शार्ङ्गस्येत्यत्र कर्म्मणि तव उप समीपे शायिकाः शयाना: राक्षसः कर्त्तरि णकइति केचित् चितकर्षज्ञाने चुर्भोञ्जिः ॥१२३॥

पुरः प्रवेशमाश्चर्य्यं बुद्धा शाखामृगेण सा। चूडामणिमभिज्ञानं ददौ रामस्य सम्मतं ॥१२४।

ज०म० पुरइत्यादि। शाखामृगेण मर्कटेन पुरोलङ्कायाः दुःप्रवेशायाः प्रवेशः तमाश्चर्य्यमद्भुतं बुद्धा सा सीता चूडामणिमभिज्ञानं ददौ सर्व्वमुक्तमस्य सम्भाव्यतइति उभयप्राप्तौ कर्म्मणीति षष्ठी प्रवेशइत्युभयप्राप्तौ कृति लङ्काहनूमतोः कर्म्मकर्तृत्वात् रामस्य संमतं प्रियं मतिबुद्धीत्यादिना वर्त्तमाने निष्ठा नलोकेति षष्ठी प्रतिषेधे प्राप्ते क्तस्य च वर्त्तमानइति षष्ठी॥ १२४ ॥

भ० पुरइत्यादि। शाखामृगेण वानरेण पुरोलङ्कायाः प्रवेशमाश्चर्य्यं बुद्धा मत्वा सा सीता चूडामणिमभिज्ञानं शिरोरत्नं स्वकीयचिह्नं ददौ रामस्य सम्मतं रामेण मन्यमानं शाघमानं सदा स्मरणात् शार्षैकार्येति वर्त्तमाने क्तः तद्योगे कामुकयज्ञार्थं क्तइति कर्त्तरि षष्ठी अपूर्व्वविशेषेञ् तद्योगे ढघेक्तीति पुरइत्य

च कर्म्मणि षष्ठी कश्चिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् शाखामृगेणेत्यत्र ढ्घेकलीत्यनेन षष्ठीविषयेऽपि साधनहेत्वित्यादिना कर्त्तरि तृतीया इति केचित् वस्तुतस्तु यत्रैककृद्योगे कर्त्तरि कर्म्मणि च षष्ठ्याविषयः स्यात् तत्र ढ्घेकलीत्यादिना कर्म्मणि नित्यं षष्ठी स्वभावक्रेत्यादौ सठइत्यनेन तु कर्त्तरि विभाषया षष्ठी षटेषष्ठी योग्यकर्म्मवत् कृतिप्रयुज्यमाने इत्यर्थः यत्तु कर्त्तृकर्म्मप्राप्तौ कर्म्मण्एवैककलीति षष्ठ्यर्थं क्रमदीश्वरस्य सूत्रं तत्तु प्रायिकं अनातृकञ्ज्जिर्न्नेत्यपरे इति तेनैव पश्चादुक्तं शब्दानामनुशासनमाचार्य्येणाचार्य्यस्येत्याद्युदाहरन्ति प्राञ्चः॥ १२४॥

रामस्य शयितं भुक्तं जल्पितं हसितं स्थितं। प्रक्रान्तञ्च मुहुः पृष्ट्वा हनूमन्तं व्यसर्ज्जयत्॥ १२५॥

रामेत्यादि। रामस्य अभिज्ञानं दत्वा शयितादिकं मुहुः जं॰म॰ पृष्ट्वा हनूमन्तं व्यसर्जयत् प्रेषितवती तस्य शयितं शयनस्थानं किं भूमौ शेते अन्यत्रेति वा भुक्तं भोजनस्थानं किं गृहे भुङ्क्ते मुनिजनगृहे वेति जल्पितं मन्त्रस्थानं किं रहसि मन्त्रयते प्रकाशे वेति हसितं हसनस्थानं किं शृंगारवस्तुनि हसति वीरवस्तुनि वेति स्थितं निवासस्थानं किं गुहायां तिष्ठत्युत तरुतले वेति प्रक्रान्तं प्रचंक्रमणस्थानं अनुनासिकेत्यादिना दीर्घः किं मध्ये क्राम्यते अन्यत्र वेति एषां शीव्यगतिप्रत्यवसानार्थत्वात् क्तोधिकरणेचेति क्तः तस्य प्रयोगे अधिकरणवाचिनश्चेति षष्ठी॥ १२५॥

भ० रामस्येत्यादि। अभिज्ञानं दत्वा रामस्य शयितादि मुहुर्म्मुहुः वारं पृष्ठा सीता हनूमन्तं व्यवर्ण्णयत् प्रेषितवती शयितं शय नस्थानं भूमिः शय्या वेति भुक्तं भोजनस्थानं स्वगृहं मुनिगृहं वेति जल्पितं मन्त्रणास्थानं रहः प्रकाशितं वा हसितं हास्यस्थानं भृत्या रवस्य वीरवस्य वा स्थितं वासस्थानं तरुतलं गृहादिकं वा प्रका न्तं चंक्रमणस्थानं अरुणं वनं वा सर्व्वंच क्तोऽधिकरणे च ध्रौव्यगत्यप्रत्यवसानार्थेभ्य इति आधारे क्तः तद्योगे कामुकपक्षार्थतक्तोदति कर्त्तरि षष्ठी यदि भा वे क्तः तदा स्वभावक्तेति षष्ठी सम्बन्धविवक्षया वा ॥ १२५ ॥

असौ दधदभिज्ञानं चिकीर्षुः कर्म्म दारुणं। गामु
कोऽप्यन्तिकं भर्त्तुर्म्मनसाचिन्तयत्क्षणं ॥ १२६ ॥

ज०म० असावित्यादि। असौ हनूमान् दधत् धारयन्नभिज्ञानं चिह्नं कर्त्तृकर्म्मणोः कृतीति षष्ठ्यां प्राप्तायां नलोकेति लप्रयोगे प्रतिषेधः लट इति शानन्नादयोऽस्ततोताः दारुणमशोकवनिका भङ्गादिकं कर्म्म चिकीर्षुः कर्त्तुमिच्छुः उकारप्रक्षेपात् षष्ठ्याः प्रति षेधः भर्त्तुः स्वामिनः अन्तिकं समीपं गामुकोऽपि गमनशीलोऽपि उकप्रयोगे प्रतिषेधः मनसा क्षणं चिन्तितवान् वक्ष्यमाणं कर्म्म ॥ १२६ ॥

भ० असावित्यादि। असौ हनूमान् अभिज्ञानं चिह्नं दधत् धार यन् दारुणं कर्म्म चिकीर्षुः कर्त्तुमिच्छुः भर्त्तुः रामस्य अन्तिकं समीपं गामुकोगमनशीलोऽपि क्षणं मनसाचिन्तयत् वक्ष्यमाणमिति शाज्यं ढघेकृतीति सूत्रे व्यादियर्जनात् न कर्म्मणि षष्ठी ॥ १२६ ॥

कृत्वा कर्म्म यथादिष्टं पूर्व्वकार्य्याविरोधि यः। करोत्यभ्यधिकं कृत्यं तमाहुर्दूतमुत्तमं॥ १२७॥

कृत्वेत्यादि। योदूतोयथोद्दिष्टं कर्म्म कार्य्यं कृत्वा अत्र कृत्वेत्यव्ययप्रयोगे प्रतिषेधः ततउत्तरकालं पूर्व्वकार्य्याविरोधि पूर्व्वकृतस्य कार्य्यस्य यदविरोधि तदधिकं करोति तमुत्तमं दूतमाहुर्विदुर्नीतिविदइति शेषः मया च यथोद्दिष्टं सीतान्वेषणं कृतमिति भावः॥ १२७॥ ज॰म

कृत्वेत्यादि। यो दूतोयथादिष्टमाज्ञानतिक्रमेण कार्य्यं कृत्वा पूर्व्वकार्य्याविरोधि अधिकं कार्य्यान्तरं करोति तमुत्तमं दूतमाहुर्नीतिविदइति शेषः तस्मात् सीतान्वेषणमादिष्टं कर्म्म कृत्वा अधिकमपि करिष्यामीत्यग्रिमश्लोके वक्ष्यति कृत्वेति व्यवर्ज्जनात् न तद्योगे षष्ठी॥ १२७॥ भ॰

वैदेहीं दृष्टवान् कर्म्म कृत्वान्यैरपि दुष्करं। यशोयास्याम्युपादाता वार्त्तामाख्यायकः प्रभोः॥ १२८॥

तदेव च दर्शयन्नाह वैदेहीत्यादि। अहमद्य तावद्वैदेहीं दृष्टवान् निष्ठाप्रयोगे प्रतिषेधः अन्यदपि कार्य्यमतिदुष्करं कृत्वा खल प्रयोगे प्रतिषेधः ततोयशउपादाता आत्मसात्कर्त्ता इदमति दुष्करं तेन कृतमिति हकनन्तस्य प्रयोगे प्रतिषेधः वार्त्तामाख्याय ज॰म॰

कः प्रभोर्वार्त्तामाख्याता स्यातिभविष्यदधिकारात्तुमण्वुलौक्रिया यामिति ण्वुल् अकेनोर्भविष्यदाधमर्ण्ययोरिति प्रतिषेधः॥ १२८॥

भ॰ वैदेहीमित्यादि। वैदेहीं दृष्टवानहं अन्यैरतिदुष्करं कर्म्म वक्ष्यमाणं वनभङ्गादि कृत्वा यत्न उपादाता उपादानशीलः सन् प्रभोः समीपे वार्त्तामाख्यायकः आख्यातुं यास्यामि क्तवतुखल र्थशीलार्थतृणां योगे षष्ठीनिषेधोदर्शितः आख्यायकइति अत्र ण्वकेत्युक्तेस्तृन्ण्वकौ घेइति विधानादन्यत्रापि ण्वकोभवतीति ख्यापि तं तेनात्र तुमर्थे ण्वकोबोध्यः किम्वा तृन्ण्वकौ घेइत्यनेनैव ण्वकः तत्र कालस्याविशेषात् सर्व्वस्मिन् काले तौ भवतइति प्राप्तं अत्र तु भविष्यत्कालोविवक्षितः आख्यायकः आख्यास्यन्नित्यर्थः क्वचि दपवादविषयेऽप्युत्सर्गोऽपि प्रवर्त्ततइति न्यायात् षष्ठीविषयेऽपि द्वितीया परे तु क्रियार्थायांभविष्यतीति सूत्रेण ण्वकं ण्वकस्तुम र्थेप्रायइति सूत्रेण षष्ठीनिषेधश्चाऊः प्रायोग्रहणात् क्वचित् षष्ठी मपि॥ १२८॥

राक्षसेन्द्रस्य संरक्ष्यं मया लव्यमिदं वनं। इति सं चिन्त्य सदृशं नन्दनस्याभनक् कपिः॥ १२९॥

।०भ॰ राक्षेत्यादि। इदं वनमशोकवनिकाख्यं राक्षसेन्द्रस्य सं रक्ष्यं रक्षार्हं अर्हेकृत्यः स्वरलोर्यत् तन्मया लव्यं लवनीयं कृत्या नां कर्त्तरिवेति षष्ठी तृतीये कर्त्तरि भवतः इत्येवं सञ्चिन्त्य कपि र्नन्दनस्य वनस्य सदृशं तुल्यं तुल्यार्थैरिति पक्षे षष्ठी अभनक्

भग्नवान् भञ्जेर्लङि खाभलोपइति नलोपे हल्ड्याब्भ्यदिलोपे अस्ते चर्त्वे च रूपं॥१२८॥

राक्षेत्यादि। इदं वनं राक्षसेन्द्रस्य संरक्ष्यं सम्यक्रक्षणार्हं भ०
मया सर्व्वं छेदनीयं इति सञ्चिन्त्य नन्दनस्य इन्द्रवनस्य सदृशं तद्वनं कपिर्हनूमान् अभनक् भग्नवान् भञ्जेर्ध्यां रुधादित्वात् श्नम् स्वभावक्तेति क्तयोगे कर्त्तरि विभाषया षष्ठी समार्थेनेति समार्थेन षष्ठी॥१२८॥

राघवाभ्यां शिवं दूतस्तयोरहमिति ब्रुवन्। हितो भनज्मि रामस्य कः किं ब्रूतेऽत्र राक्षसः॥१३०॥

राघेत्यादि। राघवाभ्यां रामलक्ष्मणाभ्यां शिवं भद्रमस्तु तयो जं०भ०
र्हनूमान् दूतो हितो रामस्य भनज्मीदं वनं एवञ्च क्रियमाणे कोभवतां मध्ये राक्षसः किं ब्रूते इत्येवं ब्रुवन् वभञ्ज पवनात्मजो रिपुवनमि॥ वक्ष्यमाणेन सम्बन्धः राघवाभ्यां शिवं हितोरामस्येति चतुर्थी चाशिष्येत्यादिना षष्ठीचतुर्थ्यौ। इति विभक्त्यधिकारः॥१३०॥

राघवाभ्यामित्यादि। हे राक्षसा राघवाभ्यां रामलक्ष्मणाभ्यां भ०
शिवं भूयादिति शेषः शक्तार्थवषडित्यादिना हितार्थत्वात् शिवशब्दयोगे चतुर्थी तत्र हि शक्तइत्यनेन शक्तार्थानां अलंप्रभुशक्तपर्य्याप्तसमर्थादीनां ग्रहणं अर्थशब्दः प्रयोजनवाची तेन प्रयोजनार्थानां ग्रहणं हितमित्यनेन हितार्थानां भद्रशोभनशिवा

दीनां कलापपर्य्यायपठितानां अन्येषाञ्च साध्वादीनां ग्रहणं हितार्थत्वेन खस्तिशब्दे गृहीतेऽपि खस्तिशब्दग्रहणं समार्थैर्न्वादिना हितार्थत्वेन प्राप्तषष्ठ्या अभावस्वर्थं अतएव खस्तिवर्ज्जं कुशलार्थैरिति विभाषया चतुर्थ्यर्थं परसूत्रं एवं सुखार्थानां सुखी त्वादीनां ग्रहणं अतएव जनाय साधुः जनिय इत्युदाहृतं रामस्य हितःसन् इदं वनं भनज्मि समार्थैनेति समन्वे हितयोगे च षष्ठी एवं क्रियमाणे अत्र कर्म्मणि कोराक्षसः किं ब्रूते इति ब्रुवन् पवनात्मजो रिपुवनं बभञ्जेत्यग्रिमश्लोकेनान्वयः॥१३०॥

विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं कुसुमनिपातविचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनं। शकुननिनादनादितककुब्विलोलविपलायमानहरिणं हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजोरिपुवनं॥१३१॥

॥इति भट्टिकाव्येऽष्टमः सर्गः॥८॥

ज०म० विलित्यादि। कीदृशं बभञ्ज विलुलितानां पुष्पाणां रेणुभिः कपिशं पिङ्गं प्रशान्ताश्चवसन्नाः कलिकाः पलाशानि पत्राणि कुसुमानि च यत्र कुसुमानां निपातेन विचित्रा वसुधा यत्र सशब्दैर्निपतद्भिर्द्रुमैरुत्का उन्मनसः शकुनायत्र शकुनानां पलाय मानानां निनादेन नादिताः सञ्जातनादाः ककुभोदिशो यत्र विलोलाव्याकुलाविपलायमानाहरिणायत्र हरिणस्येव लोचने

यस्याः सीतायाः तस्याम्रधिवसतिं निवार्य । इत्यनभिहिता धिकारः ॥ १३१ ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायां अधिकारकाण्डे तृतीयः परिच्छेदः काव्यस्याशोकवनिकाभङ्गोनामाष्टमः सर्गः ॥

विलुलितेत्यादि । पवनात्मजोरिपुवनं बभञ्ज कीदृशं विलु भ०
लितानां विघटितानां पुष्पाणां रेणुभिः कपिशं पिङ्गलं प्रशान्तानि अवसन्नानि कलिकाः पत्राणि पुष्पाणि च यत्र कुसुमानां निपा तेन विचित्रा वसुधा यत्र सशब्दैः सशब्दं वा निपतद्भिर्द्रुमैरुत्का: स्थानान्तरं गन्तुमुन्मनसः शकुनाः पक्षिणोयत्र शकुनानां पला यमानानां निनादेन नादिताः संजातनादाः शब्दायमानीकृतावा ककुभोदिशोयत्र विलोलाव्याकुलाः सन्तोविपलायमानाहरि णायत्र हरिणस्येव विलोचने यस्याः सीतायास्तद्धिवसतिं तन्नि वासस्थानं ॥ १३१ ॥

इति सद्वैद्यहरिहरस्यानवंशसम्भवगौराङ्गमल्लीकात्मजश्रीभ रतसेनकृतायां मुग्धबोधिन्यां भट्टिटीकायामधिकारकाण्डेऽष्ट मः सर्गः ॥

अथ प्रकीर्णकाः।

द्रुभङ्गध्वनिसंविग्नाः कुवत्यक्षिकुलाकुलाः । अका र्षुः क्षणदाचर्योरावणस्य निवेदनं ॥ १ ॥

अथान्तरे प्रकीर्णकश्लोकानाह द्रुभङ्गेत्यादि । क्षणदाचर्यो ज०भ०
निशाचर्यः चरेष्टः रावणस्य निवेदनमकार्षुः ज्ञातवत्यः वक्ष्यमा

यप्रकारेण द्रुभङ्गध्वनिसम्मिश्राः शाखाभङ्गशब्देन सन्त्रस्ताः ओ विजीभयचलनयोः ओदितश्चेति निष्ठानत्वं नुवत्पक्षिकुलाः कूजद्भिः पक्षिकुलैः व्यस्तमानसाः गुशब्दे तौदादिकस्यास्य उवङादेशः ॥ १ ॥

भ० द्रुभङ्गेत्यादि। सीतासन्निधिस्थाः चण्डादासर्यो राचसो रावणस्य निवेदनं वच्यमाणं अकार्षुः कृतवत्यः कुञ्जिष्टौ अनुबन्धिदेरित्युस् कीदृश्यः द्रूणां वृक्षाणां भङ्गशब्दैः संत्रस्ताः त्रिजकीभीभीकम्पे ओदित्वात् नास्य नः कुवद्भिः शब्दायमानैः पक्षिणां कुलैः समूहैराकुलाव्यस्तचित्ताः कुकशब्देकुलचेत्यादादिकात् शतृः कुशब्दे भौवादिकइति जयमङ्गलायां प्रमादस्तस्यात्मनेपदित्वात् शपो गुणित्वाच्च कूजत्पक्षिकुलाकुलाइति क्वचित् पाठः ॥ १ ॥

यदतापीच्छनैर्भानुर्यत्रावासीन्मितं मरुत्।
यदाप्यानं हिमोस्रेण भनक्त्युपवनं कपिः॥ २॥

ज०म० यदित्यादि। यद्वनं भानुः शनैर्मन्दमतापीत्तपति स्म वृक्षलचणा वृद्धिः मरुत् मितं स्तोकमवासीत् वाति स्म हिमोस्रेण शिशिररश्मिना आप्यानं वृद्धिं नीतं प्यायतेर्लोपोव्योर्वलीति यलोपः ओदित्वान्नत्वं तदुपवनं कपिर्भिनक्ति चूर्णयतीति निवेदनमकार्षुः ॥ २ ॥

भ० यदित्यादि। निवेदनमाह यदुपवनं भानुः शनैर्मन्दं यथा तापीत् तपति स्म अजवदेति सिः अनिमत्वात् यत्रोपवने वायुर्मित

मत्वं अवासीत् वाति स्म यमरमेति इमन्तो यदुपवनं हिमांशोस्तेष चन्द्रेण आप्यानं वृद्धं ओप्यायोऽवृद्धौ कर्त्तरि क्तः ध्वोर्लोप इति यलोपः किरणोस्रमयूखांशुगभस्तिघृणिघृष्णयइत्यमरः तदुपवनं कपिर्भनक्ति इति निवेदनमकार्षुरिति पूर्व्वेण सम्बन्धः ॥ २ ॥

ततोऽशीतिसहस्राणि किङ्कराणां समादिशत्।
इन्द्रजित्सूर्विनाशाय मारुतेः क्रोधमूर्च्छितः ॥ ३ ॥

ततइत्यादि। निवेदनानन्तरमिन्द्रजित्सूः रावणः इन्द्रजितं सूतइति सत्सुद्विषेत्यादिनानुपसर्गे क्विप् मारुतेर्हनूमतोविनाशाय अशीतिसहस्राणि समादिशत् समादिष्टवान् किंकराणां किं कुर्व्वन्ति दिवाविभेत्यादिना टच् क्रोधमूर्च्छितः क्रोधोद्भूतः मूर्च्छः समुच्छ्राये वर्त्तमानत्वात् ॥ ३ ॥ जं॰म॰

ततइत्यादि। ततोऽनन्तरमिन्द्रजित्सूरावणः क्रोधेन मूर्च्छितः संजातमूर्च्छः सन् मारुतेर्हनूमतोविनाशाय किङ्कराणां अशीतिसहस्राणि समादिशत् आज्ञापयत् इन्द्रजितं सूते इति क्विप् ॥ ३ ॥ भ॰

शक्त्यृष्टिपरिघप्रासगदामुद्गरपाणयः। व्यश्नुवाना दिशः प्रापुर्वनं दृष्टिविषोपमाः ॥ ४ ॥

शक्तीत्यादि। ते किङ्करावनं प्रापुः प्राप्तवन्तः शक्त्यादयः प्रहरणविशेषाः पाणौ येषामिति प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ जं॰म॰

भवतः व्यसुवामाः द्विशोव्याप्नुवन्तः अप्रूख्याप्तौ सौवाहिकः दृष्टि विषोपमाः भुजङ्गवत् दृश्यैव विनाशयन्तदृत्यर्थः ॥ ४ ॥

म॰ अस्त्रीत्यादि। अस्त्रादयः पाणौ येषां ते किङ्करा वर्ग आपुः द्विशो व्यसुवामाव्याप्नुवन्तः अप्रूक्व्याप्तिसंहत्योः दृष्टिविषैः सर्प विशेषैरुपमा येषां दृष्टिर्दर्शनं विषोपमा विषमिव येषामिति वा ॥ ४ ॥

दध्वान मेघवद्भीममादाय परिघं कपिः। नेदुर्दीप्ता युधास्तेऽपि तडित्वन्तद्वाम्बुदाः ॥ ५ ॥

ज॰म॰ दध्वेत्यादि। कपिर्भीमं परिघं भयानकमर्गलमादाय मेघ वद्दध्वान ध्वनति स्म तेऽपि किङ्कराः तडित्वन्तद्वाम्बुदाः नेदुः नदन्ति स्म किङ्कराणां दृश्यत्वात् मेघैः साहश्यं आयुधानाञ्च तडितेति ॥ ५ ॥

भ॰ दध्वानेत्यादि। कपिर्हनूमान् भीमं भयानकं परिघं लौह वन्मुद्गरमादाय गृहीत्वा मेघद्व दध्वान ध्वनशब्दे तेऽपि दीप्त प्रहरणाराक्षसास्तडिद्युक्तामेघाद्व नेदुः शब्दितवन्तः ॥ ५ ॥

कपिनाम्भोधिधीरेण समगंसत राक्षसाः। वर्षा स्वद्भुततोयौघाः समुद्रेणेव सिन्धवः ॥ ६ ॥

ज॰म॰ कपीत्यादि। कपिना अम्भोधिधीरेण चोभ्यत्वात् राक्षसाः समगंसत सङ्गताः समोगमीत्यादिना तङ् लुङ् यथा सिन्धवो नद्यः उद्भुततोयौघाः उद्रिक्तजलपूराः समुद्रेण सङ्गच्छन्ते ॥ ६ ॥

कपिनेत्यादि। ते राघवाः समुद्रवल्लीरेण कपिना समगं भ०
सत मिलितावभूवुः समोगच्छेति मं मान्तोऽदगतइत्यतादेशः
यथा वर्षास्तुद्भूतजलपूराः सिन्धवोनद्यः समुद्रेण सङ्गतामवन्ति
॥ ६ ॥

लाङ्गूलमुद्धतं धुन्वन्नुद्वहन् परिघं गुरुं। तस्थौ तोर
णमारुह्य पूर्वं न प्रजहार सः ॥ ७ ॥

॥ एते प्रकीर्णकाः ॥

लाङ्गूलेत्यादि। सहनूमान् लाङ्गूलं पुच्छमुद्धतं उत्क्षिप्तं ज०म०
धून्वन् धूञ्कम्पनइति स्वादौ पठितः परिघं गुरुं उद्वहन् तोर
णमारुह्य तस्थौ न तु पूर्वं प्रजहार प्रहृतवान् शूराणां पश्चात्
प्रहारित्वात् ॥ ७ ॥

एते प्रकीर्णकाः।

लाङ्गूलेत्यादि। सहनूमान् तोरणं बहिर्द्वारमारुह्य उद्धत भ०
मुत्क्षिप्तं लाङ्गूलं धुन्वन् कम्पयन् गुरुं परिघं उद्वहन् धारयन्
तस्थौ पूर्वं न प्रजहार शूराणां पश्चात्प्रहारित्वात् ॥ ७ ॥

एतेप्रकीर्णकाः।

॥ सिचि वृद्ध्यधिकारमाह ॥

अचारिषुः शराम्भांसि तस्मिन्वक्षःपयोधराः। न
हालीन्न चाग्राजीत्त्रासं कपिमहीधरः ॥ ८ ॥

ज॰म॰ इतःपरं सिचि वृद्धिमधिकृत्याह अचेत्यादि। तस्मिन्वने रक्षः पयोधराः रक्षांसि पयोधराइव शराम्भांसि शरान् अम्भांसी व अचारिषुः चरितवन्तः चरतिरकर्मकः चरेत् चुतवृत्तिरि त्यादिप्रयोगेषु दृश्यते इह तु सकर्मकोविवक्षितः कपिर्महीधर इव न चाक्षालीत् न चलितवान् द्वयोरप्यतोहलादेर्लघोरिति विकल्पे प्राप्ते अतोलान्तस्येति सिचि वृद्धिः नाग्राजीत् त्रासं भय स्य न जगाम महीधरतुल्यत्वात् नेटीति प्रतिषेधस्यातोहलादेर्ल घोरिति विकल्पिते वदव्रजेत्यादिना वृद्धिः॥ ८॥

भ॰ अथ सिचि वृद्ध्यधिकारः स्यमते सिच् सिः। अचेत्यादि। तस्मिन् कपौ रक्षांसि पयोधराइव शरानम्भांसीव अचारिषुः क्षिप्तवन्तः किन्तु कपिर्महीधरइव न च, अक्षालीत् नैव चलित वान् न च त्रासमग्राजीत् प्राप्तवान् चर्ज्जसञ्चलने क्रसञ्चल चाले व्रजगतौ सर्व्वच स्यांसिः व्रजवदेति व्रिः॥ ८॥

अवादीत्तिष्ठतेत्युच्चैः प्रादेवीत्परिघं कपिः। तथा यथा रणे प्राणान् बहूनामग्रहीद्द्विषां॥ ९॥

ज॰म॰ अवेत्यादि। ततउत्तरकालं कपिस्तिष्ठत मा पलायध्वमिति उच्चैस्तानवादीत् पूर्व्ववद्वृद्धिः तथा तेन प्रकारेण परिघं परिघेण प्रादेवीत् विजिगीषते स्म दिवःकर्मचेति परिघस्य कर्मसंज्ञा दिवे र्नेटीति वृद्धिप्रतिषेधः यथा बहूनां द्विषां शत्रूणां प्राणानग्रहीत् निगृहीतवान् अतोहलादेरिति विकल्पे प्राप्ते ह्यन्तक्षणश्वसइति प्रतिषेधः॥ ९॥

अवादीदित्यादि। अतः परं यूयं तिष्ठत मा पलायध्वमि भ०
त्युच्चैर्महता ध्वनिना कपिरवादीत् उक्तवान् पूर्ववद्वृद्धिः परिषेण
तथा तेन प्रकारेण प्रादेवीत् क्रीडति स्म जेतुमैच्छद्वा दिव्युजिगी
षेच्छापणिद्युतौ क्रीडागत्योः टी षुर्घूङ्दति षुः दिवोधेवेति करणे
द्वितीया यथा रणे बहूनां शत्रूणां प्राणान् अग्रहीत् अपहृतवान्
ह्मयादेः सेमदति हान्तवर्ज्जनान्न वृद्धिः ॥ ९ ॥

अर्णैरवमिषूरक्तं द्वैस्वैः प्रौर्णाविषुर्भुवं। दिशः प्रौर्ण्ण
विषुश्चान्ये यातुधानाभवद्भियः ॥ १० ॥

अर्णैरित्यादि। यातुधानाराक्षसाश्चर्णैः प्रहारमार्गैः रक्तं शो ज०म०
णितमवमिषुः वमन्ति स्म ह्म्यन्तेति वृद्धिप्रतिषेधः द्वैस्वैर्भुवं प्रौर्णा
विषुः छादितवन्तः अन्ये यातुधानाःभवद्भियःभवन्तीभीर्येषामिति
भयात्पलायमानाः दिशः प्रौर्णविषुः छादितवन्तः ऊर्णोतेर्विभा
षेति विकल्पः ऊर्णोर्विभाषेर्णोरित्यङित्त्वपक्षे द्रष्टव्यः ङित्त्वे गुण
वृद्धिप्रतिषेधात् ॥ १० ॥

अर्णैरित्यादि। यातुधानाश्चर्णैः प्रहारमार्गैरक्तं अवमिषुः भ०
वमन्ति स्म पूर्ववद्धान्तवर्ज्जनान्न वृद्धिः द्वैस्वैर्भुवं प्रौर्णाविषुः आच्छा
दितवन्तः भवन्ती विद्यमाना भीर्भयं येषां तेऽन्ये यातुधानादिशः
प्रौर्णविषुः पलायन्ते स्मेत्यर्थः ऊर्णुञ्आच्छादने पूर्वत्रिश्वामिति
वृद्धिरावादेशश्च ॥ १० ॥

अक्काणिषुश्च्युतोत्साहाभिन्नदेहाः प्रियासवः। कपे रत्रासिषुर्नादान्मृगाः सिंहध्वनेरिव ॥ ११ ॥

॥ इति सिचि वृद्ध्यधिकारः ॥

ज०म० अरेत्यादि। च्युतोत्साहाः निरुत्साहाः अरारिषुः स्मृताः स्म इतिं अब्धितवन्तः यतः प्रियासवः प्रियप्राणाः कपेः सम्भिनो नादादत्रासिषुः त्रस्ताः उभयत्रापि नेटीति प्रतिषिद्धोऽतोहला देरिति विकल्पः। इति सिचि वृद्ध्यधिकारः ॥ ११ ॥

भ० अक्केत्यादि। प्रिया असवः प्राणा येषां ते यातुधाना भिन्नदेहा विदीर्णशरीराभूत्वा निरुत्साहानिस्पृहाः सन्तः अक्काणिषुः स्मृताः स्म इति अब्धितवन्तः कणशब्दे ह्मयादेःशेमइति पक्षे श्रिः कपे नौदात् अत्रासिषुः त्रस्ताः पूर्व्ववत्पक्षे श्रिः यथा सिंहस्य ध्वनेर्म्मृगा स्त्रस्यन्ति। इति सिचि वृद्ध्यधिकारः ॥ ११ ॥

मायानामीश्वरास्तेऽपि शस्त्रहस्तारथैः कपिं। प्रत्या ववृतिरे हन्तुं हन्तव्यामारुतेः पुनः ॥ १२ ॥

ज०म० इतइट्प्रतिषेधमधिकृत्याह मायेत्यादि। अथानन्तर राक्षसाये दिशोगताः ते कपिं हन्तुं पुनः प्रत्याववृतिरे प्रति निवृत्ताः मायानामीश्वराः प्रभवः सेधेति वरच् नेड्वशिकृतीति नेट् आर्द्धधातुकेत्यादिना प्राप्तत्वात् रथैश्च गताः सन्तः शस्त्र हस्ताः शस्त्राणि हस्तेषु येषामिति हनिकुषीत्यादिना रमेरोणा

हिकः क्यन् एधाः अमिचमीत्यादिना अधेरौणादिकमन् हसिम्
मचेत्यादिना हवेस्तन् तयोस्तिग्रचेत्यादिना इट्प्रतिषेधः हन्त
व्या मारुते रिति हनूमतो वधार्हः क्रत्यानां कर्त्तरिवेति षष्ठी एका
च इत्यादिना इट्प्रतिषेधः हन्तेर्नमान्तेष्वनिट्त्वात् ॥ १२ ॥

इतइट्प्रतिषेधाधिकारः मायानामित्यादि। अथानन्तरं भ॰
ये द्विषः प्रौर्णविषुः ते कपिं हन्तुं एधैः पुनः प्रत्यावत्तिरे प्रत्या
गताः प्रतिनिवृत्ता हनतो गतो वधे वसोरस्मैमनौदितइति औादि
इर्जमादनिम् कोदृशास्ते मायानामीश्वराः प्रभवः याचायभास
कसइति वरः इवचनतेरिति मेम् अस्त्रं हस्ते येषां ते तथा अस्यते
हन्यतेऽनेनेति अस्त्रं अमवधे चासुविति चः पूर्व्ववक्षेम् मारुतेर्हनू
मतोहन्तव्याः हन्तुं अक्याः स्वभावेति पचे कर्त्तरि षष्ठी ॥ १२ ॥

तांश्चेतव्यान् चितौ श्रित्वा वानरस्तोरणं युतान्।
जघानाधूय परिघं विजिघृक्षून् समागतान् ॥ १३ ॥

तांश्चेतेत्यादि। समुदिताएकस्यामेव वेलायां मया हन्तव्या जं॰म॰
इति वानरस्तोरणमाश्रितवान् सतोरणं श्रित्वा तान् राक्षसान्
विजिघृक्षून् विगृहीतुमिच्छून् युतान् समुदितान् समागतान् ढौकि
तान् चितौ पृथिव्यां चेतव्यान् पुञ्जीकर्त्तव्यान् जघान हतवान् परि
घमाधूय परिभ्राम्य तत्र चेतव्यानिति एकाचइतीट्प्रतिषेधः
चिताविति क्षिषक्षौ चर्षयायामिति क्षिप् तितुचेत्यादिना इट्
प्रतिषेधः श्रित्वा युतानिति श्युकः किनीट्प्रतिषेधः विजिघृक्षूनिति

सनियमइगुहोरखेति तच इदविदेति सनः किलं यहित्रोति संप्रसा रणं ठलकमसलानि॥१३॥

भ० तामित्यादि। तोरणं शित्वा परिघमवधूय परिभ्राम्य वानरस्तान् राघवान् जघान कीदृशान् चितौ चेतव्यान् पुञ्जीकर्त्तव्यान् युतान् एकीभूतान् विजिघृचून् विग्रहं कर्त्तुमिच्छून् समागतान् मिलितान् चिञ्सव्यः नेमेकाजादित्यादिना इमनिषेधः इदुश्रिस्रूर्णोरिति श्रियुभ्यां नेम् नेमुगुहयइदति यहेः सनि नेम् गमेरोदित्वान्नेम्॥१३॥

संजुघुक्षव आयूंषि ततः प्रतिरुरूषवः। रावणान्तिकमाजग्मुर्हतशेषा निशाचराः॥१४॥

ज०म० संजित्यादि। ततउत्तरकालं ये हतशेषानिशाचराः ते संजुघुक्षव आयूंषि जीवितानि गोपितुमिच्छवः गुहेः पूर्ववत्प्रतिषेधः रावणान्तिकमाजग्मुः आगताः प्रतिरुरूषवः वक्ष्यमाणमर्थं कथयितुमिच्छवः अत्रापि पूर्ववत्प्रतिषेधः तत्र चकारेणेगन्तानां सनि समुचितत्वात्॥१४॥

भ० समित्यादि। ततोऽनन्तरं हतशेषानिशाचरारावणस्य समीपमासेदुः समाजग्मुः कीदृशाः आयूंषि जीवितानि गोपायितुमिच्छवः गुहञ्संवृतौ सन् नेमुगुहयइदति नेम् प्रतिरुरूषवः वक्ष्यमाणं कथयितुमिच्छवः रुशब्दे पूर्ववन्नेम्॥१४॥

एकैनं वहवः शूराः साविष्काराः प्रमत्तवत्। वैमुख्यञ्चक्रमेत्युच्चैरूचुर्दशमुखान्तिके॥१५॥

एकेनेत्यादि। वयं बहवः शूराः साविष्काराः साहंकाराश्च अपि सन्तः एकेनापि कपिना हेतुभूतेन वैमुख्यं चक्रम पराङ्मुखत्वम नुष्ठितवन्तः प्रमत्तवत् मद्यपानमत्ताइव एवञ्च चित्तव्याक्षेपा दुत्तमपुरुषे लिटि क्रते कसृइत्यादिना इट्प्रतिषेधोनियमित इति एवं दशमुखान्तिके ऊचुः॥ १५॥ ज०म०

एकेनेत्यादि। एकेन कपिना हेतुना बहवोऽपि समर्थाश्च अपि प्र मत्ताइव साहङ्काराश्च अपि वैमुख्यं विमुखतां चक्रम विमुखाभवा मः स्मेत्यर्थात् इति ते हतशेषानिशाचरारावणस्य समीपे ऊचुः नेमसुमिति नेम् परमते अस्मदि वाच्ये चित्तविक्षेपार्थे टी तदर्थ सूचनाय प्रमत्तवदित्युक्तं मद्यपानां हि चित्तविक्षेपः सम्भवत्येव स्वमते सर्व्वत्र टी दुर्निवारा॥ १५॥ भ०

मांसोपभोगसंशूनानुद्विग्नांस्तानवेत्य सः। उद्वृत्त नयनोमित्रान्मन्त्रिणः स्वान् व्यसर्ज्जयत्॥ १६॥

मांसेत्यादि। स दशमुखस्तानुद्विग्नान् भीतानवेत्य ज्ञात्वा स्वा नात्मीयान् मन्त्रिणोव्यसर्जयत् प्राहिणोत् कीदृशांस्तान् मांसोप भोगसंशूनान् मांसोपभोगेन स्थूलवर्ष्मणः उभयथापि श्वीदितो निष्ठायामितीट्प्रतिषेधः तत्र श्वयतेर्यजादित्वात्संप्रसारणं हल इति संप्रसारणस्य दीर्घः इयोरद्योदित्वान्निष्ठानत्वं उद्वृत्तनय नोरोषात् निष्क्रान्ततारकः यस्यविभाषेतीट्प्रतिषेधः वृते इदित्वात् मित्राम् स्निग्धान् मन्त्रिणः आदितश्चेतीट्प्रतिषेधः रदाभ्यामिति निष्ठानत्वं॥ १६॥ ज०म०

भ० मांसेत्यादि। तान् राक्षसान् उद्दिग्नान् त्रस्तान् प्रवेत्य ज्ञात्वा सरावणेमन्त्रिणोव्यसर्ज्जयत् कीदृशान् मांसोपभोगेन संभूतान् स्थूलान् मित्तान् स्निग्धान् सकोदृशः उद्वृत्तनयनः उद्घूर्णितनेत्रः क्रोधवशात् ह्लायोन्भीर्गतिष्क्र्यो: नेमडोष्मीदिति नेम् यश्आदित्वात् यहस्वपायोरिति जिः जिर्योऽन्यःसूत्त्वायोदिति श्रोदित्वात् क्तस्य नः बिजड्गोशोभीकम्पे ईदित्वात् पूर्ब्ववन्नेम् हृतुळ्वुवर्त्तने पूज्ञिमुदितइत्यनेन वेमत्वात् पुर्ब्ववन्नेम् इर्मिंधात्तु मिदाञिळुचइति चकारात् स्नेहने श्रादितइति नेम् ॥ १६ ॥

प्रमेदिताः सपुत्रास्ते सुस्नान्तावाढविक्रमाः। श्रश्लिष्टनादानिरगुः फाण्टचित्रास्त्रपाणयः ॥ १७ ॥

ज०म० प्रमइत्यादि। ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुः निर्गताः इणोगालुंकि प्रमेदिताः स्निग्धीभवितुमारब्धाः 'श्रादिकर्मणि निष्ठा ततोविभाषाभावादिकर्म्मणोरिति प्रतिषेधः इट्पक्षे निष्ठाशीङ्त्यादिना कित्त्वप्रतिषेधात् गुणः सुस्नान्ताः स्वामिनि क्लान्तमनसः वाढविक्रमाः भृशपराक्रमाः श्रश्लिष्टनादाः विध्यष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः यदशृतपिष्टं कषायं उदकसम्पर्कमात्रादभिव्यक्तरसं ईषदुष्णं तदल्पप्रयाससाध्यत्वात् श्रनायाससाध्यं फाण्टमित्युच्यते तेन चित्राणि रञ्जितानि श्रस्त्राणि पाणौ येषामिति स्नान्तादयः क्षुभ्नेत्यादिना निपातिताः॥ १७॥

भ० प्रमेइत्यादि। ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुर्निर्गतवन्तः इणश्चां रूपं कीदृशाः प्रमेदिताः वहिर्गमनसमये भार्य्यादीन्

प्रति स्वेदं कर्त्तुमारब्धवन्तः राजप्रसादात् स्निग्धाभवितुमारब्धा विविधोपभोगेन प्रीताभवितुमारब्धावा भावादिर्ढवेति पचे दूम् सुखान्ताः शोभनमनसः वाढविक्रमाः भृशपराक्रमाः अविस्पष्ट नादाः निस्पष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः फाण्डेन कषायभेदेन चित्राणि अस्त्राणि पाणौ येषां ते तथा क्षुब्धवाढेत्यादिना स्वनवाद्धसेच्छकिफणां स्वान्तवाढविस्पष्टफाण्टा निपातिताः पुनातीति पुत्रः प्रादिःसद्त्यस्य योगविभागेन ह्रस्वत्वान्न गुणः इषत्तर्तेरिति नेम्॥ १७॥

तान् दृष्ट्वातिदृढान्धृष्टान् प्राप्तान् परिवृढाज्ञया।
कष्टं विनर्द्दतः क्रूरान् शस्त्रघुष्टकरान् कपिः॥ १८॥

तानित्यादि। तान् दृष्ट्वा कपिः आर्द्दिदर्दिति वक्ष्यमाणेन सम्बन्धः किंभूतान् धृष्टान् धृष्णोतीति धृष्टः धृषीशसीवैयात्य इतीट् प्रतिषेधः अतिदृढान् बलवतः दृढस्थूलबलयोरिति निपातनं परिवृढाज्ञया परिवृढस्य प्रभोराज्ञया प्राप्तान् प्रभौ परिवृढ इति निपातनं कष्टं विनर्दतः कष्टं ध्वनतः गम्भीररवम् कष्टगहनयोः कषइतीट्प्रतिषेधः क्रूरान् हिंस्रान् शस्त्रघुष्टकरान् घुषिरविशब्दन इतीट्प्रतिषेधः॥ १८॥ ज०म०

तानित्यादि। कपिर्हनूमान् तान् राघवान् दृष्ट्वा द्रुतं आर्द्दिदर्दित्यपिमश्लोकेनान्वयः कीदृशान् अतिदृढान् बलवत्तरान् धृष्टान् प्रगल्भान् परिवृढस्य प्रभोराज्ञया प्राप्तान् कष्टं कष्टं शो भ०

अदुःखदं विनर्द्दतः शब्दायमानान् क्रूरान् हिंस्रान् शस्त्रैर्घुष्टोऽघो षणां प्राप्तः सततधारणाद्दृष्टोवा करोयेषां तान् पूर्व्ववत् इह दृषदृहकषघुषांते निपातः॥ १८॥

अव्यर्णोगिरिकूटाभानभ्यर्णानार्द्दिदत् द्रुतं। वृत्तश स्त्रान्महारम्भानदान्तांस्त्रिदशैरपि॥ १९॥ युग्मकं॥

०म० अव्यद्रत्यादि। अव्यर्णोऽपीडितः अर्द्देःसंनिविण्णद्रतीट्प्रति षेधः गिरिकूटाभान् महागिरिसदृशप्रमाणान् अभ्यर्णानविदू रान् अभेश्चाविदूर्ये इतीट्प्रतिषेधः द्रुतमार्द्दिदत् हिंसितवान् अर्द्देः स्वार्थिकणन्तस्य लुङि रूपं वृतशस्त्रोऽधीतशस्त्रविद्यः णेरध्य यने वृत्तमिति इडभावोणिलुक निपात्यते महारम्भान् असल्पव्या पारान् त्रिदशैरप्यदान्तान् असमितान् वादान्तेत्यादिना इड भावोणिलुक निपात्यते॥ १९॥

भ० अव्यर्णद्रत्यादि। गिरिकूटाभान् पर्व्वतशृङ्गसदृशान् अभ्यर्णान् समीपगतान् वृत्तशस्त्रान् अधीतशस्त्रविद्यान् महारम्भान् उत व्यूहत्वात् त्रिदशैर्देवैरपि अदान्तान् अदमितान् कपिः कीदृशः अव्यर्णः अपीडितः अर्द्देः क्ते नेमसन्निविण्णर्द्दइति नेम् क्षुब्धवाढेत्या दिना सामीप्ये अभिपूर्व्वादर्द्देर्व्यन्तइतीरध्ययने च निपातितः व्यन्तदमेर्दान्तशान्तेत्यादिना निपातः॥ १९॥

दमितारिः प्रशान्तौजा नादापूरितदिङ्मुखः। जघान रुषितो हृष्टांस्त्वरितस्तूर्णमागतान्॥ २०॥

दमीत्यादि। ये तु प्रशान्तौजसः शमितबलाः सन्तो हृष्टाः तूर्णमागताः तान् कपिर्जघान व्यापादितवान् प्रतापाद्दान्यन्तो ऽर्थोदमिताऽयेन दमितारिः प्रशान्तं शत्रूणामोजोयेन सप्रशान्तौजाः नादापूरितदिङ्मुखः तस्य हृष्टत्वात् रुषितः क्रुद्धः त्वरितः ससम्भ्रमः अत्र दमितप्रशमितपूरिताः णन्ताः वादान्तेत्यादिना विकल्पितेटः हृष्टरुषितत्वरिताः रुष्यमत्वरेत्यादिना॥ २०॥ ज॰म॰

दमीत्यादि। कपिस्तूर्णं शीघ्रं आगतान् राक्षसान् त्वरितः सन् जघान कीदृशः दमिताउपशमिताश्चरयः शत्रवोयेन स तथा नादैरापूरितं दिङ्मुखं येन रुषितः क्रुद्धः कीदृशान् प्रशान्तौर्जान् उपशमितबलान् हृष्टान् क्रुद्धान् ज्यन्तशमेः क्तद्रम् लोपोऽनेरिति णिलोपः ज्यन्तदमेर्दान्तशान्तेत्यादिना निपातः रुषत्वरिभ्यां क्तस्य वादषामित्यादिना विभाषितइम् त्वरेरनिम्पक्षे श्रिवावमवेत्यादिना ऊट्॥ २०॥ भ॰

तेषां निहन्यमानानां संघुष्टैः कर्णभेदिभिः। अभूदभ्यमितं चासमास्वान्ताशेषदिग्जगत्॥ २१॥

तेषामित्यादि। तेषां रक्षसां निहन्यमानानां सङ्घुष्टैः शब्दैः कर्णभेदिभिः वाधिर्य्यकरैः अभ्यमितञ्चार्त्त अभिगतञ्चार्त्त जगद्भूत ज॰म॰

त्यक्षाः अशेषादिशोऽखिलं जगति संघुष्टाभ्यमिताक्षान्तः इत्यमन्तरेति विकल्पितेट॥ २१॥

भ० तेषामित्यादि। हनूमता निहन्यमानानां तेषां राक्षसानां संघुष्टैः शब्दैः जगत् भुवनं अभ्यमितत्रासं प्राप्तभयं अभूत् कीदृशैः कर्णभेदिभिः श्रोत्रविदारिभिः कीदृशं अशान्ताः अशब्दिता अशेषादिशोऽस्य तत्तथा संपूर्ण्णचतुरश्रम् आङ्पूर्व्वस्तनाश्च वाऽस्यामित्यादिना क्तवलोर्वेमनं॥ २१॥

भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः। क्षणेन क्षीणविक्रान्ताः कपिनानेषत क्षयं॥ २२॥

इतीट्प्रतिषेधाधिकारः॥

ज०म० भयमित्यादि। ततस्ते राक्षसाः कपिना क्षणेन क्षयं विनाशमनेषत नीताः कर्म्मणि लुङ् भयसंहृष्टरोमाणः भयोद्गतरोमाञ्चाः हृषेर्लोमस्विति विभाषितेट् अपचितद्विषः अपचितानां पूजितानां द्वेषीणां शत्रवः अपचितश्चेति निपातः क्षीणविक्रान्ताः क्षीणं विक्रान्तं पराक्रमो येषां क्षियोदीर्घादिति निष्ठातकारस्य नः॥ २२॥

भ० भयेत्यादि। ततोऽनन्तरं कपिना ते राक्षसाः क्षणेन क्षयं अनेषत प्रापिताः कर्म्मणि टी णुर्युक्इति णुः मान्तोऽदन्तइत्यदादेशः न्यादिज्यन्ताद्गत्यर्था इति मुख्यकर्म्मोक्तं कीदृशाः भयेन संहृष्टानि उद्गतानि रोमाणि येषां वा हृषामहृषेति वेम् अपचितानां पूजितानां मुन्यादीनां द्विषः शत्रवः नेनेकाजिति नेम् क्षीणं विक्रान्तं

पराक्रमोऽयेषां घेः पूर्ववन्नेम् येर्थोडेरिति दीर्घत्वे हलाद्योरित्यादि ना क्रम गः क्रमुगतावित्यस्य पञ्चिमुदित इत्यनेन वेमूलात् नेम् डीश्वीदिति नेम् अमुञ्ज्मस्खणाविति घेः। इतीट्प्रतिषेधाधिकारः ॥ २२ ॥

हत्वा रक्षांसि लवितुमक्रमीन्मारुतिः पुनः। अशोकवनिकामेव निगृहीतारिशासनः ॥ २३ ॥

इतःप्रभृतीटमधिकृत्याह हत्वेत्यादि। रक्षांसि हत्वा मारुतिरशोकवनिकामेव पुनर्लवितुं छेत्तुं आर्द्धधातुकस्येट् अक्रमीत् गतवान् स्नुक्रमोरनात्मनेपदनिमित्त इतीट् निगृहीतारिशासनः ध्वस्तारिव्यवस्थः ग्रहोलिटि दीर्घ इतीटो दीर्घत्वं ॥ २३ ॥ ज०म०

अथेडधिकारः। हत्वेत्यादि। रक्षांसि हत्वा निगृहीतरावणाशासनो मारुतिर्हनूमान् पुनरप्यशोकवनिकामेव लवितुं छेत्तुं अक्रमीत् जगाम लूञ्छिदि वधोरक्षेतीम् क्रमेष्टौ स्नुक्रमोऽम इति इम् मान्तवर्ज्जनात् हयादेःसेम इति न श्रिः ग्रहेरिमोर्घत्वं ॥ २३ ॥ भ०

आवरीतुमिवाकाशं वरितुं वीनिवोत्थितं। वनं प्रभञ्जनसुतो नादयिष्ट विनाशयन् ॥ २४ ॥

आवेत्यादि। प्रभञ्जनसुतो हनूमान् वनमशोकवनिकाख्यं विनाशयन् नादयिष्ट इव्यां न कृतवान् लुङि रूपं आकाशमावरीतुमिव अवष्टब्धमिवोत्थितं वनं वीन् पक्षिणो वरितुं प्रार्थयितु ज०म०

मिवोत्थितं आगष्ठत नान्यच धात इत्येव फलवृद्धिं प्राप्यर्येति आवरीतुं वरितुमिति वृतोवेति विकल्पेनेटोदीर्घत्वं ॥ २४ ॥

भ० आवेत्यादि। प्रभञ्जनसुतोहनूमान् वनं विनाशयन् न अद यिष्ट दयां न कृतवान् कीदृशं आकाशं आवरीतुं आच्छादयितु मिव वीन् पक्षिणो वरितुं प्रार्थयितुमिव उत्थितं अत्युच्चलात् उच्चलोत्प्रेक्षा नेमेकाजित्यादौ इवर्ज्जनादिम् वृतोवेमोर्घइति वादीर्घः ॥ २४ ॥

वरिषीष्ट शिवं क्षिप्यन् मैथिल्याः कल्पशाखिनः।
प्रावारिषुरिव क्षौणीं क्षिप्तावृक्षाः समन्ततः ॥ २५ ॥

ज०म० वरीत्यादि। ये कल्पशाखिनः कल्पवृक्षाः स्वर्गादानीता पितास्तानुन्मूल्य यथास्थानं क्षिप्यन् मैथिल्याः शिवं कल्याणं वरि षीष्ट प्रार्थितवान् मैथिल्याभद्रमस्त्वित्याशंसावचने लिङ् नलिङी ति दीर्घप्रतिषेधः अन्ये च वृक्षास्तेन समन्ततः क्षिप्ताः सन्तः क्षौणीं पृथ्वीं प्रावारिषुरिवाच्छादितवन्त इव तेषामनाच्छादितत्वादित्यर्थः सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः ॥ २५ ॥

भ० वरीत्यादि। हनूमान् मैथिल्याः शिवं मङ्गलं वरिषीष्ट प्रार्थि तवान् आशिषि टी स्यादृद्वुरिति पक्षे इम् अठीडोपक्षेरिति ने मोदीर्घः किङ्कुर्व्वन् ये कल्पवृक्षाः स्वर्गादानीताशोकवनिकायामा रोपितास्तानुन्मूल्य यथास्थानं क्षिप्यन्ननुप्रेरयन् शिवशब्दस्य हितार्थत्वात् समार्थैनेत्यादिना मैथिल्याइत्यच षष्ठी अन्ये वृक्षाः

समन्ततस्तेन क्षिप्ताः चोणिं भूमिं प्रावारिषुरिव आच्छादितव न्त इव आत्मनि रूपं पूर्व्ववन्नेमोर्घः ॥ २५ ॥

संवुवूर्षुः स्वमाकूतमाशां विवरिषुं द्रुतं। अवरिष्टा चमच्चर्य्यं कपिं हन्तुं दशाननः ॥ २६ ॥

सम्वुद्रत्यादि। रामदूतेनं कपिना कर्म्मेदृशं कृतमिति स्वमा कूतमभिप्रायं सम्वुवूर्षुः सम्वरीतुमिच्छुः दशाननोऽङ्गतमाशां विव रिषुः प्रकटितुमिच्छुः अचं स्वसुतमवरिष्ट प्रार्थितवान् कर्म्मभिप्रा ये तङ् किमर्थं कपिं हन्तुं हनिष्यामीति अचम्यं चन्तुमशक्यं पोर दुपधादिति यत् सम्वुवूर्षुः विवरिषुरिति उगन्तत्वात् सनि ग्रह गुहोश्चेति, चकारेणेट्प्रतिषेधे प्राप्ते इट् सनिवेति विभाषेट् तत्रानिट्पचे इकोझलीति कित्त्वे उदोष्ठ्यपूर्व्वस्येत्युत्पचे गुण एव ॥ २६ ॥ ज०म०

समित्यादि। अथ दशाननोऽङ्गतं कपिं हन्तुं अचनामानं कुमारं अवरिष्ट प्रार्थितवान् पचे इमोर्घाभावः कीदृशं अचम्यं न चमार्हं कीदृशः कपिमात्रेण रामदूतेनैवं कृतमिति स्वमाकूतं स्वकीयमा शयं संवुवूर्षुः संवरीतुमिच्छुः आशां विवरिषुः हे अचागच्छा गच्छ कपिर्हन्यतामित्याशां विवरीतुं प्रकटयितुमिच्छुः वाघृद्ध रिति हृञः सनीवेम् अनिम्पचे यौऽच्झन्निन्नामिति दीर्घत्वे पुर्णा निमिसमीत्युत्वात् चादिरणावित्युर् ॥ २६ ॥ भ०

ऊचे संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमं। भ्रुवौ
छायुधि मायाभिः त्वरिता शत्रुसंमुखं॥ २७॥

ज०म० ऊचेइत्यादि। किमित्याह त्वं गच्छ शत्रोः पराक्रमं सम्वरिषी
ष्ठाः संछादय आशिषि लिङ्सिचोरात्मनेपदेष्विति वृञोविभा
षेट् उस्येतीट् पक्षे न किन्तं भ्रूषीष्ठाः युधि मायाभिः कर्ट
भूताभिः त्वं कुटिलीकृषीष्ठाः भृकुटिने ऊर्द्धाकौटिल्ये तस्य चोदा
त्तलात् आशिषि कर्मणि लिङ् ऋतश्चसंयोगादेरिति विभाषेट्
अनिट्पक्षे उस्येति कित्त्वं त्वरिता उपतापयिता शत्रुसंमुखं
शत्रोरग्रतः अतोऽस्तुत्तं त्वरिषीष्ठाइति वक्ष्यमाणेन योज्यं त्वरसम्भ्रो
पतापयोरित्यस्य त्वरति स्तृतिसूयेत्यादिना विभाषेट् लिङ्सि
चोरिति नानुवर्त्तते॥ २७॥

भ० ऊचेइत्यादि। विवरणमाह दशाननऊचे किमित्याह हे मच
त्वं गच्छ गत्वा शत्रोः कपेः पराक्रमं संवरिषीष्ठाः आच्छादय
आशिषि टौ पूर्व्ववत् पक्षे इम् त्वं युधि संग्रामे मायाभिः कर्म्मभिः
भ्रूषीष्ठाः कुटिलीकृषीष्ठाः भ्रूकौटिल्ये कर्मणि टौ स्याद्वृद्धुरिति
पक्षे इमोऽभावे इगुकुर्मकोत्यनिमइति कित्वाब गुणः त्वं कीदृशः
शत्रुसंमुखं यथा स्यात्तथा त्वरिता शत्रोरग्रतउपतापयितेत्यर्थः
किम्वा शत्रुसंमुखं शत्रूणां प्रधानं त्वरिता उपतापनशीलः मुख
माद्ये प्रधानेचेत्यमरः त्वरसम्भ्रोपतापयोः वेमूदित्त्वरेति पक्षे
इम्॥ २७॥

द्रुतं संस्वरिषीष्ठास्त्वं निर्दयः प्रधनोत्तमे। समाया
नामगात् सोता कपेर्विधवितुं द्युतिं॥ २८॥

द्रुतमित्यादि। संखरिपीडाः उपतापय निर्भयस्त्वम् आशिषि लिङ् समोगम्यृच्छीत्यात्मनेपदं अच स्वरत्वेतीट् प्रधनोत्तमे संग्राम वरे एवमुक्तः सन् समाधानां सीता जनकः कपेर्धृतिन्तेजोविधवितुमपनेतुमगात् गतः सीता धवितुमिति स्वरतीत्यादिसूत्रेण विभाषेट्॥ २८॥ ज॰म॰

द्रुतमित्यादि। त्वं प्रधनोत्तमे महायुद्धे निर्भयः सन् द्रुतं संखरिपीडाः उपतापय ऋच्छमित्यर्थात् समोगम्यृच्छेति मं एवमुक्तः सोऽक्षः कपेर्धृतिं तेजोविधवितुं अपनेतुं अगात् गतः कीदृशः मायानां सीता जनकः स्रधुज्जां पूर्ववत् पक्षे इम्॥ २८॥ भ॰

विगाढारं वनस्यासौ शत्रूणां गाहिता कपिः। अर्द्धं रधितुमारेभे रद्धा लङ्कानिवासिनां॥ २९॥

विगेत्यादि। असौ कपिः वनस्य विगाढा अवलोडयिता अरं शीघ्रं शत्रूणां गाहिता विनाशयिता कर्मणि षष्ठी ऊदित्वाद्विभाषेट् स्वरतीत्यादिना अर्द्धं रधितुं हिंसितुमारेभे प्रवृत्तः लङ्कानिवासिनां रक्षसां रद्धा हिंसिता रधादिभ्यश्चेति विभाषेट्॥ २९॥ ज॰म॰

विगेत्यादि। असौ हनूमान् अर्द्धं रधितुं हिंसितुं आरेभे प्रवृत्तः कीदृशः अरं शीघ्रं वनस्य विगाढा विलोडयिता शत्रूणां गाहिता नाशयिता लङ्कानिवासिनां रद्धा हन्ता गाहृविलोडे इत्यस्य ऊदित्वात् रधहतौ इत्यस्य च रधादित्वात् पूर्ववद्विभाषया इम्॥ २९॥ भ॰

निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात्।
आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः ॥ ३० ॥

ज०म० निष्केत्यादि। दशमुखात्मजादक्षात् प्राणान्निष्कोषितव्यान् अपनेतव्यान् अपनयार्हान् निष्कोष्टुं अपनेष्यामीति परिघमादायतस्थौ निरःकुषइति विभाषेट् निष्कुषितद्रुमः वनादपनीतवृक्षः इरिच्छायामितीट् ॥ ३० ॥

भ० निष्केत्यादि। दशमुखात्मजात् अक्षात् निष्कोषितव्यान् आकर्षणयोग्यान् प्राणान् निष्कोष्टुं अपहर्त्तुं परिघं आदाय गृहीत्वा कपिः तस्थौ कीदृशः वनात् निष्कुषिता आकृष्टाद्रुमा वृक्षा येन पूर्व्ववत् निःपूर्व्वकुषोवेम् नेमुडीषोदिदेमृइति क्तेनेम् निषेधस्तु निष्कुषवर्ज्जनात् ॥ ३० ॥

एष्टारमेषिता संख्ये सोढारं सहिता भृशं। रेष्टारं रेषितुं व्यासद्रोष्टाक्षः शस्त्रसंहतीः ॥ ३१ ॥

ज०म० एष्टेत्यादि। कपिं युद्धस्यैष्टारं एषिता एषणशीलोऽक्षः ताच्छील्ये तृन् नलोकेति षष्ठीप्रतिषेधः सोढारं प्रहरणस्य सहितारं सहिता भृशं सहनशीलः रेष्टारं हिंसकं रेषितुं हिंसितुं रोष्टा रोषणशीलः शस्त्रसंहतीर्व्यासत् क्षिप्तवान् तक्ति रूपं सर्व्वत्र तीष सहेत्यादिना वेट् ॥ ३१ ॥

एष्टेत्यादि। अक्षः संख्ये युद्धे रेष्टारं हिंसकं हनूमन्तं रेषितुं हिंसितुं अश्मसमूहान् व्यास्यत् क्षिप्तवान् असु क्षेपे यो कीदृशं एष्टारं इच्छाशीलं युद्धस्येत्यर्थात् सोढारं सहनशीलं भृशमत्यर्थं सोऽपि एषिता एषणशीलः सहिता सहनशीलः रेष्टा रेषणशीलः इषुश्वाञ्छे सहजङ्गमौ रिषवधे इषञ्जिच चकारात् बधे वेमुषहेत्यादिना वेम्॥ २१ ॥ भ०

अस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः। अर्द्दिधिषु-
र्यशःकीर्त्तिमीर्त्सुं वृक्षैरताडयत्॥ २२॥

अस्त्रैरित्यादि। कपिः अर्द्दिधिषुः यशोवर्द्धितुमिच्छुः परिघं दुद्यूषुः परिघेण क्रीडितुमिच्छुः अक्षं वृक्षैरताडयत् हतवान् कीदृशं अस्त्रैर्दिदेविषुं क्रीडितुमिच्छं कीर्त्तिमीर्त्सुं वर्द्धितुमिच्छुं दिवेरिवन्तस्य ऋधुवृद्धावित्यस्य च सनीवन्तर्द्धेत्यादिना विभाषितेट् तत्र दिवेरिडभावपक्षे छ्वोःशूठ् ऋधेराप्ज्ञप्यृधामीदितीत्वं अभ्यासलोपश्च॥ २२॥ ज०म०

अस्त्रैरित्यादि। कपिः संख्ये युद्धे वृक्षैरक्षमताडयत् अक्षं कीदृशं अस्त्रैर्दिदेविषुं क्रीडितुमिच्छन्तं ईर्त्सुं वर्द्धयितुमिच्छुं कपिः कीदृशः परिघेण दुद्यूषुः क्रीडितुमिच्छुः दिवोऽधेवेति करणे तृतीया यशोऽर्द्दिधिषुः वर्द्धयितुमिच्छुः दिवुक्रीडादौ भस्जश्रिस्वृयूर्णुभरेत्यादिना इवन्तत्वात् सनीवेम् इमोऽभावपक्षे छ्वोः शूठित्यादिना ऊठ् ऋधुवृद्धौ पूर्व्वेण सनीवेम् णाजन्तादेराद्धि भ०

रित्यकारस्य ग्लादीनवद्यो ऽवेदति देफस्य च न हित्वं ग्रनिमृपवि ग्रपर्धापामीर्थ्यदति दूर खिलोपस्य प्रन्तर्भूतत्र्यार्थे ऽत्र बोध्यः ॥ ३२ ॥

भूयस्तं धिप्सुमाहूय राजपुत्रं दिदम्भिषुः। ग्रहंस्त तः समूर्च्छावान् संशिश्रीषुरभूद्ध्वजं ॥ ३३ ॥

ज०म० भूयदत्यादि। तं राजपुत्रं ग्रचं धिप्सुं दम्भितुं वञ्चयितुमिच्छुं भूयः पुनरपि दिदम्भिषुः वञ्चयितुमिच्छुः ग्राहूयागच्छेत्यहन् हत वान् ततः सोऽचः मूर्च्छावान् मूर्च्छायुक्तः ध्वजमात्मीयं संशिश्रीषुः संश्रयितुमिच्छुः ग्रभूत् भूतः ग्रच दम्भेः श्रयतेस्य सनीवन्तर्द्धेतीट् ग्रत्र श्रयतेरनिट्पक्षे ग्रज्झनगमांसनीति दीर्घः द्वितीयस्य च दम्भदच ग्रभ्यासलोपः दम्भेर्हल् ग्रहणस्य जातिपरत्वात्सिज्झमि ति कित्वे ग्रनुनासिकलोपः एकाचोवशदति भष् खरिचेति चत्वं ॥ ३३ ॥

भ० भूयदत्यादि। कपिसमचं ग्राहूय ग्रागच्छ युद्धे दृत्युक्त्वा भूयः पुनरपि ग्रहन् हन्तेर्घ्नो कीदृशं धीप्सुं दम्भं कर्त्तुमिच्छुं सच दिदम्भिषुः दम्भं कर्त्तुमिच्छुः ततः प्रहारानन्तर सोऽचोध्वजं संशिश्रीषुः ग्राश्रयितुमिच्छुः सन् मूर्च्छावान् मूर्च्छितोऽभूत् ग्रस्य श्रीत्यादिना दम्भेः श्रयतेस्य सनीवेम् दम्भेरनिम्पक्षे दम्भोवावि ति ग्रचईलं खिलोपस्य ग्रनकारनिर्देशात् नस्य लोपः ग्रभाग्ना चेति दस्य धः श्रयतेर्घोऽज्झनिकुमामिति दीर्घः ॥ ३३ ॥

आश्वस्याच्चः क्षणाल्लोकान् बिभक्षुरिव तेजसा।
रुषा बिभ्रज्जिषुप्रख्यं कपिं बाणैरवाकिरत्॥ ३४॥

आश्वेत्यादि। क्षणात् क्षणमात्रेणाश्वस्य संज्ञां लब्धा लोकान् जनान् तेजसा क्रोधात्वेन बिभक्षुरिव अथ सकपिं बाणैरवाकिरत् संछादितवान् कीदृशं बिभ्रज्जिषुप्रख्यं अग्नितुल्यं बिभ्रज्जिषुः बिभक्षुरिति सनीवन्तर्द्धेत्यादिना विभाषेट् तचानिट्पचे स्कोरिति सलोपः भ्रस्जेति षः इट्पचे सकारस्य जश्त्वं सुलस्य॥ ३४॥ ज०म०

आश्वस्येत्यादि। ततोऽच्चः क्षणात् आश्वस्य चेतनां प्राप्य बाणैः कपिमवाकिरत् आच्छादितवान् कीदृशः तेजसा लोकान् बिभक्षुरिव क्रोधलक्षणमच तेजः रुषा क्रोधेन बिभ्रज्जिषुप्रख्यं अग्नितुल्यं भ्रस्ज्ञ्ञोति भ्रस्जेः सनि वेम्॥ ३४॥ भ०

संयुयूषुं दिशो बाणैरच्चं यियविषुर्द्रुमैः। कपिर्मायामिवाकार्षीद्दर्शयन् विक्रमं रणे॥ ३५॥

समित्यादि। बाणैर्दिशः संयुयूषुं मिश्रयितुमिच्छुं अच्चं कपिः द्रुमैर्यियविषुः योतुमिच्छुर्मायामिवेन्द्रजालमिवाकार्षीत् क्षतवान् रणे विक्रमं दर्शयन् योतेः सन् सनीवन्तर्धेति विभाषेट् ओःपुयण्ज्यपरइतीत्वं अज्झनगमांसनीति दीर्घः॥ ३५॥ ज०म०

समित्यादि। कपीरणे विक्रमं दर्शयन् मायामिव अकार्षीत् इन्द्रजालमिव दर्शितवानित्यर्थः कीदृशः द्रुमैरच्चं यियविषुः मिश्र भ०

चितुमिच्छुः अश्वं कीदृशं वार्णेदंश दिशः संयुयूषुं मिश्रयितुमिच्छुं भ्रस्जश्रीति वेम्॥ ३५ ॥

वानरं प्रोर्णुनविषुः शस्त्रैरचोविदिद्युते। तं प्रोर्णुनूषुरुपलैः सवृचैराबभौ कपिः॥ ३६ ॥

ज०म० वानेत्यादि। वानरं प्रोर्णनविषुः छादयितुमिच्छुरचः विदिद्युते विद्योतते स्म द्युतिस्वाप्योरिति संप्रसारणं कपिरपि तमचं उपलैर्वृक्षसहितैः प्रोर्णुनूषुः सम्वरीतुमिच्छुराबभौ भाति स्म ऊर्णोतेः पूर्व्ववद्विभाषेट् इट्पचे गुणः अन्यच अज्झनेति दीर्घः उभयत्र नन्द्राइति रेफेण द्विरुच्यते॥ ३६॥

भ० वानरमित्यादि। अचः शस्त्रैर्वानरं प्रोर्णुनविषुः आच्छादयितुमिच्छुः सन् विदिद्युते दीप्तः द्युत्स्वाप्योःखेर्ज्जिः कपिरपि वृचसहितैरुपलैः पाषाणैस्तमचं प्रोर्णुनूषुः आच्छादयितुमिच्छुः सन् बभौ दीप्यते स्म ऊर्णुञ्आच्छादने भ्रस्जश्रीत्यादिना वेम्॥ ३६ ॥

स्वां जिज्ञापयिषू शक्तिं बुभूर्षू नु जगन्ति किं। शस्त्रैरित्यक्षपातौ तौ पश्यतां बुद्धिमाहवे॥३७॥

ज०म० स्वाञ्चीत्यादि। तौ कपिराचसौ किं स्वां शक्तिं जिज्ञापयिषू बोधयितुमिच्छू इव बुभूर्षू जिजगन्ति किं नु चैलोक्यं शस्त्रेण भर्त्तुं पूरयितुमिच्छू इत्येवं बुद्धिमाहवे पश्यतां प्रेचकाणां पचपातौ कृतवन्तौ

जिज्ञापयिषू बुभूर्षू इति विभाषेट् तत्र भृञ्भरणइति भौवादिकस्य ग्रहणं सनीवन्तर्द्धेति सूत्रे भरेति शपा निर्देशात्॥ ३७॥

स्वामित्यादि। तौ कपिराक्षसौ पश्यतां जनानां आहवे युद्धे भ० इति बुद्धिमकल्पतां चक्रतुः कीदृशीं बुद्धिमित्याह किंनु किमु एतौ स्वां शक्तिं ज्ञापयितुमिच्छू जगन्ति त्रिभुवनानि शस्त्रैर्बुभूर्षू पूरयितुमिच्छू अपिभूर्षां भ्रस्जश्रीत्यादिना सनीवेम् भृञ्भौवादिकः सूत्रे भरेति निर्देशात्॥ ३७॥

मायाभिः सुचिरं क्लिष्ट्वा राक्षसोऽक्लिशितक्रियं। संप्राप्य वानरं भूमौ पपात परिघाहतः॥ ३८॥

मायेत्यादि। राक्षसोमायाभिः सुचिरं क्लिष्ट्वा क्लेशं कृत्वा ज०म० वानरं अक्लिशितक्रियमनभिभूतव्यापारं सम्प्राप्य परिघाहतो भूमौ पपात क्लिशः क्त्वानिष्ठयोरिति विभाषेट्॥ ३८॥

मायाभिरित्यादि। राक्षसोऽसौमायाभिः सुचिरं क्लिष्ट्वा क्लेशं भ० प्राप्य अक्लिशितक्रियं अनभिभूतव्यापारं वानरं सम्प्राप्य परिघेणाहतः सन् भूमौ पपात क्लिशः पूङ्क्लिशश्चादितइति क्त्वायोवेम् पूङ्क्लिशवमजपेति क्तक्तवतोर्वेम्॥ ३७॥

पवितोऽनुगुणैर्वातैः शीतैः पूत्वा पयोनिधौ। बभञ्जाध्युषितं भूयः क्षुधित्वा पक्षिभिर्वनं॥ ३९॥

पवीत्यादि। कपिरपि पयोनिधौ पूत्वा स्नात्वा अनुगुणैरनु ज०म० कूलैः शीतैर्वातैः पवितः पवित्रीकृतः पूङ्श्चेति विभाषेट् भूयः

पुनर्वनं बभञ्ज कीदृशं पत्त्रिभिः पत्त्रिभिः क्षुधित्वा क्षुधितैर्भूत्वा अध्युषितं कृततिवासं वसतिक्षुधोरितीट्॥ ३९॥

भ॰ पवितइत्यादि। कपिः क्षुधित्वा क्षुधितोभूत्वा पयोनिधौ पूत्वा स्नात्वा फलादिकं भुक्त्वा चेत्यर्थात् शीतलैरनुगुणैर्वातैः पवितस्य क्लमः सन् भूयः पुनरपि तद्वनं बभञ्ज भग्नवान् कीदृशं पत्त्रिभिः पत्त्रिभिरध्युषितं अधिष्ठितं क्षणं भङ्गाभावात् पूङः पूक्लिशवमेतिक्त्वक्तोर्वेम् पूश्रीधृषेत्यादिना पुः पूक्लिशइदितइति क्त्वोवेम् वसेः क्षुधेश्च क्षुधवसपूजार्थाश्च इतीम्॥ ३९॥

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वेव संवहन्। दधद्विलुभितं वातैः केशरं वह्निपिङ्गलं॥ ४०॥

ज॰म॰ उच्चैरित्यादि। उच्चैरूर्द्धं अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य शोभनविन्यासेन स्थितत्वात् शिरोऽञ्चित्वेव सम्वहन् अनम्रत्वात् पूजयित्वेव शिरोविभ्राणः अञ्चेःपूजायामिति विभाषेट् वह्निपिङ्गलञ्च केशरं सटां दधत् बिभ्रत् वातैर्विलुभितं आकुलितं लुभोविमोहनइतीट् विमोहनमाकुलीकरणं॥ ४०॥

भ॰ उच्चैरित्यादि। कपिः कीदृशः उच्चैरञ्चितलाङ्गूलः ऊर्द्धं अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य सतथा शिरोऽञ्चित्वेव अनम्रत्वात् पूजयित्वेव संवहन् बिभ्राणः वातैर्विलुभितं चञ्चलीकृतं वह्निवत्पिङ्गलं केशरं दधत् धारयन् ईदृशोवनं बभञ्जेति पूर्व्वेणान्वयः क्षुधवसपूजार्थाञ्चागार्थ्यार्थलुभइति इम् नेदित्पूजार्थाञ्चेरिति नलोपाभावः॥ ४०॥

जरित्विव जवेनान्ये निपेतुस्तस्य शाखिनः। प्रक्षिला विवशानन्यान् स्वेनापातयत्तरून् ॥ ४१ ॥

जरीत्यादि। तस्य कपेर्जवेन वेगेन अन्ये शाखिनः जरित्विव जीर्णाइव भूत्वा निपेतुः अन्यांस्तरून् बलेन प्रक्षिला छित्त्वा विवशान् स्वस्यापतनवानपातयत् पातितवान् जृत्रस्तोः क्तीति इट् ॥ ४१ ॥ ज०म०

जरित्वेत्यादि। अन्ये शाखिनः तस्य कपेर्जवेन वेगेन जरित्विव जीर्णाइव भूत्वा निपेतुः निपतितवन्तः अन्यान् विवशान् अनाथान् तरून् बलेन प्रक्षिला छित्त्वा कपिरपातयत् पातयामास. जृत्रस्योनजिरिति इट् निषिधस्य ॥ ४१। भ०

दमित्वाप्यरिसंघातानश्रान्त्वा कपिकेशरी। वनं चचार कर्त्तिष्यन्नर्त्स्यन्निव निरङ्कुशः ॥ ४२ ॥

दमीत्यादि। कपिकेशरी हनूमान् अरिसंघातान् दमित्वा उपशमं नीत्वा अश्रान्त्वा अपरिश्रान्तो भूत्वा वनं चचार उदितो वेति विकल्पेनेट् निरङ्कुशः निरवग्रहः कर्त्तिष्यन् छेत्स्यन् नर्त्स्यन् नृत्तुकाम इव वेविषीत्यादिना विभाषेट् ॥ ४२ ॥ ज०म०

दमित्वेत्यादि। कपिकेशरी हनूमान् शत्रुसमूहान् दमित्वा शान्तिं नीत्वापि अश्रान्त्वा अश्रान्तो भूत्वा वनं कर्त्तिष्यन् छेत्स्यन् नर्त्स्यन्निव नर्त्तितुकाम इव निरङ्कुशो निरवग्रहः वनं चचार भ०

ज०म० आहूयेत्यादि। अथ रावणः इन्द्रजितमाहूय अन्तिकमवोचत् किमवोचदित्याह वने मत्त इव यथा गजेन्द्रो मत्तः क्रुद्धो वने पर्य्यटन् द्विषामन्तं गतवान् तथा त्वं प्रधनेषु संग्रामेष्वटन् द्विषामन्तं ययाथेति वक्ष्यमाणश्लोकेनान्वयः॥ ४६॥

भ० आहूयेत्यादि। अथानन्तरं अन्तिके समीपे इन्द्रजितमाहूय रावणोऽवोचत् उक्तवान् किमवोचदित्याह त्वं क्रुद्धः सन् प्रधनेषु युद्धेषु अटन् परिभ्रमन् वने मत्तोगजेन्द्र इव द्विषामन्तं ययाथेत्यग्रिमश्लोकेनान्वयः मदोमिर्य्यञ्चिहर्षे गेमुङोश्चीदिति इदित्वान्नुम् क्षुब्धस्वान्तेत्यादौ मदवर्ज्जनान्न क्तस्य नः क्रुधपौकोपे चादित्वान्नुम्॥ ४६॥

ययाथ त्वं द्विषामन्तं भूयोयातासि चासकृत्। अशक्य जेतुं त्वं देवान् मायाः सस्रष्ठ संप्रति॥ ४७॥

ज०म० ययेत्यादि। न केवलं ययाथ भूयः पुनरपि यातासि याखसि याते: क्रादिनियमात्प्राप्तस्येट: अचस्तास्वत्थल्यनिटोनित्यमिति प्रतिषेधः तस्य हि तासौ नित्यमनिट्त्वं अजन्ताधातवोऽजुदात्ता इति वचनात् देवान् जेतुं त्वमशकत् बहुधा अशक्य शकोपि उपदेशेत्वतइति थलीट्प्रतिषेधः शकेस्तासौ नित्यानिट्त्वं शकिः लृकान्तइति वचनात् मायाश्च कूटयुद्धानि सृष्टवान् सृजे ऋकारवत्त्वेनानिट्वात् धातोर्भारद्वाजस्येतीट्प्रतिषेधः॥ ४७॥

ज०म० इन्द्रेत्यादि। वानरं जितं मन्वानोऽवमन्वन् यतो विक्रमाभिज्ञः अगात् गतवान् [illegible]ः प्रभून् जिघांसियमाणः उपहवितुमिच्छन् पूर्व्ववत्सनइति तङ् मायां व्यञ्जिजिषुः व्यक्तीकर्त्तुमिच्छुः स्मिपूङर ञ्ज्वशामनीतीट् तत्राञ्जेर्नन्द्रादइति नकारोनद्विरुच्यते ॥ ५२ ॥

भ० इन्द्रजिदित्यादि। इन्द्रजित् स्वविक्रमाभिज्ञः अतएव वानरं जितमभिभूतं मन्वानो जानन् द्विषः प्रभोः संजिघांसियमाणः उपहवितुमिच्छुः सन् मायां व्यञ्जिजिषुर्व्यक्तीकर्त्तुमिच्छुः सन् अगात् गतः स्मिङ्पूङित्यादिना स्मिङोऽञ्जश्च सनइम् द्विष इति सम्बन्धे षष्ठी ॥ ५२ ॥

जगत्पिपविषुर्व्वायुः कल्पान्तइव दुर्द्धरः। लोकानाञ्जिघ्रिषोस्तुल्यः कृतान्तस्य विपर्य्यये ॥ ५३ ॥

ज०म० जगत्यादि। कल्पान्ते युगान्ते वायुरिव दुर्धरः जगत्पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः विपर्य्यये विनाशकाले लोकानाञ्जिघ्रिषोः भक्षयितुमिच्छोः कृतान्तस्य तुल्योऽगादिति पूर्व्वेण सम्बन्धः पूङ्इटि ॥ ५३ ॥

भ० जगदित्यादि। कीदृशः जगत् भुवनं पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः कल्पान्ते वायुरिव दुर्द्धरः धर्त्तुमशक्यः विपर्य्यये जगतां विनाशकाले लोकान् आजिघ्रिषोः व्याप्तुमात्मसात्कर्त्तुमिच्छोः कृतान्तस्य यमस्य तुल्यः ईदृशइन्द्रजिदगादिति पूर्व्वेणान्वयः

पूर्व्ववत् चिकरिषोरिति अत्र कॄ विक्षेपे इत्यस्मात् सन् इको झल्इति किद्वत्त्वात् इर्त्वं प्रथमोत्तमयोः साधु इत्यूदनुबन्धनिर्देशात् ॥ ५३ ॥

वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः। लसद्विविधशस्त्रौघः संग्रामोमूर्त्तिमानिव ॥ ५४ ॥

वनइत्यादि। वने वृक्षांश्चिकरिषोः विक्षेप्तुमिच्छोः कपेर्बलं सामर्थ्यं जिगरिषुः अपनेतुमिच्छुः इग्घोरहगन्तत्वात् सनि ग्रहगुहोश्चेति प्रतिषेधे प्राप्ते इट्सनिवेति विकल्पे किरश्चपञ्चभ्यइतीट् किरतेरिटो दीर्घत्वं नेकन्तीति न दीर्घः लसन् शोभमानोविविधोवज्रप्रकारः शस्त्राणामायुधानामोघः समूहोयस्य समूर्तिमान् शरीरी संग्रामइव इन्द्रजिदगादिति पूर्व्वेणान्वयइत्यर्थः ॥ ५४ ॥

वनेइत्यादि। पुनः कीदृशः वने वृक्षान् चिकरिषोर्विक्षेप्तुमिच्छोः कपेर्बलं सामर्थ्यं जिगरिषुर्भक्षयितुं नाशयितुमिच्छुः लसत् दीप्यमानोविविधोनानाविधः शस्त्रसमूहोयस्य मूर्त्तः संग्रामइव इन्द्रजिदगादिति पूर्व्वेण सम्बन्धः कॄशविक्षेपे गॄशनिगरणे आभ्यां सनः पूर्व्ववदिम् ॥ ५४ ॥

रोदिति स्मेव चायाति तस्मिन् पक्षिगणः शुचा। मुक्तकण्ठं क्वणान् वृक्षान् बन्धून् बन्धोरिवागमे ॥ ५५ ॥

ज॰म॰ रोदीत्यादि। तस्मिन्निन्द्रजिति आयाति आगच्छति सति पक्षिगणः हतान् वृक्षान् कपिनाभिन्नान् दृष्ट्वा शोकेन मुक्तकण्ठं सशब्दं नामयाहं रोदिति सोव रुदितवानित्र नामग्रहणपूर्व्वया रोदनक्रियया व्याप्यमानत्वात् वृक्षाणां कर्म्मसंज्ञा रुदादिभ्यइतीट् बन्धून् बन्धोरिव यथा बन्धोरागमने कश्चित् बन्धून् रोदिति ॥ ५५ ॥

भ॰ रोदितीत्यादि। तस्मिन्निन्द्रजिति आयाति आगच्छति सति पक्षिगणः दृष्ट्वा शोकेन मुक्तकण्ठं सशब्दं यथा स्यात्तथा हतान् हनूमता विनाशितान् वृक्षान् रोदिति सोव क्रन्दति सोव यथा बन्धोरागमे लोको हतान् बन्धून् रोदिति सशब्दरोदनक्रियायां रुदिः सकर्म्मकः रुद्धोयोहस्सस्येतीम् हनस्तोगतौवधे श्रौदित्वान्नेम् ॥ ५५ ॥

आश्वसीदिव चायाति तद्वेगपवनाहतं। विचित्रस्तवकोद्भासि वनं लुलितपल्लवं ॥ ५६ ॥

ज॰म॰ आश्वेत्यादि। तस्मिन्नायाति वनं तद्वेगपवनाहतं सत् आश्वसीदिव सञ्जीवितमिव लक्षि रूपं यतोविचित्रस्तवकोद्भासि लुलितपल्लवञ्च जातं पूर्व्ववदिट् ॥ ५६ ॥

भ॰ आश्वसीदित्यादि। तस्मिन्नायाति सति वनञ्च आश्वसीदिव संजीवितमिव [illegible] प्राणने घी रुदादयसीति ईम् कीदृशं तत्र हनूमतोवेगवायुना आहतं आश्वसतामाह विचित्रैः स्तवकैः भोद्भासमानं पचादित्वान्नेम् लुलितं मनोहरं पल्लवं यत्र तथा ॥ ५६ ॥

न प्राणिषि दुराचार मायानामीशिषे न च। नेड़िषे यदि काकुत्स्थं तमूचे वानरो वचः॥ ५७॥

इतीडधिकारः॥

नप्रेत्यादि। वानरस्तमागच्छन्तमिदं वचनमूचे हे दुराचार न प्राणिषि न जीवसि अनचेत्यस्य रूपं पूर्व्ववदिट् अनितेरिति णत्वं नच मायानामीशिषे नेशिता भवसि ईशः सइति इट् अधीगर्थेति कर्म्मणि षष्ठी यदि काकुत्स्थं नेड़िषे न स्तौषि ईडजनोर्ध्वे चेति चकारात्सेचेतीट्। इतीडधिकारः॥ ५७॥ ज०म०

नप्रेत्यादि। वानरोहनूमान् तमिन्द्रजितं वचऊचे किं वच इत्याह हे दुराचार त्वं काकुत्स्थं यदि नेड़िषे न स्तौषि तदा न प्राणिषि न जीवसि न च मायानामीशिषे मायानामीश्वरो न भविष्यसि माया यथेष्टं न च विनियोच्यसे इति वा कर्म्मणि षष्ठी धातूनामनेकार्थत्वात् विनियोगार्थता वर्त्तमानसामीप्येऽपि वर्त्तमानवद्विवक्षा इति न्यायात् सर्व्वत्र की अनप्राणने रुद्रोऽयइति इम् ईशऋकस्तौ आभ्यां सध्वोरसेमिति इम्। इतीडधिकारः॥५७॥ भ०

ससैन्यश्छादयन् संख्ये प्रावर्त्तिष्ट तमिन्द्रजित्। शरैः क्षुरप्रैर्मायाभिः शतशः सर्व्वतोमखः॥ ५८॥

इदानीं विसर्जनीयस्य वत्त्यधिकत्याह। ससेत्यादि। ज०म०
: तं वानरं सर्व्वतः शरैः क्षुरप्रैः भल्लैः

वानरः कुलशैलाभः प्रसह्यायुधशीकरं। रक्षसा
न्नान् यशस्काम्यंस्तमस्कल्पानदुद्रुवत्॥ ५९॥

वानेत्यादि। वानरः कुलशैलाभः संग्रामे स्थिरत्वात् आयुधं ज०म०
शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्याभिभूय कुःपोः कःपौ
चेति जिह्वामूलीयोपध्मानीयौ रक्षसान्नान् कुत्सितराक्षसान्
पाय्येपाशप् स्वार्थिका अपि प्रकृतितोलिङ्गवचनान्यतिवर्त्तन्ते यश
स्काम्यन् आत्मनो यश इच्छन् अत्र सकारे परतो नःक्ष्व्यप्रशानिति
नुलं विसर्जनीयसकारौ च पूर्व्वस्यानुनासिकः तमस्कल्पान् ईष
दसमाप्ततमसः कुःप्रोरपवादः सोपदादाविति सकारः तथ
पाशकल्पकाम्येष्विति परिगणनं अदुद्रुवत् ढौकते स्म णिश्रीत्या
दिना चङ्॥ ५९॥

वानरइत्यादि। वानरः कुलपर्व्वततुल्यः स्थिरचित्तत्वात् भ०
आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्य सोढ्वा रक्षसा
न्नान् कुत्सितरक्षांसि अदुद्रुवत् ढौकते स्म द्रावितवानित्यर्थः द्रुग
तौ टौ णिश्रिद्रुस्रुकमइति अङ् कीदृशः यशस्काम्यन् आत्मनो
यश इच्छतीति सःकाम्यक्सेच्छायामिति काम्यक् ततः शतः
कीदृशान् तमस्कल्पान् अन्धकारतुल्यान् त्यादेर्य्योगेरिति कल्पः
कुत्सितानि रक्षांसि रक्षसान्नाः पाशःकुत्सायामिति पाशः पुंस्त्व
मभिधानात् राजानमिच्छति राजीयतीत्यादिकुत्सुपृषोधावि
तनिषिद्धयेर्विद्धौ नञोपार्थे नञोपकेरुइति सतं ज्ञापयति सुसवि
चोषकस्य विरामाभिमतकार्य्यस्यानित्यमिति तेन रक्षसान्नादिषु

विसर्गाभावः किम्वा रक्षसां श्रोत्रोर्मणीया दिलान् विकुरः किम्वा खपर्णेवेत्यस्य योगविभागात् वाशब्दस्य व्यवस्थावाचित्वात् पाशकाम्यकल्पेषु विसर्गस्य नित्यं सकारः ॥ ५८ ॥

धनुष्पाशभृतः संख्ये ज्योतिष्कल्पोरुकेशरः । दुधाव निर्नमस्कारान् राक्षसेन्द्रपुरस्कृतान् ॥ ६० ॥

ज॰म॰ धनुरित्यादि । धनुष्पाशभृतः कुत्सितधनुर्धरान् राक्षसान् ज्योतिष्कल्पोरुकेसरः अग्नितुल्यवृहत्सटोवानरः इणःषइति पाशादिष्वेव विसर्जनीयस्य षत्वं दुधाव कम्पितवान् यस्मान्निर्नमस्कारान् अप्रणामान् राक्षसेन्द्रेणेन्द्रजिता पुरस्कृतान् अग्रतः स्थापितान् नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारः इणःष उत्तरस्य तु विसर्जनीयस्य सएवाधिक्रियते तत्र नमःशब्दस्य साक्षात् प्रभृतिषु पाठात् पुरःशब्दस्य पुरोऽव्ययमिति गतिसंज्ञा ॥ ६० ॥

भ॰ धनुरित्यादि । वानरः संख्ये युद्धे तान् राक्षसान् दुधाव कम्पितवान् धूञ्कम्पे ठो कीदृशान् धनुष्पाशभृतः निन्दितधनुर्धरान् पूर्ववत्पाशः निर्नमस्कारान् नमस्कारवर्जितान् अप्रणता नित्यर्थः राक्षसेन्द्रपुरस्कृतान् इन्द्रजिताऽग्रतः स्थापितान् कीदृशः ज्योतिष्कल्पोरुकेशरः अग्नितुल्यदीर्घविपुलसटः पूर्ववत् कल्पः सर्व्वत्र पूर्व्ववत् विसर्गाभावः वेःसकारोवा तद्वेत्यादिना सकार षत्वमभिनिष्पतन्त्यत्र व्याख्यातं ॥ ६० ॥

स्वामिनोनिष्क्रयं गन्तुमाविष्कृतबलः कपिः। रराज समरे शत्रून् घ्नन् दुष्कृतबहिष्कृतः॥ ६१॥

स्वामीत्यादि। स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं शत्रून् घ्नन् विनाशयन् कपिः समरे रराज आविष्कृतबलः प्रकटितसामर्थ्यः दुष्कृतबहिष्कृतः दुष्कृतं पापं बहिःकृतमनेनेति वाहितान्यादिषु द्रष्टव्यं सर्व्वत्र इदुदुपधस्य चेत्यनेनाप्रत्ययविसर्ज्जनीयस्य सत्वं॥ ६१॥ ज०म०

स्वामीत्यादि। कपिः समरे संग्रामे शत्रून् घ्नन् विनाशयन् रराज दीप्यते स कीदृशः स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं आविष्कृतं प्रकाशितं बलं सामर्थ्यं येन तादृशः दुष्कृतेन पापेन बहिष्कृतस्त्यक्तः निष्पापइत्यर्थः दुष्कृतं बहिष्कृतं येनेति वा पूर्व्वनिपातस्यानियमात् क्वचित् क्तान्तस्य परनिपातः वाहिताग्न्यादेर्व्वेति परः दुर्न्निराविर्बहिःप्रादुश्चतुरांचःकखपफेष्विति परस्य दर्शनात् निष्क्रयादिषु सेतुकखपफेवेत्यस्य वाशब्दस्य व्यवस्थावाचित्वात् नित्यं षकारोबोध्यः विकल्पेऽपि न क्षतिः दुःखं दुष्खमेति द्विरूपदर्शनात् मूर्द्धन्यषत्वं पूर्व्ववत्॥ ६१॥ भ०

चतुष्काष्ठं क्षिपन् वृक्षान् तिरस्कुर्व्वन्नलीमुखो। तिरस्कृतदिगाभोगोददृशे षड्धा भ्रमन्॥ ६२॥

ज॰म॰ चतुरित्यादि। चतस्रः काष्ठादिक्ष्वस्मिन् क्षेपणइति क्रिया विशेषणं पूर्ववत् षत्वं चतसृषु दिक्षु वृक्षान् रणे भ्रमन् एकोऽपि वहुधा ददृशे दृष्टः कपिः क्षिपन्निति तौदादिकः अरींस्तिरस्कुर्व्वन् अभिभवन् तिरस्कृतदिगाभोगः अपनीतदिग्विस्तारः तिरसोन्यत रस्यामिति पक्षे षत्वं ॥ ६२ ॥

भ॰ चतुरित्यादि। सएकः कपीरणे भ्रमन् वहुधा ददृशे अनै रित्यर्थात् किङ्कुर्व्वन् चतुष्काष्ठं वृक्षान् क्षिपन् चतस्रः काष्ठादिश आधारत्वेन, यस्मिन् क्षेपणे क्रियाविशेषणमिदं चतसृषु दिक्षु वृक्षान् क्षिपन्नित्यर्थः अरीन् शत्रून् तिरस्कुर्व्वन् अभिभवन् तिर स्कृतदिगाभोगः आच्छादितदिग्विस्तारः पूर्व्ववद्विभाषया विस र्गस्य सकारः ॥ ६२ ॥

द्विष्कुर्व्वतां चतुष्कुर्व्वन्नभिघातं नगैर्द्विषां। वहिष्क रिष्यन् संग्रामाद्रिपून् ज्वलनपिङ्गलः ॥ ६३ ॥

ज॰म॰ द्विष्कुर्व्वेत्यादि। असौ कपिराटीदिति वक्ष्यमाणेन सम्बन्धः कीदृशः द्विष्कुर्व्वतां द्वौ वारावभिघातं कुर्व्वतां द्विषां चतुष्कुर्व्वन् चतुरोवारान् नगैर्वृक्षैरभिघातं कुर्व्वन् द्वित्रिश्चतुरिति कृत्वोऽर्थे इति विसर्जनीयस्य वा षत्वं अरीन् संग्रामादहिष्करिष्यन् अपने ष्यामीति इसुसोः सामर्थ्यइति विसर्जनीयस्य षत्वं पक्षे सामर्थ्यं चात्र व्यपेक्षानैकार्थीभावः वहिष्करिष्यन्निति द्वयोः परस्परव्यपेक्षत्वात् ॥ ६३ ॥

दीरित्यादि। असौ कपिरटाटोदित्यमिसम्बन्धेनान्वयः किङ्कुर्व्वन् हौ वारौ अभिघातं कुर्व्वतां द्विषां नगैः पर्व्वतैश्चतुरोवारान् अभिघातं कुर्व्वन् दिस्त्रिश्चतुःकृत्वोऽर्थे इति सूत्रेण विभाषया कस्कादित्वाद्रूपद्वयमिति परः स्मते इस्तेपाणावित्यादिना माचादादित्वात् वा समासः। समासे सेतुकखेति रूपद्वयं निर्व्विरोधं एवमसमासेऽपि कखपफेवेत्यस्य योगविभागः कार्य्यः समासपक्षे षत्वं व्याख्यातमेव असमासेऽपि क्तिलादित्यस्य योगविभागात् षत्वं मनीषादित्वाद्वा संग्रामात् अरीन् शत्रून् वहिष्करिष्यन् पूर्व्ववत् वेःसः षत्वञ्च ज्वलनवत् वह्निवत् पिङ्गलः॥ ६३॥ भ०

ज्योतिष्कुर्व्वन्निवैकोऽसावाटीत् संख्ये पराद्धवत्।
तमनायुष्करं प्राप शक्रशत्रुर्द्धनुष्करः॥ ६४॥

ज्योतिरित्यादि। एकोऽपि ज्वलनपिङ्गलः ज्योतिष्कुर्व्वन्निव अग्निं दीपयन्निव पूर्व्ववत्पक्षे विसर्जनीयस्य षः पराद्धवत् दिव्य इव पराद्धो द्युलोकः ब्रह्माण्डसम्बन्धिनऊर्द्ध्वभागस्योत्कृष्टत्वात् तत्र भवइति परावराधमेति यत् संख्ये संग्रामे आटीत् परिचक्राम इटइटीति सिचोलोपः तं वानरमनायुष्करं प्राणापहारिणं शक्रशत्रुरिन्द्रजित् प्राप प्राप्तवान् धनुष्करः धनुः करे यस्येति नित्यं समासेत्यादिना षत्वं॥ ६४॥ ज०म०

ज्योतिरित्यादि। एकोऽसौ कपिः संख्ये पराद्धवत् अत्युत्कृष्टसंख्याविशेषावच्छिन्नवत् ज्योतिष्कुर्व्वन् आटीत् परिचक्राम भ०

पराक्षोवत् दिव्यवदिति जयमकृत्वा तं कपिं ग्रकम्रनुरिन्द्रजित् प्राप कीदृशं न आयुः करोतीत्यनायुष्करं कीदृशः धनुः करे यस्य स तथा पूर्व्ववद्देःसः षलञ्च इसुसन्तयोः कखपफयोर्नित्यमितिपरः ॥ ६४ ॥

अस्यन्नरुष्करान् वाणान् ज्योतिष्करसमद्युतिः ।
यशस्करोयशस्कामं कपिं वाणैरताडयत् ॥ ६५ ॥

ज०म० अस्यन्नित्यादि । वाणानरुष्करान् व्रणजनकान् दिवाविभेत्यादिना टः अस्यन् क्षिपन् ज्योतिष्करसमद्युतिः ज्योतिष्करणशीलः आदित्यः कञोर्हेलित्यादिना टः तेन तुल्यइत्यर्थः पूर्व्ववत् षत्वं यशस्करोयशोजननशीलः इन्द्रजिद्यशस्कामं यशसि कामोऽस्येति तं कपिं वाणैरवाकिरत् अताडयत् अतः कृकमीत्यादिना न व्यय विसर्जनीयस्य सत्वं ॥ ६५ ॥

भ० अस्यन्नित्यादि । इन्द्रजिदरुष्करान् व्रणजनकान् वाणान् अस्यन् क्षिपन् वाणैः कपिमताडयत् ज्योतिष्करस्य सूर्य्यस्य समा द्युतिर्यस्य यशस्करोयशोजननशीलः कीदृशं कपिं यशस्कामं यशसि कामोयस्य सर्व्वत्र पूर्व्ववद्देःस इत्वात्षलञ्च अरुर्ज्योतिर्यशस्करोतीति रुकुञः ॥ ६५ ॥

चकाराधस्पदं नासौ चरन् वियति मारुतिः । मर्म्मविद्भिस्तमस्काण्डैर्व्विध्यमानोऽप्यनेकधा ॥ ६६ ॥

इति सत्वाधिकारः ।

चकारेत्यादि। असौ मारुतिर्वियति चरन् अधस्तद् पृथिव्यां पदं न चकार अधस्तदमिति मयूरव्यंसकादित्वात्ः कस्कादिषु चेति षत्वं मर्म्माणि विध्यन्तीति क्विप् नहिवृतीत्यादिना पूर्व्वपदस्य दीर्घत्वं। इति षत्वसत्वाधिकारः॥ ६६॥ ज०म०

चकारेत्यादि। असौ मारुतिर्हनूमान् वियति आकाशे चरन् मर्म्माणि विध्यद्भिः कालायसघटितत्वात् तमस्तुल्यैः काण्डैः शरैरनेकधाविध्यमानस्ताड्यमानोऽपि अधस्तद् पृथिव्यां पदं न चकार पूर्व्ववदेः सः अधःशिरसोःपदे तमसस्तु काण्डे नित्यं विसर्गस्य सकारइति परः। इति विसर्ज्जनीयसत्वाधिकारः॥ ६६॥ भ०

पुरुहूतद्विषोधूर्षु युक्तानश्वस्य वाजिनः। आयूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयत्॥ ६७॥

इतः प्रभृति अपदान्तस्य मूर्द्धन्यइत्यधिकृत्याह।पुरुहूतेत्यादि। पुरुहूतद्विषइन्द्रजितः सम्बन्धिनोयानस्य रथस्य धूर्षु युक्तान् वाजिनः त्वक्षु चर्म्मसु निर्भिद्य प्राभञ्जनिर्मारुतिरायूंषि जीवितानि अमोचयत् त्याजितवान् धूर्षु त्वक्ष्विति आदेशप्रत्ययोरिति षः प्रत्ययसकारत्वात् तत्र हि इण्कोरिति वर्त्तते परेण च णकारेण प्रत्याहारः आयूंषीति नुम्विसर्ज्जनीयेत्यादिना सहेःसाडःसः इति छन्दोविषयत्वान्नोदाहृतं ततः छन्दसि सहइति ण्विप्रत्ययस्य विधानात् एवञ्च पृतनाषाड्भिषइति पाठान्तरमयुक्तं॥६७॥ ज०म०

अथ मूर्द्धन्यषत्वाधिकारः। पुरुहूतेत्यादि। प्रभञ्जनस्यापत्यं हनूमान् पुरुहूतद्विषः शक्रशत्रोर्मेघनादस्य यानस्य रथस्य धूर्षु भ०

मारेषु युक्तान् वाजिनोऽश्वान् लक्षु षर्षस्तु निर्भिद्य आर्यूषि अमीमयत् त्याजयामास षोऽश्रोञ्जेरिति सूत्रे उपसर्ज्जनीभूतार्थात्रपि शब्दार्थादयो गृह्यन्ते इति तु शाह्यर्थयोर्निषेधः प्रतिषेधेन ज्ञापितं तेन वाजिनां प्रयोज्यानां कर्म्मत्वं अत्र हि मुचिर्म्मुक्तिपूर्व्विकायां गतौ वर्त्तते अत एवामीमचयत् मोचनेन भवान्तरमगमयदित्यर्थः क्षिणादित्यादिना धूर्व्विंत्यत्र रेफात् आयूंषीत्यत्र नुविच्यवधानेऽपि लक्षित्यत्र ककारात् षस्य षत्वं पुरुह्ञतेत्यत्र पृतनाषाडिति क्वचित्पाठः ॥ ६७ ॥

सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा। आह र्त्तुमन्यानशिषत् प्रोषितत्रासकर्कशः ॥ ६८ ॥

ज०म० सुब्बित्यादि। ते यदा भूमौ सुषुपुः निपेतुः आदेशसकारत्वात्पूर्व्ववत् षत्वं तदा रावणिरन्यानश्वानाहर्त्तुमानेतुं सारथिमशिषत् आदिष्टवान् सर्त्तिशास्तीत्यङ् शासइदङ्हलोरिति इकारः शासिवसीति षत्वं प्रोषितत्रासः प्रोषितादृरामादुपगतभयः कर्कशस्च रौद्रः प्रोषितइति यजादित्वात्सम्प्रसारणं षत्वं पूर्व्ववत् ॥ ६८ ॥

भ० सुषुपुरित्यादि। ते वाजिनोयदा भूमौ सुषुपुः निपेदुः ञिष्वपोशये ण्याद्यादिष्वइति मूर्द्धन्यस्य दन्त्यत्वं ततः क्षिणादिति षस्य कृतत्वात् षत्वं तदा तस्मिन् काले रावणस्यापत्यमिन्द्रजित् अन्यानश्वानाहर्त्तुं सारथिं अशिषत् आदिष्टवान् कीदृशः प्रोषितोऽपग

तस्त्रासीयसीति बहुव्रीहिः सयासौ कर्कसयीति पश्चात्कर्मधारयः श्रोषितमाशिम कर्कशीया ग्रासेः ग्रामशिष्युदिति क्तः ग्रासुक्तिति इत् वसेः सुधवसेति मस्य इम् यहस्पायोरिति जिः क्तिनादि त्यादौ ग्रासवसेति षत्वं ॥ ६८ ॥

प्रतुष्टुषुः पुनर्युद्धमासिषञ्जयिषुर्भयं। आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव ॥ ६९ ॥

प्रतित्यादि। अस्त्रा आनीतादिति पुनरपि युद्धं प्रतुष्टुषुः प्रस्तो तुमारब्धुमिच्छुः सन् अज्झनगमांसनीति दीर्घः सनाशंसभिक्ष उः नलोकेति षष्ठीप्रतिषेधः रथमातस्थौ आरूढवान् भयमासिषञ्ज यिषुः संश्लेषयितुमिच्छुः हनूमता तत्र स्तौतेः सनि षत्वभूते सञ्जेश्च स्तौतिण्योरिति अभ्यासादुत्तरस्य षत्वं आत्मीयान् भृत्यानुत्सि साहयिषन्निव उत्साहयितुमिच्छन्निव युध्यध्वमिति स्तौतीत्यादिना षत्वे प्राप्ते सःस्विदित्यादिना षकारस्य सत्वं ॥ ६९ ॥ ज०म०

प्रतुष्टुषुरित्यादि। इन्द्रजित् पुनः सज्जीभूतं रथमातस्थौ आश्रितवान् कीदृशः युद्धं प्रतुष्टुषुः प्रस्तोतुमारब्धुमिच्छुः भयं आसिषञ्जयिषुः हनूमतो भयमासञ्जयितुं संश्लेषयितुं इच्छुः आत्मी यान् अनुचरान् उत्सिसाहयिषन्निव उत्साहयितुमिच्छन्निव जिस्तोःस्वेरित्यादिना षत्वभूते सनि स्वेः षत्वं तत्रैव सहवर्जनात् उत्सिसाहयिषन्नित्यत्र न षत्वं ॥ ६९ ॥ भ०

बलान्यभिषिषिचन्तं तरुभिः कपिवारिदं। विजिगीषुः पुनश्चक्रे व्यूहं दुर्ज्जयमिन्द्रजित्॥ ७०॥

ज॰म॰ बलेत्यादि। कपिवारिदं कपिं वारिदमिव बलान्यभिषिषिचन्तं तरुभिः अभिषेक्तुं छादयितुमिच्छन्तं स्थादिष्वभ्यासेत्यादिना तु सकारस्याभ्याससकारस्य च षत्वं तमेवंविधं कपिं विजिगीषुर्विजेतुमिच्छुः इन्द्रजित् सन्लिटोर्जेरिति कुत्वं पुनर्व्यूहं बलसन्निवेशं दुर्जयाख्यं चक्रे हस्त्यश्वादिसैनिकानां मण्डलस्थित्या विरच्यते॥ ७०॥

भ॰ बलानीत्यादि। तरुभिर्बलानि अभिषिषिचन्तं छादयितुमिच्छन्तं अतएव कपिं वारिदमिव जेतुमिच्छुरिन्द्रजित् पुनर्व्यूहं बलविन्यासं चक्रे दुर्ज्जयं जेतुमशक्यं व्यूहस्य कपेर्व्वा विशेषणं अभिपूर्व्वसिचः सनः षत्वे ञिस्तोःखेरिति नियमेन किलादित्यादिना गीकइति इत्यादिना च प्राप्तं षत्वं बाध्यते प्रकृतेर्व्वाधितत्वात् गीकइत्यादिना खेःसकारस्यापि न षत्वमिति केचित् ञिस्तोःखेरित्यनेन खिनिमित्तं षत्वं बाध्यते तेन प्रकृतेः सस्य न षत्वं खेस्तु गीकइत्यादिना षत्वं भवत्येवेति केचित् वस्तुतस्तु षत्वभूते सनि खिनिमित्तस्यैव षस्य निषेधः नतु गिनिमित्तस्य तेनोभयत्र गीकइति षत्वं॥ ७०॥

अभिक्रान्तः कपिं क्रोधादभ्यषिञ्चन्निवात्मनः। संप्रहारसमुद्भूतैरक्तैः कोष्णैरसृक्स्रुतैः॥ ७१॥

अभीत्यादि। राक्षसाः क्रोधादात्मनोऽभिष्यन्नः अन्तं ज०म०
नयन्तः षोऽन्तकर्मणीत्यस्य शतरि ओतःश्यनीत्योकारलोपः उप
सर्गादिति षत्वं सम्प्रहारसम्भूतैः रक्तैः कोष्णैरीषदुष्णैः अस्रुतैः
व्रणान्निर्गतैः कपिमभ्यषिञ्चन्निव अभिषिक्तवन्त इव लङि रूपं
प्राक्सितादड्व्यवायेऽपीति षत्वं ॥ ७१ ॥

अभीत्यादि। राक्षसाः क्रोधादात्मनोऽभिष्यन्तोऽन्तं नयन्तः भ०
सम्यक् प्रहारजातैः ईषदुष्णैर्व्रणच्युतैः रक्तैः कपिं अभ्यषिञ्चन्निव ।
अभिषिक्तवन्त इव षोयनाशे ग्रहः अभिषेोसिचोर्गीकःस्तुस्तुभषो
इत्यादिना षत्वं ॥ ७१ ॥

**संग्रामे तानधिष्ठास्यन्निषद्य पुरतोरणं। अविषी**
**दन्नवष्टब्धान् व्यष्टम्भान्नरविष्वणान् ॥ ७२ ॥**

संग्राम इत्यादि। ये प्राणिनः अभिषिञ्चन्ति तान्नरविष्वणान् ज०म०
राक्षसान् संग्रामे अधिष्ठास्यन् अस्वतन्त्रीकरिष्यन् कपिः उपसर्गा
दिति षत्वं पुरतोरणं पुरद्वारं व्यष्टभात् आश्रितवान् निषद्य
तत्रैव पुरतोरणे स्थित्वा प्राणिनोमाप्रविशुरिति अविषीदन्
विषादमगच्छन् निषद्य विषीदन्निति सदिरप्रतेरिति षत्वं अवष्ट
ब्धान् अविदूरान् अवाचालम्बनाविदूर्य्ययोरिति षत्वं व्यष्टभा
दिति अड्व्यवायेवेस्तम्भेरिति षत्वं स्तम्भुस्तुम्भुइत्यादिना आप्रत्ययः
सशब्दायामभ्यवहारक्रियायां स्वनतिर्वर्त्तते नराणां विष्वणा इति
सः नरान् सशब्दमभ्यवहरन्त इत्यर्थः वेश्वस्वनो भोजन इति षत्वं
॥ ७२ ॥

भ० संग्रामइत्यादि। हनूमान् संग्रामे निषद्य स्थित्वा अविषी दन् विषसो न भवन् तान् राक्षसान् अधिष्ठास्यन् अभिभविष्यन् पुरतोरणं पुरीवहिर्द्वारं व्यष्टभ्नात् आक्रान्तवान् पुरतोरण मधिष्ठास्यन् तान् व्यष्टभ्नादिति वा कीदृशान् अवष्टभ्नान् निकट स्थान् ऊर्ज्जितान् वा नरविष्वणान् मनुष्यं भुञ्जानान् अधिस्थानि विषदविसक्षान्तार्थविस्वनां गौकदृत्यादिना षत्वं अवष्टभ्नानिति गौकदृत्यादौ अवस्थनेत्यस्य योगविभागार्थात् क्वचिदन्यार्थादन्य चापि षत्वं मनीषादित्वाद्वा अनात्मभेरौर्ज्जित्याश्रयनिकटभो जनेष्विति परः॥ ७२॥

विषह्य राक्षसाः क्रुद्धाः शस्त्रजालमवाकिरन्। यन्न व्यसहतेन्द्रोऽपि कपिः पर्य्यषहिष्ट तत्॥ ७३॥

ज०म० विषेत्यादि। विषह्य सोढ्वा कपिचेष्टितमित्यर्थात् सात्पदाद्यो रिति प्रतिषेधे प्राप्ते परिनिविभ्यइति षत्वं राक्षसाः क्रुद्धाः शस्त्र जालमवाकिरन् विक्षिप्तवन्तः लङि रूपं यच्च शस्त्रजालमिन्द्रो ऽपि न व्यषहत न सोढवान्सः लङि रूपं तत्कपिः पर्य्यषहिष्ट लुङि रूपं सहेःसिवादीनामित्यादिना विभाषा षत्वं॥ ७३॥

भ० विषह्येत्यादि। राक्षसाविषह्य सोढ्वा हनूमतः प्रहारमित्य र्थात् क्रुद्धाः सन्तः शस्त्रजालं शस्त्रसमूहं नैरन्तर्य्येण सर्व्वतोविक्षे पात् जालमिव अवाकिरन् विक्षिप्तवन्तः यां रूपं यत्शस्त्रजालं

दृष्टोऽपि न व्यथत न विसोढवान् कपिस्तत् अस्त्रजालं पर्य्यष हिष्ट परिसोढवान् व्यां रूपं विषह्नेत्यत्र गीकद्त्यादिना षत्वं व्यषहतेत्यत्र पर्य्यषहिष्टेत्यत्र च निविपरिसञ्जेत्यादिना पाक्षिक षत्वं ॥ ७३ ॥

विष्यन्दमानरुधिरो रक्तविस्यन्दपाटलान्। विष्कन्तॄन् परिघेणाहन्नविस्कन्ता कपिर्द्विषः ॥ ७४ ॥

विष्येत्यादि। विष्यन्दमानरुधिरः चरद्रक्तः कपिः परिघेणा ज०म०
हन् ताडितवान् द्विषः शत्रून् रक्तविस्यन्दपाटलान् रक्तस्रुतिलो हितान् अनुपर्य्यभिनिविभ्यः स्यन्दतेरिति विभाषाषत्वं रक्तस्य प्राणित्वात् विष्कन्तॄन् विविधं स्कन्तुं गन्तुं शीलमेषामिति हन् अवि स्कन्ता कपिः अगमनशीलः स्थानशीलइत्यर्थः वेःस्कन्देरनिष्ठा यामिति विभाषा षत्वं ॥ ७४ ॥

विष्कइत्यादि। कपिर्द्विषः शत्रून् परिघेण अहन् ताडितवान् भ०
कीदृशः विष्यन्दमानरुधिरः चरद्रक्तः अविस्कन्ता अविचलन शीलः कीदृशान् रक्तविस्यन्दपाटलान् रक्तस्रुतिलोहितान् विष्कन्तॄन् विविधगतिशीलान् स्यन्दू स्रुतौ स्कन्दिर् शोषणे गत्यां अनयोः सत्त्वविस्कधानिर्व्विविस्त्यादिना पक्षे षत्वं स्यन्देः कर्त्तृ रक्तं तेनाप्राणिकर्तृकत्वं स्कन्देस्तॄन् अपञ्चयोरिति ह्रस्व तः स्वर्गात् सवर्गस्य सवर्गेलुम्बेति सूत्रेण पक्षे द्रलोपमाङ्गः परे वामतें मनीषादिलात्तद्रूपमपि ॥ ७५ ॥

मेघनादः परिष्कन्दन् परिस्कन्दन्तमाश्वरिं। अव भ्रादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन्॥ ७५॥

ज॰म॰ मेघेत्यादि। मेघनाद इन्द्रजित् परिष्कन्दन् परितोभ्रमन् परिस्कन्दन्तम्परिभ्रमन्तमरिं कपिं ब्रह्मपाशेन ब्रह्मणा दत्तेन पाशेनशीघ्रमवभ्रात् बद्धवान् लङि आप्रत्यये रूपं परेश्चेति वा षत्वं अपरिस्कन्दं अप्राच्यभरतत्वात् तेन परिस्कन्दः प्राच्यभरते ष्विति निपातनं विस्फुरन् द्वेषादुद्रञ्जन्नित्यर्थः स्फुरतिस्फुलत्यो रिति विभाषाषत्वं॥ ७५॥

भ॰ मेघेत्यादि। मेघनाद इन्द्रजित् परिष्कन्दन् परितोभ्रमन् परिस्कन्दन्तं परितोभ्रमन्तमरिं हनूमन्तं ब्रह्मपाशेन आशु शीघ्रं अपरिस्कन्दं निश्चलं यथा स्यात्तथा अवभ्रात् बद्धवान् न विद्यते परिस्कन्दश्चलनं यस्माद्बन्धनात् क्रियाविशेषणं अरेर्विशेषणमिति केचित् विस्फुरन् कोपात् हर्षाद्वा कम्पमानः परिस्कन्द विस्फुरोः षत्व विस्कभ्रानिर्व्वेत्यादिना विभाषया षत्वं॥ ७५॥

विस्फुलद्भिर्गृहीतोऽसौ निष्फुलः पुरुषाशनैः। विष्कम्भितुं समर्थोऽपि नाचलद्ब्रह्मगौरवात्॥ ७६॥

ज॰म॰ विष्फुलेत्यादि। असौ कपिः पुरुषाशनैः राक्षसैः विस्फुलद्भिः हर्षाच्चलद्भिर्गृहीतः निष्फुलः सतेजाः निस्फुलेति विभाषा षत्वं

विष्कम्भितुं व्यापारितुं समर्थोऽपि ब्रह्मगौरवान्नाचलत् न चलितः माभूमोघोऽस्त्रस्य पात इति येष्कभातेरिति षत्वं॥ ७६॥

विष्फुलेत्यादि। असौ कपिर्विष्फुलद्भिर्हर्षाचलद्भिः पुरुषां भ०भनैः राक्षसैः गृहीतोऽपि निष्फुलो निष्कम्पः विष्कम्भितुं व्यावर्त्तितुं समर्थोऽपि ब्रह्मगौरवात् नाचलत् न चलितवान् विस्कम्भेत्यादिना विष्कम्भः षत्वं नित्यं स्फुरस्फुलोस्तु विभाषितं॥ ७६॥

ह्रषीढ्वं भर्त्तुरानन्दं मा न प्रोढ्वं द्रुतं वियत्। वानरं नेतुमित्युच्चैरिन्द्रजित् प्रावदत् स्वकान्॥ ७७॥

ह्रषीत्यादि। भर्तुः रावणस्य आनन्दं ह्रषीढ्व कुरुध्वं लिङि ज०म०रूपं अतोवानरं द्रुतं नेतुं वियदाकाशं मा न प्रोढ्वं मानोत्पतिष्ट माङि लुङ् इणः षीध्वमिति धकारस्य मूर्द्धन्यढकारः इत्येवमुच्चैरिन्द्रजित् स्वकान् भृत्यान् प्रावदत् वदेर्लङि रूपं॥ ७७॥

ह्रषीढ्वमित्यादि। यूयं भर्त्तूरावणस्य आनन्दं ह्रषीढ्वं कुरुध्वं भ०क्या रूपं इगुङ्मढीति कित्वान्न गुणः टोठीढीधोढिच इति धस्य ढत्वं कित्वादिति षः वानरं नेतुं द्रुतं यूयं वियदाकाशं मा न प्रोढ्वं न न गच्छत अपि तु प्रोढ्वं प्रसुलुञ्चसर्पणे मायोगे टो सिः गुणः घेसलोपेवेति पचे सिलोपः टोठीढीधोढिच इति धस्य ढत्वं इत्युक्तं इन्द्रजित् स्वकान् आत्मीयान् उच्चैर्महता ध्वनिना प्रावदत् प्रोक्तवान्॥ ७७॥

गतमङ्गुलिषङ्गं त्वां भीरुस्थानादिदागतं । खादि
ष्यामइति प्रोचुर्नयन्तोमारुतिं द्विषः ॥ ७८ ॥

ज०म० गतमित्यादि। अङ्गुलीनां सङ्गः अङ्गुलीषङ्गः तं गतं प्राप्तं हस्त
प्राप्तमित्यर्थः समासेऽङ्गुलेःसङ्गइति षत्वं भीरोः कातरस्य यत्
स्थानं तस्माद्भीरुस्थानादिहागतं भीरोस्थानमिति षत्वं खादिष्या
मइति प्रोचुः द्विषो राक्षसा मारुतिं नयन्तोनेष्यन्तः वर्त्तमानसा
मीप्ये भविष्यति लट् ॥ ७८ ॥

भ० गतमित्यादि। मारुतिं नयन्तोराक्षसाइति प्रोचुः उक्तवन्तः
किमित्याह त्वां वयं खादिष्यामः कीदृशं त्वां अङ्गुलेः सङ्गं गतं
प्राप्तं हस्तप्राप्तमित्यर्थः भीरोरामस्य स्थानादिह लङ्कायामा
गतं समासेऽङ्गुलेः सङ्गस्य भीरोस्थानस्य चेति षत्वमिति परः
स्त्रमते क्विलादित्यस्य योगविभागात् प्रायवचनस्याधिकारचेत्यत्र
चकारस्यानुक्तसमुच्चयार्थत्वादन्येषामपीत्यर्थाद्वा मनीषादित्वा
द्वा ॥ ७८ ॥

अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमादिषु द्विजान्।
योऽरक्षीत्तस्य दूतोऽयं मानुषस्येति चावदन्॥ ७९ ॥

ज०भ० अग्नीत्यादि। अग्निष्टोमादिसंस्थेषु सप्तभेदेषु ज्योतिष्टोमादिषु
योद्विजानरक्षीत् तस्य मानुषस्यायं दूत इति चावदन् नयन्तो
द्विषः अग्नेस्तुत्स्तोमसोमाः ज्योतिरायुषस्तोमइति षत्वं ॥

यज्ञेत्यादि। अग्निष्टोमादियज्ञेषु ज्योतिष्टोमादिषु यज्ञेषु भ०
योऽद्विजान् अरक्षीत् आदिशब्दाद्वाजपेयादेर्ग्रहणं आयुर्ज्योति
रग्निभ्यःसोमस्येति षत्वमिति परः स्वमते मनीषादित्वात् तस्य
मानुषस्यायं दूत इति च ते द्विषोऽवदन्॥ ७९॥

नासां मातृष्वसेय्यास्य रावणस्य लुलाव यः। मातुः
स्वसुश्च तनयान् खरादीन् विजघान यः॥ ८०॥

नासामित्यादि। रावणस्य या मातुः स्वसा भगिनी सा मातृ अ०भ०
ष्वसा मातृपितृभ्यामिति षत्वं तस्या अपत्यं मातृष्वसेयी मातृष्व
सुश्चेति ठगन्तलोपो तस्यायो नासां लुलाव मातुःस्वसुश्च तनयान्
खरादीन्विजघान मातृपितृभ्यामन्यतरस्यामिति षत्वाभावपक्षे
विभाषास्वसृपत्योरिति षष्ठ्या अलुक्॥ ८०॥

नासामित्यादि। योरावणस्य मातृष्वसेय्यामातृष्वसुर्दुहितुः भ०
शूर्पणखाया नासां लुलाव छिन्नवान् मातृस्वसृशब्दाद्व्यादि
त्वात् ढ्यत्र: मनीषादित्वादन्तलोपः आदिसस्य षत्वञ्च मातृपि
तृभ्यां स्वसुरिति परः यो मातुः स्वसुश्च मातुर्भगिन्याश्च तनयान्
पुत्रान् खरादीन् निजघान तस्य दूतोऽयमिति सम्बन्धः स्वसुर्वा
मातृपितृभ्यामिति विभाषया षत्वमिति परः, स्वमते मनीषादि
त्वात्॥ ८०॥

प्रादुःषन्ति न संत्रासाद्यस्य रक्षःसमागमे। तस्य
सञ्जियतुःपूतेरयं ऋषिभिरागतः॥ ८१॥

ज०म० प्रादुरित्यादि। यस्य रक्षःसमागमे सन्त्रासाः भयानि न प्रादुःषन्ति न प्रादुर्भवन्ति उपसर्गप्रादुर्भ्यामित्यादिना दुःशब्दादुत्तरस्यास्ति सकारस्य अधोरलोपदत्यल्लोपे कृते षत्वं प्रादुःसकारस्य च द्वित्वं तस्य चरित्यदुःषूतिः दुष्पुत्रस्यायं प्रणिधिरागत इति चावदन् नयन्तः स्तुयतइति स्तुतिः दुर्निंदाथामिति स्तुतेः सकारस्य सुविनिर्दुर्भ्यइति षत्वं॥ ८१॥

भ० प्रादुरित्यादि। रक्षसां समागमे यस्य सन्त्रासान प्रादुःषन्ति न प्रादुर्भवन्ति प्रादुर्गीकइति षत्वं तस्य चरित्यदुःषूतेः प्रणिधिरयमागतः विनिसुदुर्भ्यः स्तुतिसमसुपामिति षत्वमिति परः स्मते मनोषादित्वात्॥ ८१॥

दृष्ट्वा सुषुप्तं राजेन्द्रं पापोऽयं विषमाशयः। चारकर्म्मणि निष्णातः प्रविष्टः प्रमदावनं॥ ८२॥

ज०म० दृष्टेत्यादि। राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः सुषुप्तं गाढनिद्रं वच्यादिना सम्प्रसारणं पापोऽयं विषमाशयः सुपीत्यादिना षत्वं चारकर्म्मणि निष्णातः कुशलः निनदीभ्यांस्नातेःकौशलइति षत्वं॥ ८२॥

भ० दृष्टेत्यादि। अयं पापोदुराचारो राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः कीदृशं राजेन्द्रं सुषुप्तं गाढनिद्रितं विस्वधानिर्व्विसुनिर्दुःस्वपइति षत्वं कीदृशः विषमाशयः कुटिलहृदयः विषमेत्यच मनीषादित्वात् षत्वं चारकर्म्मणि निष्णातः कुशलः निनदीभ्यांस्नः कौशलेइति षत्वमिति परः स्मते मनीषादित्वात्॥ ८२॥

कुलकं। सुप्रतिष्णातसूत्राणां कपिष्ठलसमलिषां।
स्थितां वृत्ते द्विजातीनां रात्रावैक्षत मैथिलीं॥ ८३॥

सुप्रेत्यादि। येषां द्विजातीनां सुप्रतिष्णातानि ग्रन्थतोऽर्थ ज०म०
तश्च निश्चितानि सूत्राणि तेषां सुप्रतिष्णातसूत्राणां सूत्रं प्रतिष्णा
तमिति निपातनं कपिष्ठलसमलिषां कपिष्ठलोनामद्विजर्षभो गोत्र
प्रवर्त्तकः कपिष्ठलोगोत्रइति साधुः तत्तुल्यतेजसां द्विजातीनां
वृत्ते चरिते स्थितां मैथिलीं ऐचत॥ ८३॥

सुप्रेत्यादि। अयं रात्रौ द्विजातीनां वृत्ते स्थितां मैथिलीं भ०
ऐचत दृष्टवान् घां रूपं कीदृशानां सुप्रतिष्णातं ग्रन्थतोऽर्थतश्च
विशुद्धं गोभिलादिसूत्रं येषां मनीषादित्वात् सूत्रे प्रतिस्नातस्य
षत्वं कपिष्ठलसमलिषां कपिष्ठलाख्यस्य ऋषेः समा लिट् येषां म
नीषादित्वात् गोत्रे कपेः स्थलस्य सस्य षत्वं॥ ८३॥

सर्व्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिरां। अया
मां कुष्ठले तारां दिविष्ठामिव निर्म्मलां॥ ८४॥

कीदृशीमित्याह सर्व्वेत्यादि। यावन्तो नारीगुणाः तैः प्रष्ठां ज०म०
अग्रगामिनीं प्रष्ठोऽग्रगामिनीति साधुः विष्टरस्थामासनस्थां वृचा
सनयोर्व्विष्टरइति साधुः गविष्ठिरां वाचिस्थिरां गवियुधिभ्यामिति
षत्वं अस्मादेव वचनात् सप्तम्या अलुक् कुष्ठले अयानां कौ स्थले

भूतलं भुङ्क्ते विकुर्व्वमित्यादिना षत्वं दिविष्ठां दिवि तिष्ठतीति सुपि स्थइति कः तत्पुरुषेकृतिवहुलमिति सप्तम्या अलुक् गगणस्थां तारामिव निर्म्मलां अम्बामित्यादिना षत्वं ॥ ८४ ॥

भ० सर्व्वेत्यादि। मैथिलीं कीदृशीं सर्व्वनारीगुणैः प्रष्ठां यावन्तो नारीगुणास्तैरग्रगामिनीं मनीषादित्वात् प्रात्स्थोऽग्रगे षत्वं विष्टरस्थां आसनस्थां मनीषादित्वात् वृक्षासनयोर्विष्टरइति रूपसिद्धिः गविष्ठिरां वाचिस्थिरां सप्तमीतत्पुरुषः अभिधानान्न ङलोपः मनीषादित्वात् गवियुधिभ्यांस्थिरस्य षत्वं कुष्ठले भूस्थले शयानां मनीषादित्वात् अमिपरिविकुभ्यः स्थलस्य षत्वं दिविष्ठां तारामिव निर्म्मलां दिवि तिष्टतीति स्वनजनादिति डः अभिधानात् सप्तम्या अलुक् स्त्रियामाप् मनीषादित्वात् षत्वं ॥ ८४ ॥

सुषाम्नीं सर्व्वतेजःसु तन्वीं ज्योतिष्टमां शुभां । निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्व्वतीं वनं ॥ ८५ ॥

ज०म० सुषेत्यादि। शोभनं साम यस्याइति विगृह्य अनउपधालोपिनोऽन्यतरस्यामिति ङीप् सुषामादिषुचेति षत्वं सुष्ठु प्रियम्वदामित्यर्थः तन्वीं कृशां शुभां कल्याणीं सर्व्वतेजस्सु ज्योतिष्टमां अतिशयेन ज्योतिष्मतीं ह्रस्वात्तादौ तद्धितइति षत्वं एवञ्च तस्मान्निष्टपन्तीमिवात्मानं सन्तापयन्तीमिवात्मानं निसस्तपतावनासेवनइति षत्वं वनं ज्योतिःसात्कुर्व्वन्तीं अज्योतिर्ज्योतिः कुर्व्वाणां कार्त्स्न्येन दीपयन्तीमित्यर्थः कार्त्स्न्ये सातिप्रत्ययः तत्र सुवि

विसर्जनीयस्येत्यादिना प्राप्तस्य षत्वस्य सात्पदाद्योरिति प्रतिषेधः युष्मदित्यादिनोदाहृतं छान्दसत्वात्॥ ८५॥

सुषाम्णीमित्यादि। पुनः कीदृशीं मैथिलीं सुषाम्णीं प्रियम्वदां भ॰ शोभनं साम यस्यादिति नान्तत्वात् स्त्रियामीप् निःसुदुर्भ्यःसामसेधसम्नीनामिति षत्वमिति परः स्वमते मनीषादित्वात् तन्वीं कृशां गुणादोतदिति पचे ईप् सर्व्वज्योतिःसु मध्ये ज्योतिष्टमां प्रकृष्टप्रकाशरूपां स्वोकोर्धादिति षत्वं शुभां कल्याणयुक्तां आत्मानं निष्टपन्तीमिव सन्तापयन्तीमिव हनूमद्दर्शनात् तापस्य नैरर्थ्याभावात् निरस्तपोसकत्वेवनेदति षत्वमिति परः स्वमते मनीषादित्वात् तापस्य सकत्सेवनमत्र विवचितं वनं ज्योतिःसात्कुर्व्वतीं कार्त्स्न्येन दीपयन्तीमित्यर्थः कार्त्स्न्यायत्तोःसम्पद्यकादाविति चषात् किलादित्यादौ साद्दर्ज्जनात् न षत्वं॥ ८५॥

मधुसाङ्कृतकिञ्जल्कपिञ्जरभ्रमराकुलां। उन्नसत्कुसुमां पुण्यां हेमरत्नलतामिव॥ ८६॥

मध्वित्यादि। मधुसाङ्कृतकिञ्जल्कं कार्त्स्न्येन मधुतामापन्नं अ॰म॰ यत्किञ्जल्कं पुष्पकेसरं तन्मधुसाङ्कृतकिञ्जल्कं आदेशप्रत्यययोरिति प्राप्तस्य पूर्व्ववत्प्रतिषेधः तेन पिञ्जराः पिङ्गलाः ये भ्रमराः तैराकुलां उन्नसत्कुसुमां चलत्पुष्पां हेमरत्नलतामिव यथा हेमरत्नमयीं कल्पतरुलतां पुण्यां पवित्रान्तद्वत्तामपीत्यर्थः॥ ८६॥

भ० मधुवादित्यादि। पुनः कीदृशीं हेमरत्नलतामिव कल्पतरु लतामिव पुण्यां पवित्रां उत्तमामित्यर्थः हेमरत्नलतां कीदृशीं कार्त्स्न्येन मधुतामापन्नेन किञ्जल्केन पुष्पकेसरेण पिङ्गला ये भ्रमरास्तैराकुलां व्याप्तां अत्रापि षाद्‌र्व्वनामत्वलं उत्सुत्कुसुमां राजत्पुष्पां ॥ ८६ ॥

विलोचनाम्बु मुञ्चन्तीं कुर्व्वाणां परिसेसिचां। हृद
यस्येव शोकाग्निसन्तप्तस्योत्तमव्रतां ॥ ८७ ॥

ज०म० विलोचेत्यादि। विलोचनाम्बु अस्तु मुञ्चन्तीं विक्षिपन्तीं हृद यस्य शोकाग्निसन्तप्तस्य परिसेसिचां भृशं निर्व्वाणमिव कुर्व्वाणामेव तेति पूर्व्वेण सम्बन्धः सिचेर्यङन्तात् स्त्रीलिङ्गे भावे अकारप्रत्ययः उपसर्गादित्यादिना अभ्यासस्यवार्थेऽपि प्राप्तस्य षत्वस्य सिचोय ङीति प्रतिषेधः उत्तमव्रतां पतिव्रतात्वात् ॥ ८७ ॥

भ० विलोचनेत्यादि। विलोचनाम्बु मुञ्चन्तीं अस्तु क्षिपन्तीं शोक रूपाग्निसन्तप्तस्य हृदयस्य परिसेसिचां पुनःपुनरतिशयेन वा सेचनं कुर्व्वाणामिव अग्निनिर्व्वाणाय जलसेकः क्रियत इत्युत्प्रेक्षा सिचोयङ्लुकि सम्पादइति अः स्त्रियामाप् गोकरत्यादौ अवङ् सिचेति षङ्वर्ज्जनात्त्वलं उत्तमव्रतां पतिव्रतात्वात् ईदृशीं मैथिलीमैक्षतेति सम्बन्धः ॥ ८७ ॥

दृष्ट्वा तामभनग्वृक्षान् द्विषोऽघ्नन् परिसेषतः। परित्र
स्तान् विचिक्षेप क्रुद्धः स्वयमिवानिलः ॥ ८८ ॥

इष्ट्वेत्यादि। तां दृष्ट्वा वृक्षानभनक् चूर्णितवान् द्विषः शत्रून् परिषेधतः आगच्छतः घ्नन् हिंसन् पूर्ववदाप्तस्य सेधतेर्गताविति प्रतिषेधः परितस्य समन्तादुद्दिचिक्षेप उन्मूलितवान् लिटः संयोगादित्वादकित्त्वे गुणः क्रुद्धः स्वयमिव साक्षादिवानिलः॥ ८८॥ जं०म०

दृष्ट्वेत्यादि। अयं तां सीतां दृष्ट्वा वृक्षान् अभनक् भग्नवान् किं कुर्व्वन् द्विषः शत्रून् घ्नन् हिंसन् कीदृशान् परिषेधतः सर्व्वतोगच्छतः सीकद्दृत्यादौ अगतिषेधेति गत्यर्थवर्ज्जनात् न षत्वं अयं तान् वृक्षान् परितः समन्तात् प्रचिक्षेप क्षिप्तवान् क्रुद्धः सन् स्वयं साक्षात् अनिल इव॥ ८८॥ भ०

अप्रतिस्तब्धविक्रान्तमनिस्तब्धोमहाहवे। विसोढ
वन्तमस्त्राणि व्यतस्तम्भद्घनध्वनिः॥ ८९॥

अप्रेत्यादि। घनध्वनिर्मेघनादः अनिस्तब्धोऽनभिभूतः अप्रतिस्तब्धविक्रान्तं अनभिभूतविक्रमं कपि स्तम्भेरिति प्राप्तस्य षत्वस्य प्रतिस्तब्धनिस्तब्धौ चेति प्रतिषेधनिपातनं अस्त्राणि महाहवे विसोढवन्तं सोढ इति प्रतिषेधः व्यतस्तम्भत् निष्पादितवान् एवं नशश्लोऽवष्टब्धमिति षोऽत्र्य स्तम्भेर्ण्यन्तस्य स्तम्भिसुसहां चङीति षत्वप्रतिषेधः॥ ८९॥ जं०म०

अप्रेत्यादि। घनध्वनिर्मेघनादः अप्रतिस्तब्धविक्रान्तं अनभिभूतविक्रमं हनूमन्तं [illegible]स्तम्भत् निश्चलं कृतवान् कीदृशः अनिस्तब्धः अनभिभूतः कीदृशे महायुद्धे अस्त्राणि विसोढवन्तं सहेः भ०

भवतुः वेमवहेति वेभलात् नेमुडीश्चीदिति नेम् ह्रोढः ववचवोऽ ढोढीति ओत्वं गीकइत्यादौ अनोङ्वहेति ओकवर्णनात्र षत्वं स्तम्भेः प्रेरणे ञिः ञिश्रीत्यङ् गीकइत्यादौ अनङ्स्तभेति अङ्व र्णनात्र षत्वं प्रतिस्तब्धनिस्तब्धयोः प्रतिनिशब्दौ उपसर्गप्रतिरू पकौ तेन गीकइत्यादिना न षत्वं प्रतिनिभ्यां स्तब्धस्येति षत्वनि षेधार्थपरसूत्रं ॥ ८९ ॥

ते विज्ञायाभिसोष्यन्तं रक्षोरक्षांसि सव्यथाः । अन्यै रप्यायतं मेवुर्व्वरत्राशृङ्खलादिभिः ॥ ९० ॥

ज०म० ते इत्यादि । राक्षसाः ये मारुतिं नेष्यन्तः रक्षोः रक्षांसि विसोष्यन्तं अभिषेक्ष्यन्तं कपिं सुनोतेः स्यसनोरिति षत्वं यद्याक्र म्यमाणेन नीयेत अवश्यं राक्षसान् रक्षोः सोष्यतीति विज्ञाय सव्यथाः सभयाः सन्तः अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं मेऊः बध्नन्ति स्म एरुवन्धनइत्यस्य लिटि रूपं ॥ ९० ॥

म० ते इत्यादि । ते मारुतिं नयन्तोराक्षसाविज्ञाय हनूमत्प राक्रममित्यर्थात् सव्यथाः सभयाः सन्तः ब्रह्मास्त्रबन्धे सत्यपि अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं कपिं मेवुः बध्नन्ति स्म मवनहे नहोबन्धनं यां रूपं कीदृशं रक्षोः स्वगात्रस्थवैरक्षांसि अभिसोष्यन्तं अभिषेक्ष्यन्तं गीकइत्यादौ अव्याक्रसुनेति स्वाक्र वर्णनात्र षत्वं वरत्रा चर्मरज्जुः ॥ ९० ॥

विषसादैन्द्रजिद्बुद्धा बन्धे बन्धान्तरक्रियां। दिव्य बन्धोविषहते नापरं बन्धनं यतः॥ ९१॥

इति षत्वाधिकारः।

विषेत्यादि। बन्धे दिव्ये बन्धान्तरक्रियां बन्धनविशेषकरणं बुद्धा इन्द्रजित् विषसाद विषादमुपगतः नियतं दिव्यबन्धं मुक्तवानिति यतोदिव्यबन्धोनापरं स्वयं बन्धनं विषहते अतोविषसादेति योज्यं सदिस्वञ्जोःपरस्य लिटि षत्वप्रतिषेधः पूर्व्वस्य तु सदिरप्रतेरिति भवत्येव विषहतइति न प्रतिषेधः तत्र सोढरूपस्य ग्रहणात्। इति मूर्द्धन्याधिकारः॥ ९१॥ ज॰म॰

विषेत्यादि। इन्द्रजित् बन्धे बन्धान्तरकरणं बुद्धा ज्ञात्वा विषसाद विषादं गतवान् गीकइत्यादिना षत्वे प्राप्ते सत्स्वञ्जोश्चानाखेरिति प्रकृतेः षत्वनिषेधः खेस्तु षत्वमेव यतोयस्मात् दिव्यबन्धोऽपरं बन्धनं न विषहते गीकइत्यादिना षत्वं। इति षत्वाधिकारः॥ ९१॥ भ॰

मुष्णन्तमिव तेजांसि विस्तीर्णोरस्थलं पुरः। उपसेदुर्दशग्रीवं गृहीत्वा राक्षसाः कपिं॥ ९२॥

इतःप्रभृति णत्वमधिकृत्याह। मुष्णेत्यादि। राक्षसाः पुरः कपिमादाय दशग्रीवमासेदुः ढौकितवन्तः नतु दर्शनगोचरं गताः अग्रभातलात् कीदृशं तेजांसि मुष्णन्तं खण्डयन्तमिव विस्तीर्णोरस्थलं विस्तृतवक्षं तत्र रषाभ्यां णोणइति णत्वं॥ ९२॥ ज॰म

भ॰ अथ फलाधिकारः। मुष्णन्तमित्यादि। राक्षसाः कपिं गृहीत्वा पुरोऽपतोदग्रीवमुपसेदुः कीदृशं तेजांसि मुष्णन्तमिव अप्रदशन्तमिव स्वतेजसाऽभिभवात् विस्तीर्णवक्षसं उभ... ...क्षोभ इति णत्वं ॥ ६२ ॥

वज्रधाभिन्नमर्म्माणोभीमाः खरणसादयः। अग्रे वणं वर्त्तमाने प्रतीच्यां चन्द्रमण्डले ॥ ६३ ॥

ज॰म॰ वज्रेत्यादि। वानरद्विषा राक्षसा ऊचुरिति वक्ष्यमाणेन सम्बन्धः कीदृशाः किमूचुरित्याह वज्रधा भिन्नमर्माणइति यानि कायाभ्यन्तरे प्राणहराणि मर्म्माणि तानि वज्रधा भिन्नानि येषामिति वज्रधीभिः अट्पवर्गसमुदायस्य व्यवधानादट्कुप्वाङित्यादिना णत्वं खरणसादयः खरस्येव नासिकायस्येति अज्नासिकायाइत्यच् नसादेशस्य पूर्व्वपदात्संज्ञायामिति णत्वं खरणसादयोराक्षसाः वनस्याग्रे अग्रेवणं राजदन्तादित्वात्परनिपातः वनं परगेति णत्वं प्रतीच्यान्दिशि यदग्नस्य वनस्याग्रे उपरि वर्त्तमाने चन्द्रमण्डले प्रभातसन्ध्यायामित्यर्थः ॥ ६३ ॥

भ॰ वज्रधेत्यादि। वानरद्विषो राक्षसाइत्यूचुरित्यग्रिमश्लोकेना-न्वयः कीदृशाः वज्रधा भिन्नानि मर्म्माणि जीवितस्थानानि येषां ताडृशाः पूर्वोऽदान्तेरित्यादिना अवक्षुग्नमारेपीति णत्वं भीमा भयानकाः खरस्येव नसा नासिका येषां ते आदयोयेषां ते तथा पूर्व्वइत्यादिनगताहादित्यस्य योगविभागात् णत्वं नसादेश...

रूपमिदं लपनं वदनं तुण्डमाननं नासिका नसेति रभसः नसा नासा च नासिकेति कोषान्तरं खरखुराभ्यां नासिकायानसूनसा विति परः किमूचुरित्याह चन्द्रमण्डले प्रतीच्यां पश्चिमायां दिशि वनस्याग्रे वर्त्तमाने सति अनेनोद्यानं निर्वणं वनशून्यं कृतमिति परश्लोकेनान्वयः वनस्याग्रे अग्रेवणं तस्मिन् व्यंपूर्व्वमिति अग्रे शब्दस्य पूर्व्वनिपातः अग्रेवणमिति पाठे देशाध्वकालेति ठसंज्ञा अग्रेवणमित्यनुस्वारवत् पाठोऽच प्रमादकृतः सप्तम्यन्तत्वादिति विद्याविनोदः अग्रेवणइति खरणत्वबत्वं अग्रे मिश्रकाशारिका शिभ्रकापुरगाकोटराभ्योवनस्य संज्ञायामिति परसूत्रे संज्ञायामिति समभवपरमुक्तं तेनासंज्ञायामपि णत्वं स्यादिति बोध्यं अग्रेव णेवर्त्तमाने प्रतीच्यां चन्द्रमण्डलइत्यनेन प्रातःसन्ध्या सूचिता ॥ ९३ ॥

निर्व्वणं कृतमुद्यानमनेनाम्रवणादिभिः। देवदारु वनामिश्रैरित्यूचुर्व्वानरद्विषः ॥ ९४ ॥

निर्व्वेत्यादि। उद्यानं संनिवेशविशेषः निर्व्वणं वृक्षरहितं अनेन कपिना कृतं आम्रवणादिभिरुपलक्षितं उभयत्रापि प्रनिरन्तेति णत्वं देवदारुवनामिश्रैरिति विभाषौषधीत्यादिना णत्वं न भवति द्व्यक्षरत्र्यक्षरेभ्यइति वक्तव्यमिति वचनात् इत्येवमूचुः ॥ ९४ ॥ ज०म०

निर्व्वणमित्यादि। कीदृशमुद्यानं आम्रवणादिभिरुपलक्षितं कीदृशैः देवदारुवनामिश्रैः देवदारुवनमयैः निर्व्वणाम्रवणयोः भ०

खरणस्त्वत्वं देवदारुवनेत्यत्र योगविभागस्य कचिद्विषयान्त णत्वं परमते आम्रशरपीयूषखरखदिरनिःप्रकार्य्याकारिक्षुभाव नस्य णत्वं तथा इरिकाभङ्गिकातिमिरवर्ज्जं दिव्यवृत्तौषधिस्य पूर्व्वावनस्य णत्वं देवदारुशब्दस्य चतुरचत्वाद्देवदारुवनामित्रै रित्यत्र न णत्वं ॥ ६४ ॥

उपास्थिषत संप्रीताः पूर्व्वाह्णे रोषवाहणं । राक्षसाः कपिमादाय पतिं रुधिरपायिणां ॥ ६५ ॥

ज०म० उपेत्यादि । ते राक्षसाः पतिमुपास्थिषत उपागताः दृष्टिपथं गतादृत्यर्थः उपाद्देवपूजेत्यादिना प्रकृतिकरणे तङ् स्याच्चो रिच समीताः हृष्टाः तेषामनुज्ञातप्रवेशत्वात् पूर्व्वाह्णे प्रत्यूषसि अह्नोऽदन्तादिति णत्वं रोषवाहणं कपिमादाय रोषस्याधनीकृतं वाहनमाहितादिति णत्वं रोषस्य तत्राधीयमानत्वात् पतिं रुधि रपायिणां राक्षसानां पानं देशदृति णत्वं ॥ ६५ ॥

भ० उपेत्यादि । राक्षसाः कपिमादाय संप्रीताः सन्तः पूर्व्वाह्णे प्रत्यूषसि रुधिरपायिनां राक्षसानां पतिं रावणं उपास्थिषत उपगताः मैत्राध्वसङ्गाराधदृति सङ्गे मं स्यादोर्ङ्किस्टीमे इति ङ्किः गुणाभावश्च मान्तोऽदन्तदृत्यत् कपिं कीदृशं रोषवाहणं आरूढ क्रोधं पूर्व्वाह्णदृति प्राग्वर्णोऽतोऽह्नस्येति णत्वं रोषवाहणमिति खरणस्त्वत्वं परमते वाह्यपूर्व्वाहनस्य णत्वं रोषस्य वाह्यत्वात्

रुधिरपायिणामिति रुधिरं रक्तं पिबन्तीति ग्रहादित्वात् णिन्
पुंसोऽद्भ्यादित्यादौ नैकाचकोऽस्त्विति पाचिकं णत्वं असृक्पाणा
धिपं तूर्णं कपिमादाय राक्षसा इति क्वचित्पाठः तदा असृक्
प्रधानं पानं येषां तेषामधिपं असृजां पानं यत्र सोऽसृक्पाणो
देशः तस्याधिपमिति वा असृगेव पानं पेयं येषामिति वा खरणस
वणत्वं देशे पानस्य णत्वं नित्यं भावकरणयोः पानस्य वा णत्व
मिति परः ॥ ९५ ॥

सुरापाणपरिक्षीवं रिपुदर्पहरोदयं। परस्त्रीवा
हिणं प्रापुः साविस्काराः सुरापिणः ॥ ९६ ॥

सुरेत्यादि। सुरापाणात्परिक्षीवं मत्तं रावणं वा भावकरण जं०म०
योरिति णत्वं रिपुदर्पहर उदयो वृद्धिर्यस्य तं परस्त्रियं वाह
यितुमुपभोक्तुं शीलं यस्य तं परस्त्रीवाहिणं प्रातिपदिकान्त इति
णत्वाभावः पाक्षिकः प्रापुः सुष्ठु निकटीकृताः साविष्काराः धाष्ट
र्ष्याराः सुरापिणः सुरापैर्युक्ताः सुरां पिबन्तीति गापोष्टक् ते येषां
सन्तीति मत्वर्थीयः एकाजुत्तरपदे ण इति णत्वं उत्तरस्य प्राति
पदिकान्तस्यैकाचूनात् ॥ ९६ ॥

सुरेत्यादि। राक्षसा रावणं प्रापुः कीदृशं सुरापाणेन परि भ०
क्षीवं मत्तं खरणसवणत्वं भावकरणयोः पानस्य वा णत्वमिति परः
रिपूणां दर्पहारक उदयो यस्य तं परस्त्रियं वोढुं उपभोक्तुं शीलं
यस्य तं पुंसोद्धानीत्यादिना नैकाचकोऽस्त्विति पक्षे णत्वं परस्त्री

कामिण्यमिति पाठे तेनैव कवर्गवत्त्वात् नित्यं णत्वं कीदृशाः शावि
ष्कारा: मांसङ्कारा: सुरापिणः सुरापैर्युक्ताः सुरां पिवन्तीति
सुरापाः इनजनादिति उः ततोऽस्त्यर्थे इन् पूर्व्ववदेकाचत्वात्
नित्यं णत्वं ॥ ९६ ॥

संहर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः । प्रहिण्व
न्तोहनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ ९७ ॥

ज०म० संहेत्यादि । संहर्षयोगिणः स्पर्द्धायोगिनः कुमतिचेति णत्वं ते
अन्योन्याभिभवेच्छया त्रिदशद्विषोरावणस्य पादौ प्रणेमुः उप
सर्गादसमासेऽपीति णत्वं हनूमन्तं प्रहिण्वन्तः ढौकयन्तः द्विष
न्मतीः शत्रुबुद्धीः प्रमीणन्तं अभिभवन्तं मीञहिंसायां क्रैयादिकः
हिनुमिनादिति णत्वं ॥ ९७ ॥

भ० समित्यादि । राक्षसास्त्रिदशद्विषोरावणस्य पादौ प्रणेमुः
प्रणतवन्तः प्राग्वन्नोणइत्यादिना नादिधातुत्वाण्णत्वं संहर्षयो
गिणः महाहर्षयुक्ताः षुर्णइत्यादिना कवर्गवत्त्वात् नित्यं णत्वं
हनूमन्तं प्रहिण्वन्तः प्रापयन्तः कीदृशं द्विषन्मतीः शत्रुबुद्धीः प्रमी
णन्तं अभिभवन्तं प्राग्वन्नोणइति मीनाहिन्योर्णत्वं ॥ ९७ ॥

प्रवपाणि शरीरो भूमौ वानरस्य वनच्छिदः । आम
न्त्रय[illegible]ः समितिं रक्षसां पतिः ॥ ९८ ॥

प्रवेत्यादि। अस्य वानरस्य वनच्छिदः शिरोभूमौ प्रवपाणि ज०म०
छित्वा पातयामि आनिलोक्षिति णत्वं वपिरत्र पातने वर्त्तते संक्रुद्धः
रक्षसां पतिः स्वामी समितिं समूहं आमन्त्रयत भाषितवान्॥९८॥

प्रवेत्यादि। रक्षसां पतीरावणः संक्रुद्धः सन् समितिं सभां भ०
आमन्त्रयत उक्तवान् किमित्याह अहं वनच्छिदोवानरस्य शिरो
भूमौ प्रवपाणि छित्वा पातयामीत्यर्थः वपिरत्र प्रहरणे आव
स्रोणइति आनिपोणत्वं॥९८॥

प्रण्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव। ततः
प्रणिहितः स्वार्थे राक्षसेन्द्रं विभीषणः॥९९॥

प्रण्येत्यादि। ततउत्तरकालं विभीषणोराक्षसेन्द्रं प्रणि ज०म०
घ्नन्तं हन्तुमारभमाणं प्रण्यगादीत् वक्तुं प्रवृत्तः घनइव प्रणिन
दन् गर्जन् स्वार्थे राक्षसेन्द्रस्य प्रणिहितोऽवहितमनाः सर्व्वत्र
नेर्गदेति णत्वं॥९९॥

प्रण्येत्यादि। ततोऽनन्तरं हनूमन्तं प्रणिघ्नन्तं हन्तुमारभ भ०
माणं राक्षसेन्द्रं विभीषणोघनइव प्रणिनदन् गर्ज्जन् प्रण्यगादीत्
वक्तुं प्रवृत्तः स्वार्थे रावणप्रयोजने प्रणिहितः सावधानः सर्व्वत्र
प्रास्वस्रोणइति णत्वं॥९९॥

प्रणिशाम्य दशग्रीव प्रणियातुमलं रुषं। प्राणिजा
नीहि हन्यन्ते दूतादोषे न सत्यपि॥१००॥

जं०म० प्रणीत्यादि। हे दशग्रीव प्रणिशाम्य रोषं त्यज शेटि शनि रूपं शमामष्टानामिति दीर्घः स्पं प्रणियातुमलं न किञ्चित् पूर्व्व वलं प्रणिजानीहि अवगच्छ सत्यपि दोषे न हन्यन्ते दूता इति जानातेः शेषधातोरुपदेशावस्थायां अकखाद्यषान्तत्वात् शेषे विभाषेत्यादिना णत्वं ॥ १०० ॥

भ० प्रणीत्यादि। हे दशग्रीव प्रणिशाम्य शान्तोभव शमेर्ण्यां रूपं यन्तोशमादिमिदइति दीर्घः इलोपः रुषं क्रोधं प्रणियातुं आश्रयितुं अलं नार्हसि निषेधार्थोऽलं शब्दः उभयत्र शाम्यतेति इति णत्वं त्वं प्रणिजानीहि अवगच्छ पूर्व्ववदकखाद्यषान्तात्कमे रिति पक्षे णत्वं दोषे सत्यपि दूता न हन्यन्ते नीतिशैरित्यर्थात् ॥ १०० ॥

प्राणयन्तमरिं प्रोचे राक्षसेन्द्रोविभीषणं। प्राणिणि षुर्न पापोऽयं योऽभाङ्क्षीत्प्रमदावनं ॥ १०१ ॥

जं०म० प्राणेत्यादि। अरिं कपिं यः प्राणयति जीवयति तं प्राणयणां विभीषणं अनप्राणने अनचेत्यस्य रूपं अनितेरिति णत्वं प्रोचे राक्ष सेन्द्रः न प्राणिणिषुः न जीवितुमिच्छुरयं पापः उभौ साभ्यासस्येति णत्वं द्वयोरपि योऽभाङ्क्षीत् भग्नवान् प्रमदावनं हलन्तलक्षणा वृद्धिः ॥ १०१ ॥

भ० प्राणेत्यादि। अरिं हनूमन्तं प्राणयन्तं जीवयन्तं विभीषणं राक्षसेन्द्रः प्रोचे उक्तवान् अनितेर्ण्यन्तस्य रूपं किमुक्तवानित्याह

चर्थं पापैर्दुराचारैर्न प्राणिणिषुर्न जीवितुमिच्छुः चनितेः सनि रूपं प्राज्ञश्रोषइत्यादिना वालनेति विभाषया णत्वं योऽयं प्रम द्दावनं प्रभाङ्क्षीत् भग्नवान् त्वां रूपं॥ १०१॥

प्राघानिषत रक्षांसि येनाप्तानि वने मम। न प्रहण्मः कथं पापं वद पूर्व्वापकारिणं॥ १०२॥

प्राघेत्यादि। मम आप्तानि अक्षप्रभृतीनि येन वने प्राघानिषत मारितानि कर्म्मणि लुङ् चिण्वदिट् वोऽहनोरिति णत्वं तपर परिच्छिन्नाकारपूर्व्वस्य नकारस्य हन्तेरत्पूर्व्वस्येति णत्वं न भवति तं पूर्व्वापकारिणं पापं कथं न प्रहण्मः न मारयामइति वद कथय त्वोर्व्वेति णत्वं॥ १०२॥ अ॰म॰

प्राघेत्यादि। येन ममाप्तानि रक्षांसि अक्षप्रभृतीनि रणे प्राघा निषत मारितानि कर्म्मणि टौ हनयहद्दमच इति णिण् खेर्हौचो ञ्णितिचेनि घः हनोक्तोप्तोणन इत्यत्र प्रद्दत्युपलक्षणं हस्यान्यथा त्वे णत्वाभावइति बोध्यं तेन घत्वेऽपि णत्वनिषेधः हाघत्वे इति णत्व निषेधार्थं परसूत्रं तं पूर्व्वापकारिणं पापं कपिं कथं वयं न प्रहण्मः इति त्वं वद प्राज्ञश्रोषइत्यादौ नवान्तहनइति पक्षे णत्वं पूर्व्वा पकारिणमिति भुर्णइत्यादिना कवर्गवत्त्वात् नित्यं णत्वं॥ १०२॥ भ॰

वेश्मान्तर्हणनं कोपान्मम शत्रोः करिष्यतः। मा का षीरन्तरयणं प्रयाणार्हमवेक्ष्यमुं॥ १०३॥

ज०म० वेश्मेत्यादि। शत्रोर्वेश्मान्तः गृहमध्यएव हननं कोपान्मम करिष्यतः अन्तरदेशइति नकारस्य णत्वं हननस्याभावरूप स्यादेशत्वात् अन्तरयणमन्तरायणं विघातं मा कार्षीः अयन स्येति णत्वं प्रयाणार्हं दीर्घप्रस्थानार्हममुमवेहि अवगच्छ कृत्यच इति णत्वं अचउत्तरस्य नकारस्य कृत्स्थत्वात्॥ १०३॥

भ० वेश्मेत्यादि। वेश्मान्तर्गृहमध्ये शत्रोर्हणनं करिष्यतोमम अन्तरयणं विघ्नं त्वं मा कार्षीः न कुरु हे विभीषण अमुं वानरं प्रयाणार्हं दीर्घप्रस्थानार्हं मरणयोग्यं अवेहि जानीहि अन्तर्हण नमिति प्राक्त्वोपदइति णत्वं अन्तरोऽदेशेहनइति णत्वमिति परः अन्तरयणमिति खरणमवणत्वं अन्तरोऽदेशेऽयनस्येति णत्वमिति परः प्रयाणार्हमिति नोऽचोऽन्तरदुर्गेरिति णत्वं॥ १०३॥

प्रहीणजीवितं कुर्य्युर्ये न शत्रुमुपस्थितं। न्याय्याया अपि ते लक्ष्म्याः कुर्व्वन्त्याशु प्रहापणं॥ १०४॥

ज०म० प्रहीत्यादि। शत्रुमुपस्थितं प्रहीणजीवितं ये न कुर्य्युः अहाते रोदितस्येति निष्ठादेशनकारस्य पूर्व्ववत्त्वं ते न्याय्याया अपि कुल क्रमादागताया अपि लक्ष्म्याः प्रहापणं त्याजनं कुर्व्वन्ति णेर्विभा षेति णत्वं॥ १०४॥

भ० प्रहीत्यादि। ये उपस्थितं शत्रुं प्रहीणजीवितं त्यक्तप्राणं न कुर्य्युः ओहाक्त्यागे दामागैहागिति क्ती ओदित्वात् क्तस नः

नोचोऽन्तरदुर्गैरिति णत्वं ते ग्याव्यायान्यायप्रायाया अपि सदस्याः श्राशु प्रहापणं त्यागं कुर्व्वन्ति नोचोऽन्तरदुर्गैरित्यादिना ण्यन्तात् पक्षे णत्वं ॥ १०४ ॥

कः कृत्वा रावणामर्षप्रकोपणमवद्यधीः। शक्तोऽज गति शक्तोऽपि कर्त्तुमायुःप्रगोपणं ॥ १०५ ॥

कःकृत्वेत्यादि। अवद्यधीः योऽबुद्धिः रावणामर्षस्य प्रकोपण मभिवृद्धिं कृत्वा आयुःप्रगोपणं कर्त्तुं शक्तोऽपि कः शक्तः इजादे गुपधादिति णत्वं कुपगुपयोर्हलन्तयोरिगुपधत्वात् ॥ १०५ ॥ ज०म०

कइत्यादि। कोऽवद्यधीर्दुर्बुद्धिः शक्तोऽपि इन्द्रतुल्योऽपि रावण सम्बन्धिक्रोधस्य प्रकोपणमतिवृद्धिं कृत्वा आयुषः प्रगोपणं कर्त्तुं शक्तः समर्थो भवति नोचोऽन्तरदुर्गैरित्यादिना कुपगुपोरिजु कृत्वात् विभाषया णत्वं ॥ १०५ ॥ भ०

वन। तप्रेङ्खणः पापः फलानां परिणिंसकः। प्रणि ल्लिष्यति नो भूयः प्रणिन्धास्तान्मधून्ययं ॥ १०६ ॥

वनेत्यादि। प्रेङ्खति गच्छतीति प्रपूर्व्वादिङ्खेः कर्त्तरि ल्युट् वनान्तस्य वनसमीपस्य प्रेङ्खणः इजादेःसनुमइति णत्वं फलानां परिणिंसकः भक्षयिता णिसिचुम्बनइत्यस्य रूपं अस्मान् प्रणिन्द्य तिरस्कृत्य भूयः पुनरप्ययं मधूनि नोऽस्माकं प्रणिल्लिष्यति भोक्ष्यति णिसचुम्बनइत्यस्य रूपं वानिंसनिंचनिन्दामिति णत्वं ॥ १०६ ॥ ज०म०

भ० वनान्तेत्यादि। अयं पापोऽस्मान् प्रविश्य निरकृत्य भूयः पुन रपि मधूनि नः प्रचिचिष्यति न चुम्बिष्यति न भचयिष्यतीत्यर्थः कीदृशः वनान्तप्रेङ्खणः वनमध्यगः इत्थिगतौ मन्त्रादिलाद्नः मोचोऽन्तरदुर्गैरित्यादिना इजादीदित्वात् णत्वं फलानां परि चिंचकः चुम्बकः भचकइत्यर्थः प्रान्तेनोपोऽन्तरदुर्गैरित्यादिना निंसनिचनिन्दां विभाषया णत्वं ॥ १०६ ॥

हरेः प्रगमनं नास्ति न प्रभानं हिमद्रुहः। नातिप्रवे पनं वायोर्मया गोपायिते वने ॥ १०७ ॥

भ० हरेरित्यादि। मया गोपायिते रचिते वने हरेरिन्द्रस्यापि प्रगमनं सञ्चारो नास्ति हिमद्रुहः आदित्यस्य न प्रभानं न प्रक र्षेण दीप्तिः वायोर्नातिप्रवेपनं मन्दगमनं तदनेन भग्नमित्यर्थात् ह्रत्यचइतिप्राप्तस्य णत्वस्य नभाभूपूकमिगमीत्यादिना प्रतिषेधः ॥ १०७ ॥

भ० हरेरित्यादि। मया गोपायिते रचिते वने हरेरिन्द्रस्यापि चन्द्रस्य वा प्रगमनं सञ्चारो नास्ति हिमद्रुहः सूर्य्यस्य प्रभानं प्रकृष्टा दीप्तिर्नास्ति वायोरतिप्रवेपनं प्रचण्डगमनं नास्ति सर्व्वंच नोचोऽन्तरदुर्गैरित्यादौ ख्याभादिवर्ज्जनान्न णत्वं ॥ १०७ ॥

दुष्पानः पुनरेतेन कपिना भृङ्गसम्भृतः। प्रनष्टचिन येनाच्यः स्वादुः पुष्पासवो वने ॥ १०८ ॥

